Government Oriental Library Series.

BIBLIOTHECA SANSKRITA—No. 15.

# आपस्तम्बधर्मसूत्रम्

उज्ज्वलाख्यव्याख्यया हरदत्तमिश्रविरचितया सहितम्.

# ÁPASTAMBA-DHARMASÚTRA

WITH

HARADATTA'S UJJVALA'.

EDITED BY

A. MAHA'DEVA S'A'STRI, B. A.,
*Curator, Government Oriental Library, Mysore,*

AND

PANDITARATNAM K. RANGA'CHA'RYA,
*Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS

1898.

Price—Rs. 1¾

# PREFACE.

Dr. Bühler has brought out two successive critical editions of the Âpastamba-Dharmasútra published in the Bombay Sanskrit series. In neither of these two editions has he given the full text of the Ujjvalâ, an excellent commentary on the sútra by Haradatta. The comparatively high prices of these editions have placed the work beyond the reach of the native students who are interested in its study. A cheap and correct edition of the sútra with the full text of the commentary has, therefore, long been a desideratum among Indian Sanskrit scholars and students, and it is chiefly to meet this want that the present edition has been undertaken.

This edition of the text and the commentary has been prepared from the following manuscripts originally obtained from different parts of Southern India, which as the original home of the Âpastamba's school must naturally possess the most genuine version of the text and the commentary :—

(क) A Telugu manuscript belonging to Aśvattha-Narasimha S'ástri of Mysore. This essentially agrees with some of the manuscripts of Western India on which Dr. Bühler's first edition was based.

(ख) A Grantha palm-leaf manuscript obtained from Karur in the Coimbatore District.

(ग) A Grantha palm-leaf manuscript of the Sarasvatí-Bhaṇḍára of the Mysore Palace.

(घ) A Grantha palm-leaf manuscript belonging to Belakavádi Varadâchârya.

(ङ) A paper manuscript of the Government Oriental Library, Mysore, a transcript partly of a Grantha manuscript of the Library of the Sanskrit Pâṭhaśâlá at Melkoté in the District of Mysore.

(च) A palm-leaf manuscript lent by Pandit Puttúr S'ri-nivâsa-Rághavácharya.

(छ) A Nágarí manuscript obtained in Mysore.

(ज) A Grantha palm-leaf manuscript essentially agreeing with some of the manuscripts of the Western India.

(झ) A Grantha palm-leaf manuscript.

(ञ) An incomplete Telugu manuscript.

Eight more manuscripts of an indifferent kind have been consulted here and there.

In his able and exhaustive Introductions to the Âpastamba-Dharmasútra published in the Bombay Sanskrit series and to his translation of the sútra published in the "Sacred Books of the East" series, Dr. Bühler has adduced all the considerations which have a bearing on the date of Âpastamba and Haradatta and on the place which the Dharmasútra occupies in the Indian Literature. But as to Haradatta, the author of the Ujjvalâ, being identical with the author of the Padamañjarí, a commentary on the Káśikávṛitti, he has left it an open question. This doubt as to the identity will be set at rest by a comparison of the subjoined extract from the Padamañjarí with the commentary on the Dharmasútra I. 5. 17, the latter merely reiterating the unique view which the author of the Padamañjarí holds as to the elongation of the final vowel in the name of the person addressed and the addition of an अ to it in *pratyabhivádana* :

## पा. सू. प्रत्यभिवादेऽशूद्रे. (८–२–८३).

**काशिका—**

प्रत्यभिवादो नाम यदत्राभिवाद्यमानो गुरुराशिषं प्रयुङ्क्ते । तत्राशूद्रविषये यद्वाक्यं वर्तते तस्य टेः प्लुत उदात्तो भवति ।

अभिवादये देवदत्तोऽहं, भो आयुष्मानेधि देवदत्ता ३ । अशूद्र इति किम् । अभिवादये तुषजकोऽहम्, भो आयुष्मानेधि तुषजक ॥

पदमञ्जरी—

प्रत्यभिवादो नामेत्यादि ॥ गुरुरित्युपलक्षणम् । त्रिवर्षपूर्वश्श्रोत्रियोप्याभिवादनमर्हति । अभिवाद्यमान आशिषं वाच्यमानः गुरुराशिषं प्रयुङ्क्त इति यत् स प्रत्यभिवादः, न प्रत्युक्तिमात्रम्, तत्रैव लोके प्रसिद्धत्वात् । तद्यथा—अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिंविदुः । इति । तत्रेति । आशीर्वादविषये । कीदृशे? अशूद्रविषये । अशूद्रो विषयो यस्य स तथोक्तः । अभिवादने सति प्रत्यभिवाद इति । तदुदाहरति—अभिवादय इति । अभिवादये नमस्कारपूर्वकमाशिषं वादयामीत्यर्थः । एवमभिवादितो गुरुः प्रत्यभिवदते—आयुष्मानिति । आयुष्मत्त्वस्य विधेयत्वात्सम्बोधनविभक्त्यभावः । एधीत्यस्तेर्लोटि सिपो हिः, भवेत्यर्थः ।

आयुष्मान्भव सौम्येति वाच्यो विप्रोभिवादने ।

इति मानवे भवेत्यर्थग्रहणम् । तेन पर्यायैरपि प्रत्यभिवादो भवति ॥

ननु तत्र—

अकारश्चास्य नाम्नोन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥

इत्युक्तम्, स कस्मादिह न विधीयते? उच्यते—यदर्थोपादान उपयुज्यते तदेव व्याकरणे वक्तव्यम् । अकारस्तु केवलमदृष्टार्थः प्रयुज्यते । न त्वस्य कश्चिदर्थोऽस्ति ।

अन्ये तु मानवमप्यन्यथा व्याचक्षते—अस्याभिवादयितुर्नाम्नोन्ते अवसाने योऽकारस्स प्लुतो वाच्यः । अकार इत्यजुपलक्षणम् । पूर्वाक्षरश्च प्लुतो वाच्यः । हलन्तविषयमेतत् । अक्षर इत्यचमाह । हलन्तेष्वन्त्यात्पूर्वोच् प्लुतो वाच्य इति । उभाभ्यां मिलिताभ्यां टेः प्लुत इत्युक्तं भवति ॥

वयं तु ब्रूमः—पृथगेवाकारः प्रयोक्तव्य इति । ततः कुत्र अक्षरार्थस्तावदयम् ।

किञ्च—भरतशास्त्रे प्रसङ्गेन प्रत्यभिवादनप्रकरणे वर्ण्यमाने पृथगेवाकारप्रयोगो दर्शितः। तस्मादयमत्र प्रत्यभिवादनप्रयोगः—आयुष्मान् भव सौम्य देवदत्ता ३ अ, अग्निचो ३ त् अ इति। एजन्तेषु 'एचोऽप्रगृह्यस्य' इत्यस्मिन्विधौ सति अकारे परतः तयोः य्वौ अचि संहितायाम् इति यण्भवति—हरा ३ य, विष्णो-३ व इति॥

Mysore,
19—1—98.

A. M. S.

# धर्मसूत्रविषयसूचिनी.

## ब्रह्मचारिनियमाः (प्राधान्येन) १ पटले.



## गुरूपासनम् (प्राधान्येन) २ पटले.

## अध्ययनधर्माः देशकालादिकृताः ३ पटले.



## पञ्चमहायज्ञादिः ४ पटले.

## शुद्धिकरमाचमनादि, अभक्ष्याणि च ५ पटले.



## (प्राधान्येन) अभोज्यान्नाः ६ पटले.



## आपद्वृत्तिः (प्राधान्येन) ७ पटले.



## आत्मनिरूपणम् ८ पटले.

## प्रायश्चित्तम् ९–१० पटलयोः.



## स्नातकव्रतम् ११ पटले.

# द्वितीयः प्रश्नः.

## गृहस्थधर्माः केचित् (प्राधान्येन) १ पटले.



## वैश्वदेवादि २ पटले.



## अतिथिपूजनम् (प्राधान्येन) ३–४ पटलयोः.

## जीविका, विवाहभेदाश्च—५ पटले.



## दायभागः ६ पटले.



## श्राद्धम् ७-८ पटलयोः

## ऊर्ध्वरेतसां धर्माः ९ पटले.



## राजधर्माः १०–११ पटलयोः.

ओम्.

# आपस्तम्बधर्मसूत्रम्.

## हरदत्तमिश्रविरचितया उज्ज्वलाख्यया व्याख्यया समेतम्.

---o---

हरिः ओम्.

प्रणिपत्य महादेवं हरदत्तेन धीमता ।

धर्माख्यप्रश्नयोरेषा क्रियते वृत्तिरुज्ज्वला ॥

**अथातस्सामयाचारिकान्धर्मान्व्याख्यास्यामः ॥ १ ॥**

अथशब्द आनन्तर्ये । अतश्शब्दो हेतौ । उक्तानि श्रौतानि गार्ह्याणि च कर्माणि । तानि वक्ष्यमाणान्धर्मानपेक्षन्ते । कथं ? 'आचान्तेन कर्तव्यम्,' 'शुचिना कर्तव्यम्,' 'यज्ञोपवीतिना कर्तव्यम्,' इति वचनादाचमनशौचादीनपेक्षन्ते ।

'सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु ।'[1]

इति वचनात् सन्ध्यावन्दनमपि । एवं 'अशुचिकरनिर्वेषः' 'द्विजातिकर्मभ्यो हानिः पतनम्' इति वचनात् ब्रह्महत्यादिप्रायश्चित्तानि च । एवमन्येष्वपि यथासम्भवमपेक्षा द्रष्टव्या । अतस्तदनन्तरं सामयाचारिकान् धर्मान्व्याख्यास्यामः । पौरुषेयी व्यवस्था समयः । स च त्रिविधः, विधिर्नियमः

---

[1] दक्षस्मृतौ द्वितीयाध्याये.

प्रतिषेधश्चेति । तत्र प्रवृत्तिप्रयोजनो विधिः ‘सन्ध्योश्च बहिर्ग्रामादासनं वाग्यतश्च’[1] इत्यादि । निवृत्तिप्रयोजनावितरौ । ‘प्राङ्मुखोन्नानि भुञ्जीत’[2] इति नियमः । क्षुदुपघातार्था भोजने प्रवृत्तिः । शक्यं च यत्किञ्चिद्दिङ्मुखेनापि भुञ्जानेन क्षुदुपहन्तुम् । तत्र नियमः क्रियते, प्राङ्मुख एव भुञ्जीत न दक्षिणामुख इति । परिसङ्ख्या तु नियमस्यैव कियानपि भेदः । एवं द्रव्यार्जने रागात् प्रवृत्तं प्रति नियमः क्रियते, याजनाध्यापनप्रतिग्रहैरेव ब्राह्मणो धनमार्जयेत् न तु कृषिवाणिज्यादिनेति । ‘ब्राह्मणस्य गोरिति पदोपस्पर्शनं वर्जयेत्’[3] इति प्रतिषेधः । समयमूला आचारास्समयाचाराः, तेषु भवास्सामयाचारिकाः, एवम्भूतान् धर्मानिति । कर्मजन्योभ्युदयनिश्श्रेयसहेतुरपूर्वाख्य आत्मगुणो धर्मः, तद्धेतुभूतकर्मव्याख्यानमेव धर्मव्याख्यानम् । तत्र विधिषु तावद्विधिविषयानुष्ठानाद्धर्म इति नास्ति विप्रतिपत्तिः । नियमेष्वपि नियमानुष्ठानाद्धर्मः । निषेधेष्वपि नञर्थानुष्ठानात् धर्मः इति केचित् । अत एव धर्मानित्यविशेषेणाह । अन्ये तु–विधिष्वेव धर्मः । इतरयोस्तु विपरीतानुष्ठानादधर्मः केवलम्, न तु विषयानुष्ठानात्कश्चिद्धर्मः । न ह्यप्रतिगृह्णन्नपिबन्वा सुरां धार्मिक इति लोके प्रसिद्धः । सूत्रे तु धर्मग्रहणमधर्मस्याप्युपलक्षणार्थमिति स्थितिः ॥

किं नु भोः ! समयोपि प्रमाणं यदि स्यात् इदमपि प्रमाणं भवितुमर्हति–चैत्यं वन्देत स्वर्गकामः, प्रगे भुञ्जीत, केशान्लुञ्छेत्, तिष्ठन्भुञ्जीत, नग्नस्स्नायादिति । तत्राह–

---

[1]आप. ध. १-३०-८. [2]आप. ध. १-३१-१. [3]आप. ध. १-३१-६.

## धर्मज्ञसमयः प्रमाणम् ॥ २ ॥

न ब्रूमस्समयमात्रं प्रमाणमिति । किं तर्हि ? धर्मज्ञा ये मन्वादयस्तेषां समयः प्रमाणं धर्माधर्मयोः ॥

कथं पुनरिदमवगम्यते मन्वादयो धर्मज्ञा न बुद्धादय इति ? यद्युच्येत बुद्धादीनामतीन्द्रिये धर्मे ज्ञानं न सम्भवतीति तन्मन्वादिष्वपि समानम् । अथ तेषां धर्मजादतिशयादतीन्द्रियेपि ज्ञानं सम्भवतीति, तद्बुद्धादिष्वपि समानम् । यथाह—

सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा ।
तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयोः ॥ इति ।

वक्तव्यो वा विशेषः । तमाह—

## वेदाश्च ॥ ३ ॥

चोवधारणे । वेदा एव मूलप्रमाणं धर्माधर्मयोः । न च नित्येषु निर्दोषेषु वेदेषूक्तोपालम्भसम्भवः । स्वतः प्रमाणस्य हि शब्दस्य न वक्तृदोषनिबन्धनमप्रामाण्यम् । तदिहास्मदादीनां धर्मज्ञसमयः प्रमाणं, धर्मज्ञानां तु वेदाः प्रमाणम् । मनुरप्याह—

वेदोखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च[1] ॥ इति ।

गौतमोपि — 'वेदो धर्ममूलं तद्विदां च स्मृतिशीले'[2] इति । यद्यप्यप्रत्यक्षो[3] वेदो धर्ममूलभूतोस्मदादिभिर्नोपलभ्यते, तथापि मन्वादय उपलब्धवन्त इत्यनुमीयन्ते । वक्ष्यति च 'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते'[4] इति ॥

---

[1]मनुस्मृ. २-६. [2]गौ. ध. १-१,२. [3]घ–पि प्रत्यक्षो. [4]आप. ध. १-१२-१०

## चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः ॥ ४ ॥

ब्राह्मणाद्याश्चत्वारो वर्णसंज्ञिकाः । ते च सामयाचारिकैर्धर्मैरधिक्रियन्ते। चतुर्णामेवोपदेशेपि पुनश्चतुर्ग्रहणं यथाकथञ्चिच्चतुर्ष्वन्तर्भूतानामपि ग्रहणार्थम् । ततश्च ब्राह्मणः क्षत्रियो वैश्य इति बोधायनादिभिरुक्तानामनुलोमजानामप्यत्र ग्रहणम् । तथा च गौतमः प्रतिलोमानामेव धर्मे अनधिकारमाह —' प्रतिलोमास्तु धर्महीनाः '[1] इति ॥

## तेषां पूर्वःपूर्वो जन्मतश्श्रेयान् ॥ ५ ॥

जन्मत इति वचनात् सद्वृत्तादपि शूद्रात् वैश्यब्रुवोपि श्रेयान्। एवं वैश्यात् क्षत्रियः, क्षत्रियाद्ब्राह्मणः ॥

## अशूद्राणामदुष्टकर्मणामुपायनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणि ॥ ६ ॥

शूद्रवर्जितानां त्रयाणां वर्णानां अदुष्टकर्मणामुपायनादयो धर्माः। उपायनमुपनयनम्। नात्र त्रैवर्णिकानामुपनयनादीनि विधीयन्ते, प्राप्तत्वात्। नापि शूद्राणां प्रतिषिध्यते, प्राप्त्यभावात्। तथाहि उपनयनं तावत् गृह्ये ' गर्भाष्टमेषु ब्राह्मणम् '[2] इत्यादिना त्रैवर्णिकानामेव विहितम्, इहापि तथैव विधास्यते। अध्ययनमपि ' उपेतस्याचार्यकुले ब्रह्मचारिवासः '[3] इत्यारभ्य विधानादनुपनीतस्य शूद्रस्याप्राप्तमेव। किञ्च —' श्मशानवच्छूद्रपतितौ '[4]

---

[1] गौ. ध.–४-२५. [2] आप. गृ. ८-२.

[3] आप. ध.–१-२-११. [4] आप. ध.–१-९-९.

इत्यध्ययनप्रतिषेधप्रकरणे वक्ष्यते। ततश्च यस्य समीपेपि नाध्येयं स कथं स्वयमध्येतुमर्हति। अग्न्याधेयमपि 'वसन्ते ब्राह्मणः'[1] इत्यादिना त्रैवर्णिकानामेव विहितम्। फलवन्ति चाग्निहोत्रादीनि कर्माणि 'स त्रयाणां वर्णानाम्'[2] इत्युक्तत्वात् त्रैवर्णिकानामेव नियतानि, विद्याग्न्यभावाच्च शूद्राणामप्रसक्तानि। उक्तो विद्याग्न्यभावः। तस्माद्दुष्टकर्मप्रतिषेधार्थं सूत्रं, यथा शास्त्रान्तरे, 'द्विजातिकर्मभ्यो हानिः पतनम्'[3] इति। अप्रतिषेधे तु दुष्टकर्मणामप्यधिकारो भवत्येव; फलवन्ति च कर्माणीत्यभिधानात्, क्रियत इति कर्मेति निर्वचनात्। 'प्रागुपनयनात्कामचारवादभक्ष'[4] इति गौतमस्मरणं ब्रह्महत्यादिमहापातकव्यतिरिक्तविषयमित्यनुपेतस्यापि दुष्टकर्मत्वसम्भवाददुष्टकर्मणामित्युक्तम्। शूद्रप्रतिषेधस्तु प्राप्तानुवादः॥

यथा ब्राह्मणादीनामुपनयनादयो धर्माः प्रधानभूताः तादृशं शूद्रस्य धर्ममाह—

## शुश्रूषा शूद्रस्येतरेषां वर्णानाम् ॥ ७ ॥

इतरेषां ब्राह्मणादीनां वर्णानां या शुश्रूषा सा शूद्रस्य परमो धर्मः॥

तत्र विशेषमाह—

## पूर्वस्मिन्पूर्वस्मिन्वर्णे निश्श्रेयसं भूयः ॥ ८ ॥

सर्वप्रकारं कृताया वैश्यशुश्रूषाया मात्रयापि कृता क्षत्रियशुश्रूषा बहुतरं फलं साधयति। एवं क्षत्रियशुश्रूषाया अपि ब्राह्मणशुश्रूषा॥

---

[1] आप. श्रौ. ५-३-१८.  [2] आप. प. १-२.  [3] गौ. ध. २१-४.  [4] गौ. ध. २-१.

'उपायनं वेदाध्ययनम्' इत्यादि यदुक्तं अस्मिन्क्रमे उपनयने विशेषमाह—

**उपनयनं विद्यार्थस्य श्रुतितस्संस्कारः ॥९॥**

विद्यया अर्थः प्रयोजनं यस्य स विद्यार्थः। तस्यायं श्रुतिविहितस्संस्कारः। उपनयनं नाम विद्यार्थस्येति वचनान्मूकादेर्न भवति। तथा च शङ्खलिखितौ 'नोन्मत्तमूकान्संस्कुर्यात्' इति। लिङ्गस्य विवक्षितत्वात् स्त्रिया अपि न भवति, यद्यपि तस्याः 'अग्ने गृहपते'[1] इत्यादिकया विद्यया अर्थः। श्रुतित इति वचनं तदतिक्रमे श्रौतातिक्रमप्रायश्चित्तप्राप्त्यर्थम् ॥

अनेकवेदाध्यायिनां वेदव्रतवदुपनयनमपि प्रतिवेदं भेदेन कर्तव्यमिति प्राप्ते उच्यते—

**सर्वेभ्यो वै वेदेभ्यस्सावित्र्यनूच्यत इति हि ब्राह्मणम् ॥ १० ॥**

त्रिभ्य एव तु वेदेभ्यः पादम्पादमदूदुहत्।
तदित्यृचोस्यास्सावित्र्याः परमेष्ठी प्रजापतिः[2] ॥

इति मनुवचनम्। ततश्च उपनयने यत्सावित्र्या अनुवचनं तन्मुखेन सर्वे वेदा अनूक्ता भवन्तीत्यगृह्यमाणविशेषत्वात् एकमेवोपनयनं सर्वार्थमिति। अस्मिन्नर्थे प्रमाणमपि भवति, ब्राह्मणमिति हि वाचा पठितम्। अथर्वणस्य तु वेदस्य, पृथगुपनयनं

---

[1] तै. सं. १-५-६. 16.

[2] मनुस्मृ. २-७७.

कर्तव्यम् । तथा च तत्रैव श्रुतिः — 'नान्यत्र संस्कृतो भृग्वङ्गिरसोधीयीत ' इति ॥

विद्वानेवोपनेताभिगम्य इति विधातुमविदुषो निन्दामाह—

**तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति हि ब्राह्मणम् ॥ ११ ॥**

यथा कश्चित्तमसस्सकाशात्तम एव प्रविष्टो न किञ्चिज्जानाति एवमेवैषः यं माणवकमविद्वानुपनयते । तथा यश्चाविद्वान् । उपनयते इत्यपेक्षते । यश्च स्वयमविद्वान्सन्नुपनयने सोपि तमस एव तमः प्रविशति । अस्मिन्नर्थे ब्राह्मणं भवति ॥

कीदृशस्तर्ह्युपनेताभिगम्यः ? तत्राह—

**तस्मिन्नभिजनविद्यासमुदेतꣳ समाहितꣳ सꣳस्कर्तारमीप्सेत् ॥ १२ ॥**

अविच्छिन्नवेदवेदिसम्बन्धे जन्माभिजनः । षड्भिरङ्गैस्सह यथावदर्थज्ञानपर्यन्तमधीतो वेदो विद्या । सर्वासम्भवे वेद एव वा । तस्मिन्नुपनयने कर्तव्ये ताभ्यामभिजनविद्याभ्यां समुदेतं सम्पन्नं समाहितं विहितप्रतिषिद्धेष्ववहितमनसं संस्कर्तारमाचार्यमीप्सेत् । इच्छया करणं लक्ष्यते, आप्नुयात् अभिगच्छेदिति ॥

**तस्मिꣳश्चैव विद्याकर्मान्तमविप्रतिपन्ने धर्मेभ्यः ॥ १३ ॥**

तस्मिन्नेवोपनेतरि विद्याकर्म विद्याग्रहणं कर्तव्यं आन्तं आ

समाप्तेः, अविप्रतिपन्ने धर्मेभ्यः यद्यसावाचार्यो धर्मेभ्यः प्रच्युतो न भवति। प्रच्युते तु तस्मिन्नसम्पर्कार्हे अन्यतोपि विद्याकर्म भवत्येव ॥*

आचार्यशब्दं निराह—

**यस्माद्धर्मानाचिनोति स आचार्यः ॥ १४ ॥**

यस्मात्पुरुषादयं माणवको धर्मानाचिनोति आत्मनः प्रचिनोति शिक्षते स आचार्यः। 'अप्यक्षरसाम्यान्निर्ब्रूयात्'[1] इति चकारमात्रेणेदं निर्वचनम्। अनेन प्रकारेण माणवकमाचार्यः शौचाचारान् शिक्षयेदित्युक्तं भवति ॥

**तस्मै न द्रुह्येत्कदाचन ॥ १५ ॥**

एवम्भूतायाचार्याय कदाचन कदाचिदपि न द्रुह्येत्, तद्विषयमपकारं न कुर्यात् ॥

कस्मादित्यत आह—

**स हि विद्यातस्तं जनयति ॥ १६ ॥**

स हि आचार्यस्तं माणवकं विद्यातो जनयति, यथा पिता मातृतः।

'तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते[2]।'

इति शास्त्रान्तरम् ॥

---

*'येषां चाचार्यकरणविधिप्रयुक्तमध्ययनं तेषामेतन्नोपपद्यते। कथम्? उपनीयाध्यापनेनाचार्यकं भावयेदिति। सकृदुपनीतस्य माणवकस्य न पुनरुपनयनसंस्कारस्सम्भवति, तत्कथमन्योध्यापयेदेनम्। एतेन मध्ये आचार्यमरणे माणवकस्य तदनन्तरमध्ययनं नाचार्यान्तरात्सम्भवतीति द्रष्टव्यम्।'

इत्ययं ग्रन्थः केषुचित्पुस्तकेषूपलभ्यमानः प्रक्षिप्त इव भाति ॥

[1] निरुक्ते. २-१-१. [2] म. स्मृ. २-१७०.

**तच्छ्रेष्ठं जन्म ॥ १७ ॥**

तद्विद्यातो जन्म श्रेष्ठं प्रशस्ततमम्, अभ्युदयनिश्श्रेयसहेतुभूतत्वात् ॥

मातापितृभ्यामाचार्यः श्रेष्ठ इत्याह—

**शरीरमेव मातापितरौ जनयतः ॥ १८ ॥**

मातापितरौ शरीरमेव काष्ठकुड्यादिसमं जनयतः। आचार्यस्तु सर्वपुरुषार्थक्षमं रूपं जनयतीति। 'आचार्यः श्रेष्ठो गुरूणाम्'[1] इति गौतमः ॥

**वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यꣳ शरदि वैश्यं गर्भाष्टमेषु ब्राह्मणं गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम् ॥१९॥**

'वसन्ते ब्राह्मणम्' इत्यादि गृह्ये गतम्'[2] ॥*

**अथ काम्यानि ॥ २० ॥**

कामनिमित्तान्युपनयनानि वक्ष्यन्ते—

**सप्तमे ब्रह्मवर्चसकामम् ॥ २१ ॥**

**अष्टम आयुष्कामम् ॥ २२ ॥**

**नवमे तेजस्कामम् ॥ २३ ॥**

**दशमेन्नाद्यकामम् ॥ २४ ॥**

---

[1]गौ. ध. २-५०. [2]आप. गृ. १०-४.

*'गृह्य एवोक्तानां पुनर्वचनमस्मदीयानां शास्त्रान्तरोक्तकालविधिर्माभूदिति' इत्यधिकः पाठः क. पुस्तके दृश्यते।

एकादश इन्द्रियकामम् ॥ २५ ॥

द्वादशे पशुकामम् ॥ २६ ॥

एतानि षट्सूत्राणि स्पष्टार्थानि । सर्वत्रोपनयीतेत्यपेक्ष्यते ॥

'आचार्याधीनस्स्यात्' इत्यादीनि यानि ब्रह्मचारिव्रतानि वक्ष्यन्ते तेष्वसमर्थानां कुमाराणां वर्णक्रमेणानुकल्पानाह—

आ षोडशाद्ब्राह्मणस्यानात्यय आ द्वाविंशात्क्षत्रियस्या चतुर्विंशाद्वैश्यस्य यथा व्रतेषु समर्थस्स्याद्यानि वक्ष्यामः ॥ २७ ॥

आकारोभिविधौ । अत्ययोतिक्रमः, स एवात्ययः, याद‍ृच्छिको दीर्घः । आङो वा प्रश्लेषः । प्रकरणादुपनयनकालस्येति गम्यते । यथा व्रतेषु समर्थः स्यात्तथा एतावान्कालः प्रतीक्ष्यः । पूर्वमेव तु सामर्थ्ये सति अष्टवर्षाद्यतिक्रमे वक्ष्यमाणं प्रायश्चित्तमेव भवति । एवं षोडशादिभ्य ऊर्ध्वं कियन्तञ्चित् कालमसमर्थानां पश्चात्सामर्थ्ये सति प्रायश्चित्तं भवत्येव ॥

तदिदानीं प्रायश्चित्तमाह—

अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत् ॥ २८ ॥

यस्य यः सावित्र्याः काल उक्तः तदतिक्रमे त्रैविद्यकं, त्र्यवयवा विद्या त्रिविद्या, तामधीयते त्रैविद्याः, तेषामिदं त्रैविद्यकम् । 'चरणाद्धर्माम्नाययोः' इति वुञ् । एवम्भूतं ब्रह्मचर्यमग्निपरिचर्या-

मध्ययनं गुरुशुश्रूषामिति परिहाप्य सकलं ब्रह्मचारिधर्मं चरेत्। कियन्तं कालं ? ऋतुम्। 'कालाध्वनोः' इति द्वितीया। ऋतुमिति वचनाद्व्रत्वारम्भे प्रायश्चित्तारम्भमिच्छन्ति ॥

**अथोपनयनम् ॥ २९ ॥**

एवं चरितव्रत उपनेतव्यः ॥

**ततस्संवत्सरमुदकोपस्पर्शनम् ॥ ३० ॥**

तत उपनयनादारभ्य संवत्सरमुदकोपस्पर्शनं स्नानं कर्तव्यम्। शक्तस्य त्रिषवणं स्नानम्, अन्यस्य यथाशक्ति ॥

**अथाध्याप्यः ॥ ३१ ॥**

एवं चरितव्रतः पश्चादध्याप्यः ॥

**अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसꣳस्तुताः ॥ ३२ ॥**

यस्य माणवकस्य पिता पितामहश्चानुपेतौ स्यातां स्वयं च, ते तथाविधास्समाणवकास्ते ब्रह्महसंस्तुताः ब्रह्महण इत्येवं कीर्तिता ब्रह्मवादिभिः। अतस्मिंस्तच्छब्दस्तद्धर्मप्राप्त्यर्थः। एवं च 'श्मशानवच्छूद्रपतितौ'[1] इत्यध्ययनप्रतिषेधप्रकरणे वक्ष्यते। ततश्च यथा ब्रह्मघ्नसमीपे नाध्येतव्यं एवमेषामपीति ॥

**तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् ॥ ३३ ॥**

---

[1] आप. ध. १-९-९.

**एकादश इन्द्रियकामम् ॥ २५ ॥**

**द्वादशे पशुकामम् ॥ २६ ॥**

एतानि षट्सूत्राणि स्पष्टार्थानि । सर्वत्रोपनयीतेत्यपेक्ष्यते ॥

'आचार्याधीनस्स्यात्' इत्यादीनि यानि ब्रह्मचारिव्रतानि वक्ष्यन्ते तेष्वसमर्थानां कुमाराणां वर्णक्रमेणानुकल्पानाह—

**आ षोडशाद्ब्राह्मणस्यानात्यय आ द्वाविꣳशात्क्षत्रियस्या चतुर्विꣳशाद्वैश्यस्य यथा व्रतेषु समर्थस्स्याद्यानि वक्ष्यामः ॥ २७ ॥**

आकारोभिविधौ । अत्ययोतिक्रमः, स एवात्ययः, यादृच्छिको दीर्घः । आङो वा प्रश्लेषः । प्रकरणादुपनयनकालस्येति गम्यते । यथा व्रतेषु समर्थः स्यात्तथा एतावान्कालः प्रतीक्ष्यः । पूर्वमेव तु सामर्थ्ये सति अष्टवर्षाद्यतिक्रमे वक्ष्यमाणं प्रायश्चित्तमेव भवति । एवं षोडशादिभ्य ऊर्ध्वं कियन्तञ्चित् कालमसमर्थानां पश्चात्सामर्थ्ये सति प्रायश्चित्तं भवत्येव ॥

तदिदानीं प्रायश्चित्तमाह—

**अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत् ॥ २८ ॥**

यस्य यः सावित्र्याः काल उक्तः तदतिक्रमे त्रैविद्यकं, त्र्यवयवा विद्या त्रिविद्या, तामधीयते त्रैविद्याः, तेषामिदं त्रैविद्यकम् । 'चरणाद्धर्माम्नाययोः' इति वुञ् । एवम्भूतं ब्रह्मचर्यमग्निपरिचर्या-

मध्ययनं गुरुशुश्रूषामिति परिहाप्य सकलं ब्रह्मचारिधर्मं चरेत्। कियन्तं कालं? ऋतुम्। 'कालाध्वनोः' इति द्वितीया। ऋतुमिति वचनाद्व्रतारम्भे प्रायश्चित्तारम्भमिच्छन्ति ॥

अथोपनयनम् ॥ २९ ॥

एवं चरितव्रत उपनेतव्यः ॥

ततस्संवत्सरमुदकोपस्पर्शनम् ॥ ३० ॥

तत उपनयनादारभ्य संवत्सरमुदकोपस्पर्शनं स्नानं कर्तव्यम्। शक्तस्य त्रिषवणं स्नानम्, अन्यस्य यथाशक्ति ॥

अथाध्याप्यः ॥ ३१ ॥

एवं चरितव्रतः पश्चादध्याप्यः ॥

अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसꣳस्तुताः ॥ ३२ ॥

यस्य माणवकस्य पिता पितामहश्चानुपेतौ स्यातां स्वयं च, ते तथाविधास्समाणवकास्ते ब्रह्महसंस्तुताः ब्रह्महण इत्येवं कीर्तिता ब्रह्मवादिभिः। अतस्मिंस्तच्छब्दस्तद्धर्मप्राप्त्यर्थः। एवं च 'श्मशानवच्छूद्रपतितौ'[1] इत्यध्ययनप्रतिषेधप्रकरणे वक्ष्यते। ततश्च यथा ब्रह्मघ्नसमीपे नाध्येतव्यं एवमेषामपीति ॥

तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् ॥ ३३ ॥

---

[1]आप. ध. १–९–९.

तेषामेतेषामभ्यागमनमाभिमुख्येन गमनं मातापितृपुत्रदारशरीररक्षणार्थमपि वर्जयेत्, यद्यपि सर्वतो रक्षा प्रतिग्राह्येति वक्ष्यते। भोजनमुहूर्तमपि वर्जयेत्, 'अपि दुष्कृतकारिणः' इति सत्यपि वचने। विवाहं च वर्जयेत्, यद्यपि 'स्त्रीरत्नं दुष्कुलादपि'[1] इति मानवस्मरणम्॥

**तेषामिच्छतां प्रायश्चित्तम्॥ ३४॥**

इच्छतामिति वचनात् बलात्कारेण प्रायश्चित्तं न कारयितव्यम्॥

**यथा प्रथमेतिक्रम ऋतुरेव संवत्सरः॥ ३५॥**

यथा प्रथमेतिक्रमे ब्रह्मचर्यस्य ऋतुः कालः, एवमस्मिन्नतिक्रमे संवत्सरः कालः॥

**अथोपनयनं तत उदकोपस्पर्शनम्॥३६॥**

गते॥

इति प्रथमः खण्डः.

---

**प्रतिपूरुषं सङ्ख्याय संवत्सरान्यावन्तोनुपेतास्स्युः॥१॥**

यदि पितैवानुपेतः ततस्संवत्सरमेकम्। अथ पितामहोपि ततो द्वौ। अथ स्वयमपि यथाकालमनुपनीतस्ततस्संवत्सरानिति॥

अथोदकस्पर्शनमन्त्राः—

---

[1]मनु. स्मृ. २-२३८.

**सप्तभिः पावमानीभिर्यदन्ति यच्च दूरक इत्येताभिर्यजुःपवित्रेण सामपवित्रेणाङ्गिरसेनेति ॥२॥**

पवमानस्सोमो देवता यासां ताः पावमान्यः । 'यदन्ति यच्च दूरके भयं विन्दति मामिह'[1] इत्येताभिः ऋग्भिः । यजुःपवित्रेण 'आपो अस्मान्मातरश्शुन्धन्तु'[2] इत्यनेन । सामपवित्रेण 'कया नश्चित्र आभुवत्'[3] इति त्यृचेन गीतेन वा वामदेव्येन साम्ना । आङ्गिरसेन 'हꣳसश्शुचिषत्'[4] इत्यनेन । एतैरञ्जलिना शिरस्यपो निषिञ्चेत् ॥

**अपि वा व्याहृतीभिरेव ॥३॥**

पूर्वैस्सह व्याहृतीनां विकल्पः ॥

**अथाध्याप्यः ॥ ४ ॥**

गतम् ॥

'अथ यस्य पिता पितामहः' इत्युपक्रमे यस्येत्येकवचनम्, अन्तेपि 'अथाध्याप्यः' इति, मध्ये तु 'ते ब्रह्महसꣳस्तुतास्तेषामभ्यागमनम्' 'तेषामिच्छतां प्रायश्चित्तम्' इति बहुवचनम् । तत्रोपक्रमोपसंहारयोरनुरोधेन माणवकस्यैव प्रायश्चित्तमुपनयनमध्यापनं च । बहुवचनं तु तथाविधमाणवकबहुत्वापेक्षयेत्यवोचाम ॥

---

[1] ऋ. सं. ९-६७-२१.
[2] तै. सं. १-२-१.
[3] ऋ. सं. ४-३१-१.
[4] तै. सं. १-८-१५

अथ यस्य प्रपितामहादि नानुस्मर्यत उपनयनं ते श्मशानसꣳस्तुताः ॥ ५ ॥

प्रपितामहादि प्रपितामहादारभ्य, प्रपितामहः पितामहः पिता स्वयञ्च यथाकालमतीते तथाविधमाणवकाः श्मशानसंस्तुताः। तेन 'श्मशाने सर्वतश्शम्याप्रासात्' * इत्यध्ययननिषेध एषामपि सन्निधौ भवति ॥

तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत्तेषामिच्छतां प्रायश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं तत उदकोपस्पर्शनं पावमान्यादिभिः ॥ ६ ॥

गतम्। पावमान्यादिभिरित्यनेनैव 'प्रतिपूरूषं सङ्ख्याय संवत्सरान्' इत्येतदपि द्रष्टव्यम् ॥

अथ गृहमेधोपदेशनम् ॥ ७ ॥

गृहमेधो गृह्यशास्त्रं गृहस्थधर्मो वा ॥

नाध्यापनम् ॥ ८ ॥

नाध्यापनं कृत्स्नवेदस्य; किन्तु गृह्यमन्त्राणामेव ॥

ततो यो निवर्तते तस्य सꣳस्कारो यथा प्रथमेऽतिक्रमे ॥९॥

---

* आप. ध. ३-९-६.

तत एवं कृतप्रायश्चित्ताद्गृहस्थीभूताद्यो निवर्तते उत्पद्यते तस्योपनयनसंस्कारः कर्तव्यः । कथम्? यथा प्रथमेऽतिक्रमे, ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरित्वेत्यर्थः ॥

## तत ऊर्ध्वं प्रकृतिवत् ॥ १० ॥

ततस्तु यो निवर्तते तस्य प्रकृतिवत् यथाप्राप्तमुपनयनं कर्तव्यमिति । यस्य तु प्रपितामहस्य पितुरारभ्य नानुस्मर्यते उपनयनं तस्य प्रायश्चित्तं नोक्तं; धर्मज्ञैस्तूहितव्यम् । एवं ततः पूर्वेष्वपि निरूपितमुपनयनम् ॥

अथाध्ययनविधिः—

## उपेतस्याचार्यकुले ब्रह्मचारिवासः ॥ ११ ॥

एवं यथाविध्युपेतस्य ब्रह्मचारिणस्सत आचार्यकुले ब्रह्मचारिवासो भवति । ब्रह्म वेदस्तदर्थं व्रतं चरतीति ब्रह्मचारी । अध्ययनाङ्गानि व्रतानि चरता आचार्यकुले वस्तव्यमित्युक्तं भवति ॥

तत्र कालः—

## अष्टाचत्वारिꣳशद्वर्षाणि ॥ १२ ॥

चतुर्णां वेदानामध्ययनकाल एषोऽष्टाचत्वारिंशद्वर्षाणि, प्रतिवेदं द्वादश ॥

## पादूनम् ॥ १३ ॥

स एष कालः पादूनं वा प्रत्येतव्यः । पादेन ऊनं पादूनम् । पररूपं कर्कन्धुवत् । षट्त्रिंशद्वर्षाणि, प्रतिवेदं नव ॥

तेषामेतेषामभ्यागमनमाभिमुख्येन गमनं मातापितृपुत्रदारशरीररक्षणार्थमपि वर्जयेत्, यद्यपि सर्वतो रक्षा प्रतिग्राह्येति वक्ष्यते । भोजनमुहूर्तमपि वर्जयेत्, 'अपि दुष्कृतकारिणः' इति सत्यपि वचने । विवाहं च वर्जयेत्, यद्यपि 'स्त्रीरत्नं दुष्कुलादपि'[1] इति मानवस्मरणम् ॥

**तेषामिच्छतां प्रायश्चित्तम् ॥ ३४ ॥**

इच्छतामिति वचनात् बलात्कारेण प्रायश्चित्तं न कारयितव्यम् ॥

**यथा प्रथमेतिक्रम ऋतुरेवꣳ संवत्सरः ॥ ३५ ॥**

यथा प्रथमेतिक्रमे ब्रह्मचर्यस्य ऋतुः कालः, एवमस्मिन्नतिक्रमे संवत्सरः कालः ॥

**अथोपनयनं तत उदकोपस्पर्शनम् ॥३६॥**

गते ॥

इति प्रथमः खण्डः.

---

**प्रतिपूरुषꣳ सङ्ख्याय संवत्सरान्यावन्तोनुपेतास्स्युः ॥१॥**

यदि पितैवानुपेतः ततस्संवत्सरमेकम् । अथ पितामहोपि ततो द्वौ । अथ स्वयमपि यथाकालमनुपनीतस्ततस्संवत्सरानिति॥

अथोदकस्पर्शनमन्त्राः —

---

[1] मनु. स्मृ. २–२३८.

सप्तभिः पावमानीभिर्यदन्ति यच्च दूरक इत्ये-
ताभिर्यजुःपवित्रेण सामपवित्रेणाङ्गिरसेने-
ति ॥२॥

पवमानस्सोमो देवता यासां ताः पावमान्यः । 'यदन्ति यच्च दूरके भयं विन्दति मामिह'[1] इत्येताभिः ऋग्भिः । यजुःपवित्रेण 'आपो अस्मान्मातरश्शुन्धन्तु'[2] इत्यनेन । सामपवित्रेण 'कया नश्चित्र आभुवत्'[3] इति त्र्यृचेन गीतेन वा वामदेव्येन साम्ना । आङ्गिरसेन 'हꣳसश्शुचिषत्'[4] इत्यनेन । एतैरञ्जलिना शिरस्यपो निषिञ्चेत् ॥

अपि वा व्याहृतीभिरेव ॥३॥

पूर्वैस्सह व्याहृतीनां विकल्पः ॥

अथाध्याप्यः ॥ ४ ॥

गतम् ॥

'अथ यस्य पिता पितामहः' इत्युपक्रमे यस्येत्येकवचनम्, अन्तेपि 'अथाध्याप्यः' इति, मध्ये तु 'ते ब्रह्महसꣳस्तुतास्तेषामभ्यागमनम्' 'तेषामिच्छतां प्रायश्चित्तम्' इति बहुवचनम् । तत्रोपक्रमोपसंहारयोरनुरोधेन माणवकस्यैव प्रायश्चित्तमुपनयनमध्यापनं च । बहुवचनं तु तथाविधमाणवकबहुत्वापेक्षयेत्यवोचाम ॥

---

[1] ऋ. सं. ९-६७-२१.  [2] तै. सं. १-२-१.
[3] ऋ. सं. ४-३१-१.  [4] तै. सं. १-८-१५

**अथ यस्य प्रपितामहादि नानुस्मर्यत उपनयनं ते श्मशानसꣳस्तुताः ॥ ५ ॥**

प्रपितामहादि प्रपितामहादारभ्य, प्रपितामहः पितामहः पिता स्वयञ्च यथाकालमतीते तथाविधमाणवकाः श्मशानसंस्तुताः। तेन 'श्मशाने सर्वतश्शम्याप्रासात्' * इत्यध्ययननिषेध एषामपि सन्निधौ भवति ॥

**तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत्तेषामिच्छतां प्रायश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं तत उदकोपस्पर्शनं पावमान्यादिभिः ॥ ६ ॥**

गतम्। पावमान्यादिभिरित्यनेनैव 'प्रतिपूरूषं सङ्ख्याय संवत्सरान्' इत्येतदपि द्रष्टव्यम् ॥

**अथ गृहमेधोपदेशनम् ॥ ७ ॥**

गृहमेधो गृह्यशास्त्रं गृहस्थधर्मो वा ॥

**नाध्यापनम् ॥ ८ ॥**

नाध्यापनं कृत्स्नवेदस्य; किन्तु गृह्यमन्त्राणामेव ॥

**ततो यो निवर्तते तस्य सꣳस्कारो यथा प्रथमेतिक्रमे ॥९॥**

---

* आप. ध. ३-९-६.

तत एवं कृतप्रायश्चित्ताद्गृहस्थीभूताद्यो निवर्तते उत्पद्यते तस्योपनयनसंस्कारः कर्तव्यः । कथम्? यथा प्रथमेतिक्रमे, ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरित्वेत्यर्थः ॥

## तत ऊर्ध्वं प्रकृतिवत् ॥ १० ॥

ततस्तु यो निवर्तते तस्य प्रकृतिवत् यथाप्राप्तमुपनयनं कर्तव्यमिति । यस्य तु प्रपितामहस्य पितुरारभ्य नानुस्मर्यत उपनयनं तस्य प्रायश्चित्तं नोक्तं; धर्मज्ञैस्तूहितव्यम् । एवं ततः पूर्वेष्वपि निरूपितमुपनयनम् ॥

अथाध्ययनविधिः—

## उपेतस्याचार्यकुले ब्रह्मचारिवासः ॥ ११ ॥

एवं यथाविध्युपेतस्य ब्रह्मचारिणस्तत आचार्यकुले ब्रह्मचारिवासो भवति । ब्रह्म वेदस्तदर्थं व्रतं चरतीति ब्रह्मचारी । अध्ययनाङ्गानि व्रतानि चरता आचार्यकुले वस्तव्यमित्युक्तं भवति ॥

तत्र कालः—

## अष्टाचत्वारिꣳशद्वर्षाणि ॥ १२ ॥

चतुर्णां वेदानामध्ययनकाल एषोऽष्टाचत्वारिंशद्वर्षाणि, प्रतिवेदं द्वादश ॥

## पादूनम् ॥ १३ ॥

स एष कालः पादूनं वा प्रत्येतव्यः । पादेन ऊनं पादूनम् । पररूपं कतन्तवत् । षट्त्रिंशद्वर्षाणि, प्रतिवेदं नव ॥

अधासनशायी ॥ २१ ॥

शयनं शायः । 'कृत्यल्युटो बहुलम्' इति बहुलवचनाद्घञ् । अध आसनशायौ यस्य स अधासनशायी । गुरुसन्निधावध आसीत, अधश्शयीतेत्युक्तं भवति । अधश्शब्दस्य सवर्णदीर्घश्छान्दसः, अपपाठो वा । तृणेषु संस्तरेषु[1] चासनशयने शिष्टाचारसिद्धे ॥

नानुदेश्यं भुञ्जीत ॥ २२ ॥

अनुदेश्यं श्राद्धार्थमुद्दिष्टं देवतार्थं वोद्दिष्टं न भुञ्जीत ॥

तथा क्षारलवणमधुमांसानि ॥ २३ ॥

न भुञ्जीतेत्येव । क्षारादीनि गृह्ये[2] गतानि ॥

अदिवास्वापी ॥ २४ ॥

दिवा न सुप्यात् ॥

अगन्धसेवी ॥२५॥

चन्दनादिगन्धद्रव्याणि न सेवेत ॥

मैथुनं न चरेत् ॥ २६ ॥

उपचारक्रिया केलिस्स्पर्शो भूषणवाससाम् ।
एकशय्यासनं क्रीडा चुम्बनालिङ्गने तथा ॥

इत्येवमादेस्सर्वस्योपलक्षणम् ॥

---

[1] घु—प्रस्तरेषु. [2] आप. गृ. ११-२०.

**उत्सन्नश्लाघः ॥ २७ ॥**

श्लाघा शोभा, सा उत्सन्ना यस्य स उत्सन्नश्लाघः, एवम्भूतो भवेत्, म्रक्षणादिना मुखादिकमुज्ज्वलितं न कुर्यादिति ॥

**अङ्गानि न प्रक्षाळयीत ॥ २८ ॥**

विना शिरसा सुखार्थमुष्णाम्ब्वादिना शरीरं न प्रक्षाळयेत् ॥

**प्रक्षाळयीत त्वशुचिलिप्तानि गुरोरसन्दर्शे ॥ २९ ॥**

यानि मूत्रपुरीषाद्यशुचिलिप्तान्यङ्गानि तानि कामं मृद्वारिभिः प्रक्षाळयेत्, यावद्गन्धो लेपश्चापैति । तदपि गुरोरसन्दर्शे, यत्र गुरुर्न पश्यति तत्र । आचार्यप्रकरणे गुरुग्रहणात्पित्रादीनामपि ग्रहणम् ॥

**नाप्सु श्लाघमानस्स्नायात् ॥ ३० ॥**

स्नाने प्राप्ते न श्लाघमानस्स्नायात्; किन्तु दण्डवत्प्लवेत् । स्नानीयैर्द्रव्यैर्मलापकर्षणं श्लाघा, क्रीडा वा । अपर आह— 'अङ्गानि न प्रक्षाळयीत' इत्या समावर्तनान्नित्यस्नानस्य प्रतिषेधः, 'प्रक्षाळयीत त्वशुचिलिप्तानि' इति नैमित्तिकस्नानविधिः, 'नाप्सु श्लाघमानस्स्नायात्' इति तत्रैव श्लाघाप्रतिषेध इति ॥

**जटिलः ॥ ३१ ॥**

सर्वानेव केशान् जटां कृत्वा बिभृयात् ॥

**शिखाजटो वा वापयेदितरान् ॥ ३२ ॥**

अथवा शिखामेव जटां कृत्वा इतरान्केशान्वापयेन्नापितेन ॥

**मौञ्जी मेखला त्रिवृद्ब्राह्मणस्य शक्तिविषये दक्षिणावृत्तानाम् ॥ ३३ ॥**

मुञ्जानां विकारो मौञ्जी । त्रिवृत्त्रिगुणा । एवम्भूता ब्राह्मणस्य मेखला भवति । सा शक्तिविषये शक्तौ सत्यां दक्षिणावृत्तानां कर्तव्या । तद्धितार्थे गुणभूतानामपि मुञ्जानामेतद्विशेषणम् ॥

**ज्या राजन्यस्य ॥ ३४ ॥**

स्पष्टम् ॥

**मौञ्जी वाऽयोमिश्रा ॥ ३५ ॥**

अथवाऽयोमिश्रा क्वचित्कालायसेन बद्धा मौञ्जी मेखला भवति राजन्यस्य ॥

**आवीसूत्रं वैश्यस्य ॥ ३६ ॥**

अविरूर्णायुः कम्बळप्रकृतिः, तत्सम्बन्धिनी ऊर्णा आवी, तत्कृतं सूत्रमावीसूत्रं, सा मेखला वैश्यस्य भवति ॥

**सैरी तामली वेत्येके ॥ ३७ ॥**

सैरी सीरवाहयोक्त्ररज्जुः । तामलो मूलोदकसंज्ञो वृक्षः, तस्य त्वचा ग्रथिता तामली ॥

**पालाशो दण्डो ब्राह्मणस्य नैय्यग्रोधस्कन्धजोऽवाङग्रो राजन्यस्य बादर औदुम्बरो**

वा वैश्यस्य वार्क्षो दण्ड इत्यवर्णसंयोगेनैक उपदिशन्ति ॥ ३८ ॥

गृह्ये[1] गतम् ॥

वासः ॥ ३९ ॥

वस्यते कौपीनमाच्छाद्यते येन तद्वासः ॥

तद्वक्ष्यते—

शाणीक्षौमाजिनानि ॥ ४० ॥

शणस्य विकारश्शाणी पटी । क्षुमा अतसी, तस्या विकारः क्षौमः । श्वेतपट्टाख्यो वासोविशेष इत्यन्ये । अजिनं यस्य कस्यचिन्मेध्यस्य पशोः । त्रीण्येतानि वर्णानुपूर्व्येण वासांसि ॥

काषायं चैके वस्त्रमुपदिशन्ति ॥ ४१ ॥

एके आचार्याः वस्त्रं च धार्यमुपदिशन्ति । वस्त्रं च कार्पासम्, तच्च काषायं कषायेण रक्तम् । ब्राह्मणस्येत्यर्थाद्गम्यते, इतरयोस्तु वक्ष्यमाणत्वात् ॥

इति द्वितीयः खण्डः.

---

माञ्जिष्ठं राजन्यस्य ॥ १ ॥

मञ्जिष्ठया रक्तं माञ्जिष्ठम् ॥

हारिद्रं वैश्यस्य ॥ २ ॥

हरिद्रया रक्तं हारिद्रम् । एतान्युत्तरीयाणि ॥

---

[1] आप. गृ. ११-१५, १६.

**हारिणमैणेयं वा कृष्णं ब्राह्मणस्य ॥ ३ ॥**

'बस्ताजिनम्' इति वक्ष्यमाणत्वादिहाप्यजिनमिति गम्यते। 'अजिनमुत्तरमुत्तरया'[1] इत्युपनयने यदजिनं धार्यमुक्तं तद्धारिणं ब्राह्मणस्य। हरिणो मृगस्तस्य विकारो हारिणम्। ऐणेयं वा कृष्णम्, एणी मृगी, तस्या विकार ऐणेयम्। 'एण्या ढञ्'। द्विविधा एणाः कृष्णाश्च गौराश्च, अतो विशेष्यते कृष्णमैणेयमिति ॥

अस्मिन्पक्षे विशेषमाह–

**कृष्णं चेदनुपस्तीर्णासनशायी स्यात् ॥ ४ ॥**

कृष्णं चेद्विभृयान्न हारिणम्, ततस्तस्मिन्ननुपस्तीर्णे नासीत न च शयीत। अयं तावदर्थः, शब्दनिर्वाहस्तु 'अधासनशायी'[2] इत्यत्र कृतः ॥

**रौरवं राजन्यस्य ॥ ५ ॥**

रुरुर्बिन्दुमान् मृगः ॥

**बस्ताजिनं वैश्यस्य ॥ ६ ॥**

बस्तश्छागः ॥

**आविकं सार्ववर्णिकम् ॥ ७ ॥**

अविरूर्णायुः, स एवाविकः, तस्य चर्म आविकम्। तत्सर्वेषामेव वर्णानाम्। अस्य हारिणादिभिर्विकल्पः ॥

**कम्बलश्च ॥ ८ ॥**

अयमप्याविक एव प्रावरणस्सर्वेषाम् ॥

---

[1] आप. गृ. १०-११.

[2] आप. ध. १-२-२१.

'काषायं चैके वस्त्रमुपदिशन्ति' इत्यारभ्य वासांस्यजिनानि च विहितानि। तत्र कामवशेन विशेषमाह—

**ब्रह्मवृद्धिमिच्छन्नजिनान्येव वसीत क्षत्रवृद्धिमिच्छन्वस्त्राण्येवोभयवृद्धिमिच्छन्नुभयमिति हि ब्राह्मणम् ॥९॥**

ब्रह्मवृद्धिर्ब्राह्मणवृद्धिः। क्षत्रवृद्धिः क्षत्रियवृद्धिः॥

अथ स्वपक्षमाह—

**अजिनं त्वेवोत्तरं धारयेत् ॥१०॥**

उत्तरमुत्तरीयमजिनमेव धारयेत्॥

**अनृत्तदर्शी ॥११॥**

नृत्तं न पश्येत्॥

**सभास्समाजांश्चागन्ता ॥ १२ ॥**

द्यूतादिस्थानं सभा। उत्सवादिषु समवायस्समाजः। तास्सभास्समाजांश्च अगन्ता ताच्छील्येन न गच्छेत्। यदृच्छागमने न दोषः॥

**अजनवादशीलः ॥ १३ ॥**

जनवादः परिवादः लोकवार्ता वा, तच्छीलो न स्यात्॥

**रहश्शीलः ॥१४॥**

सति सम्भवे रहश्शीलस्स्यात्॥

**गुरोरुदाचारेष्वकर्ता स्वैरिकर्माणि ॥१५॥**

येषु प्रदेशेषु गुरुरुदाचरति पौनःपुन्येन चरति तेषु स्वैरिकर्माणि मैत्रप्रसाधनादीनि न कुर्यात्॥

**स्त्रीभिर्यावदर्थसम्भाषी ॥१६॥**

स्त्रीभिस्सह यावत्प्रयोजनमेव सम्भाषेत, न प्रसक्तानुप्रसक्तमतिचिरम् ।

'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति'।

इति । अतिबालाभिरतिवृद्धाभिश्च न दोषः ॥

**मृदुः ॥१७॥**

क्षमावान् ॥

**शान्तः ॥१८॥**

इन्द्रियाणामसद्विषये प्रवृत्त्यभावश्शमः, तद्वान् शान्तः ॥

**दान्तः ॥१९॥**

विहितेषु कर्मस्वग्लानिर्दमः, तद्वान् ॥

**ह्रीमान् ॥२०॥**

ह्रीर्लज्जा, तद्वान् ॥

**दृढधृतिः ॥२१॥**

लब्धे नष्टे मृते वा धृतावेवावस्थितस्स्यात्, न हृष्येत्, न च विषीदेत् ॥

**अग्लास्नुः ॥२२॥**

उत्साहसम्पन्नः । 'ग्लाजिस्थश्च ग्स्नुः' । अत्रानुस्वारपाठश्छान्दसः, अपपाठो वा ॥

**अक्रोधनः ॥२३॥**

न कस्मै चिदपि क्रुध्येत् ॥

अनसूयुः ॥२४॥

पराभाग्यानुसन्तापोसूया, तच्छीलो न स्यात् ॥

सर्वं लाभमाहरन्गुरवे सायम्प्रातरमत्रेण भिक्षाचर्यं चरेद्भिक्षमाणोन्यत्रापपात्रेभ्योभिशस्ताच्च ॥ २५ ॥

अपपात्राः प्रतिलोमजा रजकादयः । अपगतानि हि तेषां पात्राणि पाकाद्यर्थानि चतुर्भिर्वर्णैस्सह । अभिशस्तान्वक्ष्यति 'अथ पतनीयानि'[1] इत्यादिना । तानुभयान्वर्जयित्वान्यत्र भिक्षेत । तत्र च भिक्षमाणस्सर्वं लाभं यच्च यावच्च लब्धं गोहिरण्यादि तत्सर्वममायया[2] गुरवे आहरेत् । एवमहरहः कुर्वन् सायं प्रातरमत्रेण न हस्तादिना भिक्षाचर्यं भिक्षाचरणं चरेत् कुर्यात् । सायं प्रातरिति वचनान्न सायंगृहीतेन प्रातराशः, नापि प्रातर्गृहीतेन सायमाशः ॥

अथ भिक्षाप्रत्याख्यानं निन्दितुं ब्राह्मणमाघुष्यते—

स्त्रीणां प्रत्याचक्षाणानाꣳ समाहितो ब्रह्मचारीष्टं दत्तꣳ हुतं प्रजां पशून्ब्रह्मवर्चसमन्नाद्यं वृङ्क्ते । तस्माद्दुह वै ब्रह्मचारिसङ्घं चरन्तं न प्रत्याचक्षीतापिहैष्वेवंविध एवंव्रतस्स्यादिति हि ब्राह्मणम् ॥२६॥

---

[1] आप. ध. १-२१-७.

[2] घ. छ—र्वेमादाय.

व्याख्यातस्समाहितः। समाहितो ब्रह्मचारी याभिस्स्त्रीभिर्भिक्षा प्रत्याख्यायते तासां प्रत्याचक्षाणानामिष्टं यागेनार्जितं धर्मम्, दत्तं दानेनार्जितम्, हुतं दर्वीहोमैश्च गार्ह्यैरार्जितम्, सर्वमेव धर्मं वृङ्क्ते आच्छिनत्ति। यस्मादेवं तस्माद्ब्रह्मचारिसङ्घं चरन्तं न प्रत्याचक्षीत। उ ह वा इति निपाता वाक्यालङ्कारार्थाः। अपिहशब्दौ कदाचिदित्येवमर्थं द्योतयतः। एषु सङ्घीभूतेषु ब्रह्मचारिषु कदाचिदेवंविधस्समाहितः एवंव्रतस्स्यात्, 'अथ ब्रह्मचर्यविधिः' इत्यारभ्य यानि व्रतान्युक्तानि तैस्तद्वान् ब्रह्मचारी स्यात्। सम्भावनायां लिङ्। सम्भवेत्। तस्मान्न प्रत्याचक्षीतेत्येवं ब्राह्मणं भवतीति ॥

## नानुमानेन भैक्षमुच्छिष्टं दृष्टश्रुताभ्यां तु ॥२७॥

भिक्षाणां समूहो भैक्षम्। न तल्लिङ्गाभासेनोच्छिष्टं मन्तव्यम्, किन्तु दृष्टश्रुताभ्यामेव। दृष्टमात्मनः प्रत्यक्षम्, श्रुतमाप्तोपदेशः, ताभ्यामेव तदुच्छिष्टमवगन्तव्यम्। अयमंशः प्राप्तानुवादोपूर्वमंशं विधातुं, यथा, 'नानुवषट्करोत्यपि वोपांश्वनुवषट्कुर्यात्'[1] इति ॥

## भवत्पूर्वया ब्राह्मणो भिक्षेत ॥२८॥

ब्राह्मणो ब्रह्मचारी भवत्पूर्वया वाचा भिक्षेत भिक्षां याचेत 'भवति भिक्षां देहि' इति ॥

## भवन्मध्यया राजन्यः ॥ २९ ॥

'भिक्षां भवति देहि' इति राजन्यो भिक्षेत ॥

---

[1] आप. श्रौ. १३-१४-९,१०.

भवदन्त्यया वैश्यः ॥३०॥

'भिक्षां देहि भवति' इति ॥

'सर्वं लाभमाहरन्गुरवे' इत्युक्तम् । अथाहृत्य किं कर्तव्यमित्यत आह—

तत्समाहृत्योपनिधायाचार्याय प्रब्रूयात् ॥३१॥

तद्भैक्षं समाहृत्य समीपे निधायाचार्याय प्रब्रूयादिदमित्थमाहृतमिति [1]॥

तेन प्रदिष्टं भुञ्जीत ॥३२॥

तेनाचार्येण प्रदिष्टं सौम्य त्वमेव भुङ्क्ष्वेत्युक्तं भुञ्जीत ॥

विप्रवासे गुरोराचार्यकुलाय ॥३३॥

यदि गुरुर्विप्रोषितः असन्निहितस्स्यात्तत आचार्यकुलाय आचार्यस्य यत्कुलं भार्यापुत्रादि तस्मै प्रब्रूयात् ॥

तैर्विप्रवासेन्येभ्योपि श्रोत्रियेभ्यः ॥३४॥

तैस्स्वकुलैस्सह गुरोर्विप्रवासे अन्येभ्योपि श्रोत्रियेभ्यः प्रब्रूयात् । तैः प्रदिष्टं भुञ्जीतेति विपरिणामेनान्वयः । गौतमोप्याह—'असन्निधौ तद्भार्यापुत्रसब्रह्मचारिसद्भ्यः'[2] इति ॥

नात्मप्रयोजनश्चरेत् ॥३५॥

आत्मा प्रयोजनं प्रयोजको यस्य स आत्मप्रयोजनः, एवम्भूतो

---

[1] ङ. च—इममर्थमाधत्स्वेति.　[2] गौ. २-४०,

भिक्षां न चरेत्, आत्मार्थं न चरेदित्यर्थः। अस्य प्रयोजनं यदा श्रोत्रिया अपि न लभ्यन्ते तदा 'प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीत '[1] इति वक्ष्यमाणमप्रोषितेपि यथा स्यादिति ॥

**भुक्त्वा स्वयममत्रं प्रक्षाळयीत ॥ ३६ ॥**

अमत्रं भोजनपात्रम्, भुक्त्वेति सन्निधानात्। तत्स्वयमेव प्रक्षाळयीत प्रक्षाळयेत्। भिक्षापात्रस्य त्वन्येनापि प्रक्षाळने न दोषः। उभयोरपि पात्रयोर्ग्रहणमित्यन्ये ॥

**न चोच्छिष्टं कुर्यात् ॥ ३७ ॥**

यावच्छक्नोति भोक्तुं तावदेव भोजनपात्रे कृत्वा भुञ्जीत ॥

**अशक्तौ भूमौ निखनेत् ॥ ३८ ॥**

भोजने प्रवृत्तो यदि तावद्भोक्तुं न शक्नुयात् तदा भूमौ निखनेत् ॥

**अप्सु वा प्रवेशयेत् ॥ ३९ ॥**

अप्सु प्रक्षिपेत् ॥

**आर्याय वा पर्यवदध्यात् ॥ ४० ॥**

आर्यस्त्रैवर्णिकस्तस्मै अनुपनीताय पर्यवदध्यात् सर्वमेकस्मिन्पात्रे निधाय तत्समीपे भूमौ स्थापयेत् ॥

**अन्तर्धिने वा शूद्राय ॥ ४१ ॥**

---

[1] आप. ध. १–३–४२.

अन्तर्धानमन्तर्धिः सोऽस्यास्तीति । व्रीह्यादित्वादिनिः । अन्तर्धी दासः । अन्तर्हितं हि तस्य शूद्रत्वम्, आशौचेषु स्वामितुल्यत्वात् । प्रकरणाच्चाचार्यस्येति गम्यते । आचार्यदासाय शूद्राय पर्यवदध्यात् ॥

**प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीत ॥ ४२ ॥**

यदि शिष्य आत्मार्थमाचार्यार्थं वा प्रोषितस्स्यात्तदा भैक्षात्किञ्चिदादायाग्नौ कृत्वा प्रक्षिप्य शेषं भुञ्जीत श्रोत्रियाणां सद्भावेऽसद्भावे च । 'अन्येभ्योपि श्रोत्रियेभ्यः' इत्येतत्त्वत्र न भवति । यदि स्यात्तत्रैवायं ब्रूयात् 'तदभावेऽग्नौ कृत्वा भुञ्जीत' इति । यद्यपि तत्राचार्यस्य विप्रवासः प्रकृतः, तथापि न्यायसाम्याच्छिष्यस्यापि विप्रवासो भविष्यति ॥

अथ ब्रह्मचारिणो यज्ञं सम्पादयितुं हविरादीनि सम्पादयति—

**भैक्षꣳ हविषा सꣳस्तुतं तत्राचार्यो देवतार्थे॥४३**

भैक्षं हविषा हविष्ट्वेन संस्तुतं कीर्तितम् । तत्र तस्मिन् हविषि आचार्यो देवतार्थे देवताकार्ये, तत्प्रीत्यर्थत्वात्तस्येति ॥

**आहवनीयार्थे च ॥ ४४ ॥**

तस्य जठराग्नौ हूयमानत्वात् ॥

**तं भोजयित्वा ॥ ४५ ॥**

इति तृतीयः खण्डः.

---

**यदुच्छिष्टं प्राश्नाति ॥ १ ॥**

अनुवादेषु सर्वत्र विधिः कल्प्यते, तं भोजयेत्, भोजयित्वा तस्योच्छिष्टं प्राश्नीयात् । प्राश्नातीति अकारोऽपपाठश्छान्दसो वा, 'शात्' इति चुत्वप्रतिषेधात् ॥

**हविरुच्छिष्टमेव तत् ॥ २ ॥**

इडाभक्षणादिस्थानीयमित्यर्थः ॥

**यदन्यानि द्रव्याणि यथालाभमुपहरति दक्षिणा एव ताः ॥ ३ ॥**

यदन्यानि द्रव्याणि गवादीनि भिक्षाचरणे लब्धानि समिदादीनि च स्वयमाहृतानि यथालाभमुपहरति दक्षिणा एव ताः । दक्षिणासामानाधिकरण्यात्ता इत्युक्तम् ॥

**स एष ब्रह्मचारिणो यज्ञो नित्यप्रततः ॥ ४ ॥**

स एष एवम्भूतो यज्ञो ब्रह्मचारिणो नित्यं प्रतायते, एवं कुर्वता ब्रह्मचारिणा यज्ञ एव नित्यं क्रियत इत्यर्थः ॥

**न चास्मै श्रुतिप्रतिषिद्धमुच्छिष्टं दद्यात् ॥ ५ ॥**

अस्मै शिष्यायाचार्यश्श्रुतिविप्रतिषिद्धं शास्त्रप्रतिषिद्धमुच्छिष्टं न दद्यात् ॥

किम्पुनस्तत् ?–

**यथा क्षारलवणमधुमांसानीति ॥ ६ ॥**

यथेति वचनात्, श्रुतिविप्रतिषिद्धमिति लक्षणतः प्रतिषेधाच्च क्षारादिग्रहणमेवंविधस्योपलक्षणम् ॥

## एतेनान्ये नियमा व्याख्याताः ॥ ७ ॥

अभ्यङ्गशेषो गन्धशेषो माल्यशेष इत्यादयो ब्रह्मचारिणः प्रतिषिद्धाः आचार्येण न देया इत्युक्तं भवति ॥

केचित्तु श्रुतिविप्रतिषिद्धमप्याचार्यस्य शेषमुपभुञ्जाना दृश्यन्ते पूर्वःपूर्वः आचारः प्रमाणमिति वदन्तः। तान्निराकरोति—

## श्रुतिर्हि बलीयस्यानुमानिकादाचारात् ॥ ८ ॥

अनुमानाय प्रभवतीत्यानुमानिकः। आचाराद्धि श्रुतिः स्मृतिर्वानुमीयते। तस्मादानुमानिकादाचारात्प्रत्यक्षा श्रुतिर्बलीयसी। तद्विरोधे नानुमातुं शक्यते, 'अनुमानमबाधितम्' इति न्यायात्। एवञ्च ब्रुवता ब्रह्मचारिणः क्षारलवणादिप्रतिषेधः प्रत्यक्षब्राह्मणमूल इति दर्शितं भवति। यद्यपि क्षारादिप्रतिषेधश्रुतेरुच्छिष्टव्यतिरिक्तो विषयस्सम्भवति, तथापि सङ्कोचोपि तस्या अविशेषप्रवृत्ताया आनुमानिकादाचारादयुक्तः ॥

ननु परस्परविरुद्धा अपि श्रुतय उपलभ्यन्ते, यथा— 'गृह्णाति' 'न गृह्णाति' इति। तत्किमाचारात्सङ्कोचिका श्रुतिर्नानुमीयते? अत आह—

## दृश्यते चापि प्रवृत्तिकारणम् ॥ ९ ॥

स्यादेवं यद्ययमाचारोऽगृह्यमाणकारणस्स्यात्। गृह्यते तु तत्र कारणम् ॥

किं तत् !–

**प्रीतिर्ह्युपलभ्यते ॥१०॥**

क्षारादिभोजने भुञ्जानस्य प्रीतिर्ह्युद्भवति । ततश्च यत्र प्रीत्युपलब्धितः प्रवृत्तिः न तत्र शास्त्रमस्तीति न्यायात् न सङ्कोचिका श्रुतिरनुमीयते इति ॥

**पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम् ॥११॥**

स्पष्टम् ॥

**धर्मविप्रतिपत्तावभोज्यम् ॥१२॥**

यदि तयोर्धर्माद्विप्रतिपत्तिरपायो भवति ततो न भोज्यम् । यद्वा–भुञ्जानस्य ब्रह्मचारिणः यदि धर्मविप्रतिषेधो भवति मधुमांसादिमिश्रितत्वेन ततो न भोज्यमिति ॥

**सायम्प्रातरुदकुम्भमाहरेत् ॥१३॥**

आचार्यस्य स्नानपानाद्यर्थम् ॥

**सदारण्यादेधानाहृत्याधो निदध्यात् ॥१४॥**

सदा प्रत्यहमरण्यात् न पित्रादिगृहात् एधान् काष्ठानि आचार्यगृहे पाकाद्यर्थमाहरेत्, आहृत्य चाधो निदध्यात् । अधोनिधानं आचार्यस्य पुत्रादिषु बालेषु पतनशङ्कया । अपर आह–आत्मनस्समिदाधानार्थमेधाहरणमिति । उक्तं हि गृह्ये–'एवमन्यस्मिन्नपि सदारण्यादेधानाहृत्य'[1] इति । तदनुवादेनाधोनिधानमत्र विधीयते दृष्टार्थमदृष्टार्थं वेति ॥

---

[1]अप. गृ. ११-२२.

**नास्तमिते समिद्धारो गच्छेत् ॥१५॥**

अस्तमिते आदित्ये समिध आहर्तुं न गच्छेत्, चोरव्याघ्रादिसम्भवात् । समिद्धार इति 'अणू कर्मणि च' इति तुमर्थेऽण्प्रत्ययः ॥

**अग्निमिद्ध्वा परिसमूह्य समिध आदध्यात्सायम्प्रातर्यथोपदेशम् ॥१६॥**

परिसमूहनं परितो मार्जनम् । विप्रकीर्णस्याग्नेराशीकरणमित्यन्ये । यथोपदेशं यथा गृह्य उक्तं तथा समिध आदध्यात् । गृह्ये विहितमपि समिदाधानं विधीयते सर्वाचरणार्थं, सायम्प्रातरित्यादिकान्विशेषान्वक्ष्यामीति च ॥

**सायमेवाग्निपूजेत्येके ॥१७॥**

एक आचार्यास्सायमेवाग्निपूजा कार्या न प्रातरिति मन्यन्ते ॥

**समिद्धमग्निं पाणिना परिसमूहेन्न समूहन्या ॥**

समिदाधानेन समिद्धमग्निं पाणिना परिसमूहेत्, न समूहन्या । समूहनी सम्मार्जनी दर्भनिर्मिता वेदाकृतिः, आचारात् ॥

**प्राक्तु याथाकामी ॥१९॥**

प्राक्तु समिदाधानात्परिसमूहने याथाकामी भवति । यथाकामस्य भावो याथाकामी । ष्यञ्, षित्त्वादीकारः ॥

**नाग्न्युदकशेषेण वृथाकर्माणि कुर्वीताचामेद्वा ॥**

अग्निपरिचर्यायां परिसमूहने परिषेचने च यदुपयुक्तमुदकं

तच्छेषेण वृथाकर्माणि अदृष्टप्रयोजनरहितानि पक्प्रक्षाळनादीनि न कुर्वीत, नाप्याचामेत् । अवृथाकर्मत्वादस्य पुनः प्रतिषेधः ।

**पाणिसङ्क्षुब्धेनोदकेनैकपाण्यावर्जितेन च नाचामेत् ॥२१॥**

पाणिसङ्क्षुब्धं कुम्भादिगतं यत्पाणिना सङ्क्षोभितं तेनोदकेन नाचामेत् । नेदं[1] तटाकादिषु स्वयमाचमने । यदा पर आचामयति तदा एकेन पाणिना यदावर्जितमुदकं तेन नाचामेत्, किन्तूभाभ्यां हस्ताभ्यां करकादि गृहीत्वा यदावर्जितं तेनाचामेत् । एवञ्च स्वयं वामहस्तेनावर्जितेनापि नाचामेत् । अलाबुपात्रेण नाळिकेरेण वैणवेन चर्ममयेन[2] ताम्रमयेन वा पात्रेण स्वयमाचमन[3]माचरन्ति शिष्टाः ॥

**स्वप्नं च वर्जयेत् ॥२२॥**

पूर्वं 'अदिवास्वापी'[4] इत्यनेन दिवास्वापः प्रतिषिद्धः । अनेन तु रात्रावपि यावदाचार्यो न स्वपिति तावन्तं कालं स्वापः प्रतिषिद्ध्यते । स्वप्नकथनं च वर्जयेदित्यन्ये ॥

**अथाहरहराचार्यं गोपायेद्धर्मार्थयुक्तैः कर्मभिः ॥**

अथ स्वप्नस्य प्रकृतत्वात्स्वप्नानन्तरं ब्राह्मे मुहूर्ते उत्थायेत्यर्थः। अहरहर्नित्यमाचार्यं गोपायेद्रक्षेत् । किं दण्डादि गृहीत्वा ? नेत्याह – धर्मार्थयुक्तैः कर्मभिः धर्मयुक्तानि कर्माणि समित्कुशपुष्पाहरणादीनि, अर्थयुक्तानि युग्यघासाहरणादीनि ॥

---

[1] क. घ. ङ–इदं. [2] घ–मृण्मयेन. च–चमरु [चमूरु ?] मयेन.
[3] 'स्वयम्' इति केषुचित्पुस्तकेषु नास्ति. [4] १–२–२४.

**स गुप्त्वा संविशन्ब्रूयाद्धर्मगोपायमाजूगुपमहमिति ॥ २४ ॥**

स ब्रह्मचारी यावदुत्थानादस्य यावच्च संवेशनात्* एवमाचार्यं गुप्त्वा संविशन् शयनं भजन् 'धर्मगोपायमाजूगुपमहम्' इति मन्त्रं ब्रूयात् । धर्मं गोपायतीति धर्मगोपाय आचार्यः तमहमाजूगुपं आभिमुख्येन रक्षितवानस्मि, इदानीन्तु संविशामीति मन्त्रस्यार्थः । अपर आह – हे धर्म मां गोपाय रक्ष, यस्मादहं आजूगुपमाचार्यमेतावन्तं कालमिति ॥

**प्रमादादाचार्यस्य बुद्धिपूर्वं वा नियमातिक्रमः रहसि बोधयेत् ॥२५॥**

प्रमादोऽनवधानम्, प्रमादाद्बुद्धिपूर्वं वाचार्यस्य यो नियमातिक्रमः तं रहसि बोधयेत्, इत्थमयं नियमः पूज्यपादैरतिक्रम्यत इति ॥

**अनिवृत्तौ स्वयं कर्माण्यारभेत ॥२६॥**

यदि बोधितोप्याचार्यस्ततो न निवर्तेत ततस्स्वयमेव तस्य कर्तव्यानि ब्रह्मयज्ञादीनि कर्माणि आरभेत कुर्यात् ॥

**निवर्तयेद्वा ॥२७॥**

प्रसह्य वा स्वयं निवर्तयेत् । पित्रादिभिर्वा निवर्तयेत् ॥

**अथ यः पूर्वोत्थायी जघन्यसंवेशी तमाहुर्न स्वपितीति ॥२८॥**

---

* ङ–आन्याय्यादुत्थानादान्याय्याच संवेशनात्.

यः पूर्वमाचार्यादुत्तिष्ठति प्रबुध्यति । जघन्यशब्दः पश्चादर्थे । जघन्यं च संविशति तं ब्रह्मचारिणं न स्वपितीति धर्मज्ञा आहुः । प्रयोजनम्—उपनयने 'मा सुषुप्थाः' इति संशासनस्यायमर्थः, न स्वापस्यात्यन्ताभाव इति । अथशब्दश्च वाक्योपक्रमे ॥

**स य एवं प्रणिहितात्मा ब्रह्मचार्यत्रैवास्य सर्वाणि कर्माणि फलवन्त्यवाप्तानि भवन्ति यान्यपि गृहमेधे ॥२९॥**

'आचार्याधीनस्स्यात्'[1] इत्यारभ्य यस्य नियमा उक्ताः स ब्रह्मचारी एवमुक्तेन प्रकारेण प्रणिहितात्मा प्रकर्षेण निहित आचार्यकुले स्थापित आत्मा येन स तथोक्तः । प्रकर्षश्चाऽन्तात्तत्रैव शरीरन्यासः । वक्ष्यति 'आचार्यकुले शरीरन्यासः'[2] इति। अस्यैवंविधस्य ब्रह्मचारिणोऽत्रैव ब्रह्मचर्याश्रमे सर्वाणि कर्माणि फलवन्ति ज्योतिष्टोमादीनि कर्माण्यवाप्तानि भवन्ति । तत्फलावाप्तिरेव तदवाप्तिः । यान्यपि कर्माणि गृहमेधे गृह्यशास्त्रे विवाहादीन्यष्टकान्तानि तान्यप्यवाप्तानि भवन्ति । तदेतन्नैष्ठिकब्रह्मचारिविषयमिदं सूत्रम् ॥

इति चतुर्थः खण्डः.

इति श्रीहरदत्तमिश्रविरचितायामापस्तम्बधर्मसूत्रव्याख्यायामुज्ज्वलायां प्रथमः पटलः.

---

[1] आप. ध. १-२-१९.

[2] आप. ध. २-२१-६.

## नियमेषु तपश्शब्दः ॥ १ ॥

'आचार्याधीनस्स्यात्'[1] इत्येवमादयो ये नियमाः अस्मिन्ब्रह्मचारिप्रकरणे निर्दिष्टाः तपश्शब्दस्तेषु द्रष्टव्यः, न तु कृच्छ्रादिषु ॥

## तदतिक्रमे विद्याकर्म निस्स्रवति ब्रह्म सहापत्यादेतस्मात् ॥ २ ॥

तेषां नियमानामतिक्रमे विद्याकर्म विद्याग्रहणं ब्रह्म निस्स्रवति गृहीतं वेदं निस्सारयति । कुतः? एतस्मान्नियमातिक्रमेणाध्येतुः पुरुषात् । न केवलादेतस्मात्, किन्तर्हि? सहापत्यात् । अपत्येन सह वर्तत इति सहापत्यः । 'वोपसर्जनस्य' इति सभावाभावे रूपम् । अपत्यादपि निस्सारयति । यद्यप्यपत्यं नियमातिक्रमकारि न भवति, तथापि पितृदोषादेव ततोपि ब्रह्म निस्सारयति । नियमातिक्रमेण विद्याग्रहणं कुर्वतः पुरुषात् सहापत्याद्गृहीतं ब्रह्म निस्स्रवति, ब्रह्मयज्ञादिषूपयुज्यमानमप्यकिञ्चित्करं भवतीत्यर्थो विवक्षितः । स्रवतेश्च सकर्मकस्य प्रयोगो भाष्ये दृष्टः, स्रवत्युदकं कुण्डिकेति ॥

अपर आह—तदतिक्रमे नियमातिक्रमे विद्याकर्म विद्याग्रहणं न कर्तव्यम् । कुतः? यतो निस्स्रवति ब्रह्म निस्सरतीत्यर्थः । शेषं समानमिति ॥

विद्याकर्म निस्स्रवति ब्रह्म च निस्स्रवतीत्यन्ये ॥

कुर्वत इति वा अध्याहारः । तदतिक्रमेण विद्याकर्म कुर्वतो ब्रह्म निस्स्रवति ॥

न केवलमकिञ्चित्करं नियमातिक्रमेण विद्याग्रहणं, प्रत्युतानर्थकारीत्याह—

---

[1]आप. ध. १-२-१९.

कर्तपत्यमनायुष्यं च ॥ ३ ॥

कर्तशब्देन श्वभ्राभिधायिना नरको लक्ष्यते। पतत्यनेनेति पत्यम्। एवम्भूतं विद्याग्रहणं नरकपातहेतुर्भवति। अनायुष्यञ्च अनायुष्करञ्च ॥

तस्मादृषयोऽवरेषु न जायन्ते नियमातिक्रमात् ॥ ४ ॥

अत एवावरेष्ववर्चीनेषु कलियुगवर्तिषु ऋषयो न जायन्ते मन्त्रदृशो न भवन्ति, नियमातिक्रमस्येदानीमवर्जनीयत्वात् ॥

कथन्तर्ह्यद्यतना अतिक्रामन्तोपि नियमानल्पेनैव यत्नेन चतुरो वेदान्गृह्णन्ति? युगान्तरे सम्यगनुष्ठितस्य नियमकर्मणः फलशेषेणेत्याह—

श्रुतर्षयस्तु भवन्ति केचित्कर्मफलशेषेण पुनस्सम्भवे ॥ ५ ॥

* पुनस्सम्भवः पुनर्जन्म॥
अत्रोदाहरणम्—

यथा श्वेतकेतुः ॥ ६ ॥

श्वेतकेतुस्स्वल्पेनैव कालेन चतुरो वेदान् जग्राह। तथा च छान्दोग्यम्, 'श्वेतकेतुर्हारुणेय आस तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोननूच्य ब्रह्मबन्धुरिव भवति स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षस्सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय,'[†] इति ॥

---

* 'सकृच्छ्रुतस्याविस्मर्तारः श्रुतर्षयः'—इत्यधिकः पाठः क. पुस्तके.

† छा. उ. ६-१-१,२.

एवं नियमातिक्रमे दोषमुक्त्वा तदनुष्ठाने सिद्धिमाह—

**यत्किञ्च समाहितोऽब्रह्मप्याचार्यादुपयुङ्क्ते ब्रह्मवदेव तस्मिन्फलं भवति ॥ ७ ॥**

अब्रह्मापि । पररूपं कतन्तवत् । अपेर्वा अकारलोपः, पिहितपिनद्धादिवत् । वेदव्यतिरिक्तमपि यत्किञ्चिद्विषमन्त्रादिकं समाहितो नियमवान्भूत्वा आचार्यादुपयुङ्क्ते गृह्णाति ब्रह्मवदेव तस्मिन्फलं भवति ॥

निग्रहानुग्रहशक्तिरप्यस्य भवतीत्याह—

**अथो यत्किञ्च मनसा वाचा चक्षुषा वा सङ्कल्पयन्ध्यायत्याहाभिविपश्यति वा तथैव तद्भवतीत्युपदिशन्ति ॥ ८ ॥**

अथो अपि च यत्किञ्च निग्रहात्मकमनुग्रहात्मकं वा सङ्कल्पयन् चिकीर्षन् मनसा निर्दयेन शिवेन वा ध्यायति इत्थमिदमस्यास्त्विति तथैव तद्भवति । तथा यत्किञ्च सङ्कल्पयन् वाचा क्रूरया मधुरया वाह इदमित्थमस्यास्त्विति तथैव तद्भवति । एवं यत्किञ्च सङ्कल्पयन् चक्षुषा घोरेण मैत्रेण वाभिविपश्यति तथैव तद्भवतीत्युपदिशन्ति धर्मज्ञाः ॥

अवश्यं धर्मयुक्तेनाध्येतव्यमित्युक्तं भवति । इदानीं ते धर्माः लक्षणतस्त्रिविधा इत्याह—

**गुरुप्रसादनीयानि कर्माणि स्वस्त्ययनमध्ययनसंवृत्तिरिति ॥ ९ ॥**

यैरनुष्ठितैर्गुरुः प्रसीदति तानि गुरुप्रसादनीयानि पादप्रक्षाळनादीनि कर्माणि। स्वस्तीत्यविनाशनाम, तत्प्राप्तिसाधनं स्वस्त्ययनम्। तच्च त्रिविधम्, दृष्टार्थमदृष्टार्थमुभयार्थञ्चेति। दृष्टार्थं बाहुतरणादिनिषेधः, अदृष्टार्थं क्षारादिनिषेधः, उभयार्थं भिक्षाचरणादि। अध्ययनसंवृत्तिरधीतस्य वेदस्याभ्यासः ॥

अतोन्यानि निवर्तन्ते ब्रह्मचारिणः कर्माणि ॥

एतेभ्योन्यानि कर्माणि तीर्थयात्रादीनि निवर्तन्ते ब्रह्मचारिणः, न कर्तव्यानीत्यर्थः ॥

स्वाध्यायधृग्धर्मरुचिस्तपस्व्यृजुर्मृदुस्सिध्यति ब्रह्मचारी ॥ ११ ॥

स्वाध्यायधृक् अधीतस्य स्वाध्यायस्य धारयिता अविस्मर्ता। धर्मे रुचिर्यस्य स धर्मरुचिः। तपस्वी नियमेषु तपश्शब्दस्तद्वान्। ऋजुरमायावी। मृदुः क्षमावान्। एवम्भूतो ब्रह्मचारी सिध्यति सिद्धिं प्राप्नोति। उक्ता सिद्धिः 'अथो यत्किञ्च मनसा'[1] इति। तत्रोक्तानां पुनर्वचनमादरार्थम्, तदनुष्ठाने फलभूमा, तदतिक्रमे दोषभूमेति ॥

सदा महान्तमपररात्रमुत्थाय गुरोस्तिष्ठन्प्रातरभिवादमभिवादयीतासावहं भो इति॥१२॥

सदा प्रतिदिनं महान्तमपररात्रं रात्र्याः पश्चिमे यामे उत्तिष्ठेत्, उत्थाय च समीपे तिष्ठन् गुरोः प्रातरभिवादमभिवादयीत असावहं भो इति ब्रुवन्। असावित्यत्रात्मनो नामनिर्देशः, यथा अभिवादये यज्ञशर्माहं भो इति ॥

1. आप. ध. १-५-८.

**समानग्रामे च वसतामन्येषामपि वृद्धतराणां प्राक्प्रातराशात् ॥ १३ ॥**

प्रातर्भोजनात्प्राक् प्रातरभिवादमभिवादयीत, ते चेत् वृद्धतरास्समानग्रामे वसन्ति ॥

**प्रोष्य च समागमे ॥ १४ ॥**

यदा स्वयं प्रोष्य समागतो भवति, आचार्यादयो वा, तदाप्यभिवादयीत । इदं नैमित्तिकं, पूर्वं नित्यम् ॥

अथ काम्यम्—

**स्वर्गमायुश्चेप्सन् ॥ १५ ॥**

अभिवादयीतेत्येव ॥

अभिवादनप्रकारं वर्णानुपूर्व्येणाह—

**दक्षिणं बाहुꣳ श्रोत्रसमं प्रसार्य ब्राह्मणोभिवादयीतोरस्समꣳ राजन्यो मध्यसमं वैश्यो नीचैश्शूद्रः प्राञ्जलिः[1] ॥ १६ ॥**

ब्राह्मणोभिवादयमान आत्मनो दक्षिणं बाहुं श्रोत्रसमं प्रसार्याभिवादयीत । उरस्समं राजन्यः, दक्षिणं बाहुं प्रसार्याभिवादयीतेत्यनुवर्तते । एवमुत्तरयोरपि । एवं मध्यसममुदरसमं वैश्यः । ऊरुसममित्यन्ये । नीचैः पादसमं शूद्रोभिवादयीत प्राञ्जलिर्यथा भवति तथा अभिवादयीत, अञ्जलिं कृत्वेत्यर्थः । प्राञ्जलिरिति युक्तः पाठः ॥

---

[1] 'प्राञ्जलिम्' इति मुम्बैमुद्रितपुस्तके.

**प्लावनं च नाम्नोभिवादनप्रत्यभिवादने च पूर्वेषां वर्णानाम् ॥ १७ ॥**

अभिवादनस्य यत्प्रत्यभिवादनं तत्राभिवादयितुर्नाम्नः प्लावनं कर्तव्यं, प्लुतः कर्तव्य इत्यर्थः । पूर्वेषां वर्णानां शूद्रवर्जितानामभिवादयमानानाम् । 'प्रत्यभिवादेऽशूद्रे' इति पाणिनीयस्मृतेः तत्र 'वाक्यस्य टेः' इत्यनुवृत्तेः प्रत्यभिवादवाक्यस्यान्ते नामप्रयोगः, तस्य टेः प्लुतः । आयुष्मान् भव सौम्य इति प्रयोक्तव्यः । स्मृत्यन्तरवशान्नाम्नश्च पश्चादकारः । तथा च मनुः—

आयुष्मान्भव सौम्येति वाच्यो विप्रोभिवादने ।
अकारश्चास्य नाम्नोन्ते वाच्यः पूर्वाक्षरः प्लुतः[1] ॥

आयुष्मान्भव सौम्य देवदत्ता३अ इति प्रयोगः । शम्भुर्विष्णुः पिनाकपाणिः इत्यादीनां नाम्नां सम्बुद्धौ गुणे कृते 'एचोप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' इत्ययमपि विधिर्भवति । अन्ते अकारः 'तयोर्य्वावचि संहितायाम्' इति यकारवकारौ भवतः । शम्भा३व, विष्णा३व, पिनाकपाणा३य, इति । अत्र सूत्रे 'प्रत्यभिवादने च' इति चकारस्यार्थं न पश्यामः । अपर आह—अभिवादने प्रत्यभिवादने च प्लावनमिति । अस्मिन्नपि पक्षे द्वन्द्वेनाभिहितत्वाच्चशब्दोनर्थक एव । अभिवादने च शास्त्रान्तरे न क्वापि प्लुतो विहितः; तस्मादनर्थक एव चकारः । अनर्थकाश्च निपाता बहुलं प्रयुज्यन्ते ॥

---

[1] मनुस्मृ. २-१२५.

उदिते त्वादित्य आचार्येण समेत्योपसङ्ग्रहणम् ॥ १८ ॥

उदिते त्वादित्ये आचार्येणाध्ययनार्थं समेत्य वक्ष्यमाणेन विधिनोपसङ्ग्रहणं कुर्यात् ॥

सदैवाभिवादनम् ॥ १९ ॥

अन्यदा सर्वदा पूर्वोक्तप्रकारेणाभिवादनमेव । अयन्त्वनुवाद उत्तरविवक्षया ॥

उपसङ्ग्राह्य आचार्य इत्येके ॥ २० ॥

अभिवादनप्रसङ्गे सदैवोपसङ्ग्राह्य आचार्य इत्येके मन्यन्ते ॥

किमिदमुपसङ्ग्रहणम्? तदाह—

दक्षिणेन पाणिना दक्षिणं पादमधस्तादभ्यधिमृश्य सकुष्ठिकमुपसङ्गृह्णीयात् ॥ २१ ॥

आत्मनो दक्षिणेन पाणिना आचार्यस्य दक्षिणं पादं अधस्तादभ्यधिमृश्य । अधिशब्द उपरिभावे । अधस्ताच्चोपरिष्टाच्चाभिमृश्य सकुष्ठिकं सगुल्फं, साङ्गुष्ठमित्यन्ये । उपसङ्गृह्णीयात्, इदमुपसङ्ग्रहणम्, एतत्कुर्यात् ॥

उभाभ्यामेवोभावभिपीडयत उपसङ्ग्राह्याविन्त्येके ॥ २२ ॥

उभाभ्यां पाणिभ्यामुभावेवाचार्यस्य पादावभिपीडयतो माणव-

कस्य उपसङ्ग्राह्याविस्येके मन्यन्ते । अभिपीडयत इति 'कृत्यानां कर्तरि वा' इति कर्तरि षष्ठी । अत्र मनुः—

व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणं गुरोः ।
सव्येन सव्यस्स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥[1] इति ॥

## सर्वाह्णं सुयुक्तोध्ययनादनन्तरोध्याये ॥२३॥

सर्वं च तदहश्च सर्वाह्णम् । 'राजाहस्सखिभ्यष्टच्', 'अह्नोह्न एतेभ्यः' इत्यह्नादेशः, 'अह्नोदन्तात्' इति णत्वम्, अत्यन्तसंयोगे द्वितीया । सर्वाह्णं सुयुक्तः सुसमाहितोनन्यचित्तः । अध्ययनादनन्तरः, नान्तरयतीत्यनन्तरः, अध्ययनाद्यथात्मानं नान्तरयति, यथा अध्ययनान्न विच्छिद्यते, तथा स्यात् । अध्याये स्वाध्यायकाले । अध्याय इत्यनुवादः, 'मनसा चानध्याये' इति विशेषविधानात् । 'अध्यायेत्' इति प्रायेण पठन्ति । तत्र तकारोपपाठश्छान्दसो वा ॥

## तथा गुरुकर्मसु ॥ २४ ॥

गुरुकर्मसु च तथा स्यात्; सुयुक्तोनन्तरश्च स्यात् ॥

## मनसा चानध्याये ॥ २५ ॥

अनध्यायकाले च मनसाध्ययनादनन्तरस्स्यात्, सन्देहस्थानानि मनसा निरूपयेत्, अध्ययनविषयामेव चिन्तां कुर्यात् ॥

## आहूताध्यायी च स्यात् ॥ २६ ॥

आचार्येणाहूतस्सन्नधीयीत । नाध्यापने स्वयं प्रवर्तयेत् ॥

इति पञ्चमः खण्डः.

[1] मनुस्मृ. २-७२.

**सदा निशायां गुरुꣳ संवेशयेत्तस्य पादौ प्रक्षाळ्य संवाह्य ॥ १ ॥**

सदा प्रत्यहं निशायां अतिक्रान्ते प्रदोषे गुरुं संवेशयेत् । कथम्? तस्य गुरोः पादौ प्रक्षाळ्य संवाह्य च । संवाहनं मर्दनम् ॥

**अनुज्ञातस्संविशेत् ॥ २ ॥**

पश्चाद्गुरुणानुज्ञातस्तु स्वयं संविशेत् शयीत ॥

**न चैनमभि प्रसारयीत ॥ ३ ॥**

एनमाचार्यं प्रति पादौ न प्रसारयेत् ॥

**न खट्वायाꣳ सतोभिप्रसारणमस्तीत्येके ॥ ४ ॥**

यदा गुरुः खट्वायां शेते तदा तं प्रति पादयोः प्रसारणं न दोषायेत्येके मन्यन्ते । स्वपक्षस्तु तत्रापि दोष इति ॥

**न चास्य सकाशे संविष्टो भाषेत ॥ ५ ॥**

अस्याचार्यस्य सकाशे स्वयं संविष्टश्शयानो न भाषेत । कार्यावेदनादावुत्थायैव भाषेत ॥

**अभिभाषितस्त्वासीनः प्रतिब्रूयात् ॥ ६ ॥**

आचार्येणाभिभाषितस्सन्नासीनः प्रतिब्रूयात् । एतदाचार्ये आसीने शयाने वा ॥

**अनूत्थाय तिष्ठन्तम् ॥ ७ ॥**

यदा आचार्यस्तिष्ठन्ब्रूते तदोत्थाय प्रतिब्रूयात् ॥

उत्तरे द्वे सूत्रे स्पष्टार्थे–

**गच्छन्तमनुगच्छेत् ॥ ८ ॥**

**धावन्तमनुधावेत् ॥ ९ ॥**

**न सोपानद्वेष्टितशिरा अवहितपाणिर्वाऽऽसीदेत् ॥ १० ॥**

उत्तरत्रो*पानत्प्रतिषेधात् 'न सोपानत्' इत्यनुवादः 'अध्वापन्नस्तु' इति प्रतिप्रसोतुम् । आचार्यं न सोपानत्क आसीदेत् । नापि वेष्टितशिराः । अवहितपाणिः दात्रादिहस्तः, एवम्भूतोपि नासीदेत् ॥

**अध्वापन्नस्तु कर्मयुक्तो वाऽऽसीदेत् ॥ ११ ॥**

प्राप्ताध्वा अध्वापन्नः । कर्मणि दात्रादिसाध्ये प्रवृत्तः कर्मयुक्तः । एवम्भूतस्तु सोपानत्कोप्यासीदेत् ॥

**न चेदुपसीदेत् ॥ १२ ॥**

न चेदाचार्यसमीपे उपसीदेदुपविशेत् । यदि तूपविशेदध्वापन्नः कर्मयुक्तो वा तदोपानत्प्रभृतीनि विहायोपविशेत् ॥

**देवमिवाचार्यमुपासीताविकथयन्नविमना वाचꣳ शुश्रूषमाणोस्य ॥ १३ ॥**

यो यं देवं भजते स तद्भावनयाचार्यमुपासीत । अविकथ-

*आप. ध. १-७-५.

यन्, व्यर्था कथा विकथा, तामकुर्वन् । अविमनाः अविक्षिप्तमनाः । अस्याचार्यस्य वाचं शुश्रूषमाणः ॥

**अनुपस्थकृतः ॥१४॥**

उपस्थकरणं प्रसिद्धम्* । तत्कृत्वा नोपासीत ॥

**अनुवाति वीतः ॥ १५ ॥**

वाते अनुवाति सति वीतः विपर्ययेणेत उपासीत । प्रतिवातस्तु वक्ष्यमाणेन प्रतिषिध्यते । मनुरप्याह—

'प्रतिवातेनुवाते च नासीत गुरुणा सह ॥'[1]

इति ॥

**अप्रतिष्टब्धः पाणिना ॥१६॥**

प्रतिष्टब्धो न स्यात्, पाणितलं भूमौ कृत्वा पाण्यालम्बनो नासीत ॥

**अनपश्रितोन्यत्र ॥१७॥**

अन्यत्र कुड्यादावाश्रितो न स्यात्, कुड्याद्यपाश्रितो नासीत ॥

**यज्ञोपवीती द्विवस्त्रः ॥१८॥**

यदा द्विवस्त्रस्तदा वाससान्यतरेण यज्ञोपवीती स्यात् । 'अपिवा सूत्रमेवोपवीतार्थे'[2] इत्येष कल्पस्तदा न भवति ॥

---

*'उपस्थं कृत्वा—उपस्थशब्द आसनविशेषं ब्रूते, आकुञ्चितस्य सव्यजानुन उपरि दक्षिणपादप्रक्षेपे सति यत् सुखावस्थानं भवति तत् कृत्वा' इति तै. आ. २-११-३ माधवीयव्याख्याने.

[1] मनुस्मृ. २-२०३.　　[2] आप. ध. २-४-२२.

अधोनिवीतस्त्वेकवस्त्रः ॥१९॥

यदा त्वेकवस्त्रो भवति तदाधोनिवीतस्स्यात, न तस्य दीर्घस्याप्येकदेशेनोत्तरीयं कुर्यात् ॥

अभिमुखोनभिमुखम् ॥२०॥

स्वयमाचार्याभिमुख आत्मानं प्रत्यनभिमुखमाचार्यमुपासीत । स्वयमाचार्यमेव पश्यन्नाचार्यस्य पुरत आर्जवेनासीत ॥

अनासन्नोनातिदूरे ॥ २१ ॥

अत्यासन्न अतिदूरे च न स्यात् ॥

यावदासीनो बाहुभ्यां प्राप्नुयात् ॥ २२ ॥

यावत्यन्तराळे आसीन आचार्यं बाहुभ्यां*प्राप्नुं शक्नुयात्तावत्यासीत ॥

अप्रतिवातम् ॥ २३ ॥

आचार्यस्य प्रतिवातं नासीत ॥

एकाध्यायी दक्षिणं बाहुं प्रत्युपसीदेत् ॥ २४ ॥

यदा एक एवाधीते तदाऽऽचार्यस्य दक्षिणं बाहुं प्रति दक्षिणपार्श्वे उपसीदेत् उपविशेत् ॥

यथावकाशं बहवः ॥ २५ ॥

बहवस्तु शिष्या यथावकाशमुपसीदेयुः ॥

---

* ङ—आचार्यबाहुभ्याम्.

ति[illegible]ठति च नासीताना[illegible]नयोगविहिते ॥ २६ ॥

आसनयोग आस[illegible] । आ[illegible]नयोगे[illegible] विहित[illegible] भावि[illegible] [illegible]सनयोग्यानि[illegible]त. । आ[illegible]योगेनासम्भाविते आ[illegible]र्यें [illegible]न[illegible]यं नासीत ॥

आ[illegible]ने च न संविशेत ॥ २७ ॥

अशयनयोगविहित इति पूर्वा[illegible] गम्यते । [illegible]शयनयोगासम्भाविते आचार्यें आसीने स्वयं न संविशेत् न शयीत ॥

चेष्टति च चिकीर्षन् तच्छक्तिविषये ॥ २८ ॥

व्यत्ययेन परस्मैपदम् । आचार्ये चेष्टति सति स्वयमपि चिकीर्षन् स्यात् । किमविशेषेण? तच्छक्तिविषये, यद्याचार्येण क्रियमाणमात्मनश्शक्तेर्विषयो भवति । चिकीर्षन्निति सन्प्रत्ययप्रयोगादिच्छामेव प्रदर्शयेत्, नाच्छिद्य कुर्यात् । प्रदर्शितायामिच्छायामाचार्यश्चेदनुजानीयात्कुर्यात् । अशक्तिविषये तु नेच्छापि प्रदर्शयितव्या । चिकीर्षेदिति युक्तः पाठः ॥

न चास्य सकाशेऽन्ववस्थानिनमुपसङ्गृह्णीयात् ॥ २९ ॥

आचार्यव्यतिरिक्ता गुरवोऽन्ववस्थानिन इति स्मार्तो व्यवहारः; 'आचार्यश्श्रेष्ठो गुरूणाम्'[1] तमवेक्ष्यान्ववस्थानं पदमेषामिति कृत्वा । आचार्यस्य सन्निधावन्ववस्थानिनं नोपसङ्गृह्णीयात् ॥

---

[1] गौ. ध. २-५०.

गोत्रेण वा कीर्तयेत् ॥ ३० ॥

न चैनमन्वक्स्थानिनं गोत्रेणाभिजनकुलादिना वा कीर्तयेत् स्तुवीत भार्गवोयं महाकुलप्रसूत इति ॥

न चैनं प्रत्युत्तिष्ठेदनूत्तिष्ठेद्वा ॥ ३१ ॥

प्रत्युत्थानमप्यस्य न कर्तव्यमाचार्यस्य सकाशे। यदा पुनराचार्यस्य सकाशे आसित्वा गमनायोत्तिष्ठति तदानूत्थानमपि न कर्तव्यम् ॥

अपि चेत्तस्य गुरुस्स्यात् ॥ ३२ ॥

यद्यप्यसौ तस्याचार्यस्य मातुलादिर्गुरुस्स्यात्तदा। 'आचार्यप्राचार्यसन्निपाते'[1] इति पूजां वक्ष्यति, तेनैव न्यायेन मातुलादिष्वपि प्रसङ्गे इदमुक्तम् ॥

देशात्त्वासनाच्च संसर्पेत् ॥ ३३ ॥

किन्तु देशादासनाच्च संसर्पेत्तस्य सम्मानार्थम् ॥

नाम्ना तदन्तेवासिनं गुरुमप्यात्मन इत्येके॥ ३४॥

तस्याचार्यस्यान्तेवासिनं नाम्नैव कीर्तयेत्, यज्ञशर्मन्निति, यद्यप्यसावात्मनो गुरुर्भवतीत्येके मन्यन्ते। स्वपक्षस्तु गुरोर्नामग्रहणं न कर्तव्यमिति ॥

---

[1]आप. ध. १-८-१९.

**यस्मिꣳस्त्वनाचार्यसम्बन्धाद्गौरवं वृत्तिस्तस्मिन्नन्वक्स्थानीयेप्याचार्यस्य ॥ ३५ ॥**

यस्मिंस्तु पुरुषे शिष्याचार्यभावमन्तरेणापि विद्याचारित्रादिना लौकिकानां गौरवं तस्मिन्नन्वक्स्थानीयेपि आचार्ये या वृत्तिस्सा कर्तव्या, अन्वक्स्थानी[ये]प्यनन्वक्स्था[नीयै]व[1] ॥

**भुक्त्वा चास्य सकाशे नानूत्थायोच्छिष्टं प्रयच्छेत् ॥ ३६ ॥**

आचार्यस्य भुञ्जानस्याभुञ्जानस्य वा सकाशे भुक्त्वा अनूत्थाय । छान्दसो दीर्घः । उत्थानमकृत्वा उच्छिष्टं न प्रयच्छेत्, 'आर्याय वा पर्यवदध्यात्'[2] इति यद्विहितम् ॥

**आचामेद्वा ॥ ३७ ॥**

आचमनमप्यनुत्थाय न कुर्यात् ॥

**किं करवाणीत्यामन्त्र्य ॥ ३८ ॥**

आचम्य किं करवाणीति गुरुमामन्त्र्य ॥

इति षष्ठः खण्डः.

---

**उत्तिष्ठेत्तूष्णीं वा ॥ १ ॥**

विकल्पः । आमन्त्र्येति लिङ्गादुत्थायाप्याचमनं न कुर्यात्,[3] आचार्यसकाश एवाचामेत् ॥

---

[1] घ—अन्वक्स्थानीयोप्यनन्वक्स्थानीय एव. क—अन्वक्स्थानीयोप्यन्वक्स्थान्येव.

[2] आप. ध. १-३-४०.

[3] घ. छ—'न कुर्यात्' इति भागो न दृश्यते.

**नापपर्यावर्तेत गुरोः प्रदक्षिणीकृत्यापेयात् ॥२॥**

उत्थाय कार्यवत्तया गन्तुमिच्छन् गुरोरपसव्यं न पर्यावर्तेत, किन्तु प्रदक्षिणीकृत्यापेयात् ॥

**न प्रेक्षेत नग्नां स्त्रियम् ॥ ३ ॥**

यां प्रेक्षमाणस्य मनसो विकारो भवति तां नग्नां स्त्रियं नेक्षेत ॥

**ओषधिवनस्पतीनामाच्छिद्य नोपजिघ्रेत् ॥ ४॥**

ओषधयः फलपाकान्ताः, वनस्पतयः ये पुष्पैर्विना फलन्ति, वीरुद्वृक्षाणामप्युपलक्षणम् । तेषां पत्रपुष्पाद्याच्छिद्य नोपजिघ्रेत् । आच्छिद्येति वचनाद्यादृच्छिके गन्धग्रहणे न दोषः ॥

**उपानहौ छत्रं यानमिति च वर्जयेत् ॥ ५ ॥**

यानं शकटादि । इतिशब्द एवम्प्रकाराणामुपलक्षणार्थः । तत्र गौतमः—'वर्जयेन्मधुमांसगन्धमाल्यदिवास्वप्नाञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोधलोभमोहवादवादनस्नानदन्तधावनहर्षनृत्तगीतपरिवादभयानि '[1] इति ॥

**न स्मयेत ॥ ६ ॥**

स्मितं न कुर्यात् ॥

**यदि स्मयेतापिगृह्य स्मयेतेति हि ब्राह्मणम् ॥७॥**

यदि हर्षातिरेकाद्धारयितुं न शक्नोति तदा अपिगृह्य हस्तेन मुखं पिधाय स्मयेत, इति ब्राह्मणं न स्मयेतेत्यारभ्य ॥

---

[1] गौ. ध. २-१३.

**नोपजिघ्रेत्स्त्रियं मुखेन ॥ ८ ॥**

स्नातामनुलिप्ताङ्गीं वा स्त्रियं बालामपि मुखेन नोपजिघ्रेत् । मुखेनेति वचनाद्याट्टच्छिके गन्धग्रहणे न दोषः ॥

**न हृदयेन प्रार्थयेत् ॥ ९ ॥**

हृदयेन मनसा स्त्रियं न प्रार्थयेत् अपीयं मे स्यादिति ॥

**नाकारणादुपस्पृशेत् ॥ १० ॥**

कारणेन विना स्त्रियं नोपस्पृशेत् । कारणं योक्त्रसन्नहनविमोचनविषमपतनधारणादि ॥

**रजस्वलो रक्तदन्तसत्यवादी स्यादिति ब्राह्मणम् ॥ ११ ॥**

रजस्वलो मलिनगात्रः, रक्ता दन्ता यस्य स रक्तदन् । छान्दसो दत्रादेशः । पङ्किलदन्त इत्यर्थः । तदुभयम् 'उत्सन्नश्लाघः'[1] इत्यनेन गतमपि पुनरुच्यते श्रौतप्रायश्चित्तमतिक्रमे स्यादिति । 'अनृतं वोक्त्वा'[2] इति प्रायश्चित्तं वक्ष्यति । सत्यवादी स्यादिति ब्राह्मणम् ॥

**यां विद्यां कुरुते गुरौ तेऽप्यस्याचार्या यस्तस्यां गुरोर्वंश्याः ॥ १२ ॥**

आत्मीये गुरौ यां विद्यां कुरुतेऽधीते तस्यां विद्यायां गुरोर्ये वंश्या आचार्यास्तेऽप्यस्य माणवकस्याचार्याः । यद्यपि साक्षात्तेभ्यो न गृह्यते विद्या, तथापि त आचार्यवदुपचरितव्याः । तस्यामिति वचनाद्विद्यान्तरेषु ये वंश्यास्तेषु नायं विधिः ॥

---

[1] आप, ध. २–२७.    [2] आप, ध. १–२६–३.

**यानन्यान्पश्यतोऽस्योपसङ्गृह्णीयात्तदा त्वेत उपसङ्ग्राह्याः ॥ १३ ॥**

अस्य माणवकस्य पश्यतः अस्मिन्माणवके पश्यति यानन्यानाचार्य उपसङ्गृह्णीयात्ते माणवकस्याप्युपसङ्ग्राह्याः । किं सदा? नेत्याह—'तदा त्वेते'[1] इति, तस्यां दशायाम् । अपर आह—तदा प्रभृत्येत उपसङ्ग्राह्याः । तुशब्दात्समावृत्तेनापि ॥

**गुरुसमवाये भिक्षायामुत्पन्नायां यमनुबद्धस्तदधीना भिक्षा ॥ १४ ॥**

यदा द्वितीयं तृतीयं वा वेदमधीयानस्य माणवकस्य गुरुसमवायो भवति गुरवः समवेता भवन्ति तदा भिक्षायामुत्पन्नायां यं गुरुमिदानीमनुबद्धो माणवकः यतोऽधीते तदधीना भिक्षा, यदा यावच्च लब्धं तत्तस्मै निवेदनीयम् । तदुक्तश्च विनियोगः ॥

**समावृत्तो मात्रे दद्यात् ॥ १५ ॥**

कृतसमावर्तनो विवाहात्प्रागार्जितं मात्रे दद्यात् ॥

**माता भर्तारं गमयेत् ॥ १६ ॥**

माता पतिं प्रापयेत् ॥

**भर्ता गुरुम् ॥ १७ ॥**

सोऽपि गुरुं प्रापयेन्माणवकस्य । माणवकार्जितं द्रव्यं तद्गामि युक्तम् ॥

---

[1] घ. च. तदात्वे तस्यां.

धर्मकृत्येषु वोपयोजयत् ॥ १८ ॥

धर्मकृत्यानि विवाहादीनि, तेषु वोपयोजयेत्, गुरोरभावे भर्ता तदभावे माता, सर्वेषामभावे समावृत्तस्स्वयमेव वा ॥

कृत्वा विद्यां यावतीꣳ शक्नुयाद्वेददक्षिणामाहरेद्धर्मतो यथाशक्ति ॥ १९ ॥

यावतीं विद्यां कर्तुं शक्नुयाद्वेदं वेदौ वेदान्वा, तावतीं कृत्वा अधीत्य, गुरवे दक्षिणामाहरेद्दद्याद्यथाशक्ति धर्मतो लब्धां न्यायार्जिताम् ॥

धर्मत इत्यस्यापवादः –

विषमगते त्वाचार्य उग्रतश्शूद्रतो वाऽऽहरेत् ॥ २० ॥

यदा त्वाचार्यो विषमगत आपद्गतस्तदा उग्रतश्शूद्रतो वा प्रतिगृह्य दक्षिणामाहरेत् । वैश्याच्छूद्रायां जात उग्रः । उग्रकर्मा वा द्विजातिः ॥

सर्वदा शूद्रत उग्रतो वाऽऽचार्यार्थस्याहरणं धार्म्यमित्येके ॥ २१ ॥

सर्वदा आपद्यनापदि च आचार्यार्थस्याचार्याय योऽर्थो देयस्तस्योग्रतश्शूद्रतो वाऽऽहरणं धर्म्यं धर्मादनपेतमित्येके मन्यन्ते । धार्म्यमिति पाठे स्वार्थे ष्यञ् ॥

दत्वा च नानुकथयेत् ॥ २२ ॥

आचार्यायैवमाहृत्य दत्वा न कीर्तयेत् एतन्मया दत्तमिति ॥

**कृत्वा च नानुस्मरेत् ॥ २३ ॥**

[illegible] शयादौ [illegible] [illegible]कार [illegible] [illegible]
[illegible] [illegible]यैत[illegible]नमिति ॥

**आत्मप्रशंसां परग[illegible]मिति च वर्ज[illegible] २४॥**

इतिकरणादेवंप्रकाराणामा[illegible]नि दादीन[illegible]मपि प्रतिषेधः ॥

**प्रेषितस्तदेव प्रतिपद्येत ॥ २५ ॥**

इदं कुर्वित्याचार्येण प्रेषितस्तदेव प्रतिपद्येत कुर्यात् क्रियमाणमपि कर्म विहाय, यद्यपि तदाचार्यस्य भवति ॥

**शास्तुश्चानागमाद्वृत्तिरन्यत्र ॥ २६ ॥**

'तस्मिंश्चैव विद्याकर्मान्तम्'[1] इत्यस्यापवादः । यद्यधिगन्तुमिष्टा विद्या शास्तुश्शासितुराचार्यस्य सम्यङ्नागच्छति, तदा तस्यानागमादन्यत्र पुरुषान्तरे वृत्तिर्भवत्येव, यस्य सम्यगागच्छति[2] ॥

**अन्यत्रोपसङ्ग्रहणादुच्छिष्टाशनाच्चाचार्यवदाचार्यदारे वृत्तिः ॥ २७ ॥**

अन्यत्रेत्युभयोश्शेषः । आचार्यवदाचार्यदारेषु वृत्तिः कर्तव्या । किमविशेषेण ? अन्यत्रोपसङ्ग्रहणादुच्छिष्टाशनाच्च, पादोपसङ्ग्रहणमुच्छिष्टाशनं चेत्युभयं वर्जयित्वा । अत्र मनुः—

---

[1]आप. ध. १-१-१३.

[2]क. पुस्तके 'येषामाचार्यकरणविधिप्रयुक्तमध्ययनं तेषामेतन्नोपपद्यत इत्यवोचाम (१-१३)' इत्यधिकः पाठः

'गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।'[1] इति ।
गौतमस्तु—'तद्भार्यापुत्रेषु चैवम् । नोच्छिष्टाशन स्नापन सा-धनपादप्रक्षालनोन्मर्दनोपसङ्ग्रहणानि'[2] इति । दार इत्येकवचनं छान्दसम् ॥

## तथा समादिष्टेऽध्यापयति ॥ २८ ॥

य आचार्येण समादिष्टो नियुक्तोऽध्यापयति तस्मिन्नाचार्यदारवद्वृत्तिः । अध्यापयतीति वर्तमाननिर्देशाद्यावदध्यापनं तावदेवातिदेशः ॥

## वृद्धतरे च सब्रह्मचारिणि ॥ २९ ॥

अध्यापयतीति नानुवर्तते । तरब्निर्देशात् ज्ञानवयोभ्यामुभाभ्यां वृद्धो गृह्यते । सब्रह्मचारी सहाध्यायी, समाने ब्रह्मणि व्रतं चरतीति । तस्मिन्नप्याचार्यदारवद्वृत्तिः,

आचार्यात्पादमादत्ते पादं शिष्यस्स्वमेधया ।
पादं सब्रह्मचारिभ्यः पादः कालेन पच्यते ॥

इत्यध्ययने उपयोगसम्भवात् ॥

## उच्छिष्टाशनवर्जमाचार्यवदाचार्यपुत्रे वृत्तिः ॥ ३० ॥

उच्छिष्टाशनवर्जमिति वचनादुपसङ्ग्रहणं भवति । एतच्च ज्ञानवयोभ्यां वृद्धे । तदर्थं वृद्धतर इत्यनुवर्तते । गौतमीयस्तूपसङ्ग्रहणप्रतिषेधो वृद्धतरादन्यविषयः ॥

---

[1]मनुस्मृ. २-२१२.      [2]गौ. ध. २-३१,३२.

**समावृत्तस्याप्येतदेव सामयाचारिकमेतेषु॥३१॥**

कृतसमावर्तनस्याप्येतदेवानन्तरोक्तमेतेष्वाचार्यादिषु पुत्रान्तेषु सामयाचारिकं समयाचारप्राप्तं वृत्तम् । 'समादिष्टेध्यापयति'[1] इति विशेष उक्तः ॥

इति सप्तमः खण्डः.

---

**यथा ब्रह्मचारिणो वृत्तम् ॥ १ ॥**

समावृत्तस्येत्यनुवर्तते । समावृत्तस्य ब्रह्मचारिणोकृतविवाहस्य यथा वृत्तं वर्तनं तथा वक्ष्यामः ॥

**माल्यालिप्तमुख उपलिप्तकेशश्मश्रुरक्तोभ्यक्तो वेष्टित्युपवेष्टिती काञ्चुक्युपानही पादुकी ॥**

माली माल्यवान् । आलिप्तमुखश्चन्दनादिना । मुखग्रहणमुपलक्षणं, 'मुखमग्रे ब्राह्मणोनुलिम्पेत्'[2] इत्याश्वलायनवचनात् । सुगन्धिभिरामलकादिभिर्द्रव्यैरुपलिप्तं संस्कृतं केशश्मश्रु यस्य स उपलिप्तकेशश्मश्रुः । अक्तः अञ्जनेनाक्ष्णोः । अभ्यक्तस्तैलेन । वेष्टिती, वेष्टितशिराः । उपवेष्टिती, कटिप्रदेशो द्वितीयेन वाससा वेष्टितो यस्य स उपवेष्टिती । कञ्चुकं चोपानच्च कञ्चुकोपानहम् । 'द्वन्द्वाच्चुदषहान्तात्' इत्यच्समासान्तः । तदस्यास्ति कञ्चुकोपानही । 'द्वन्द्वोपतापगर्ह्यात्' इतीनिप्रत्ययः । प्रसिद्धे पाठे कञ्चुकमेव काञ्चुकं तद्वान्

---

[1] आश्व. गृ. ३-८-११. [2] आप. ध. ७-२८.

काञ्चुकी । उपानद्वानुपानही । व्रीह्यादित्वादिनिः । पादुके दारुमये पादरक्षणे, तद्वान्पादुकी ॥

उदाचारेषु चास्यैतानि न कुर्यात्कारयेद्वा ॥ ३ ॥

अस्याचार्यादेः पुत्रान्तस्य उदाचारेषु दृष्टिगोचरेषु देशेषु एतानि माल्यादीनि न कुर्यात् कारयेद्वा ॥

स्वैरिकर्मसु च ॥ ४ ॥

एतानि न कुर्यात्कारयेद्वा ।

अत्रोदाहरणम्—

यथा दन्तप्रक्षाळनोत्सादनावलेखनानीति ॥५॥

दन्तप्रक्षाळनं दन्तधावनम् । उत्सादनमुद्वर्तनम् । अवलेखनं कङ्कतादिना केशानां विभागेनावस्थापनम् । इतिशब्दः प्रदर्शनार्थः, तेन भोजनमूत्रोच्चारादिष्वपि प्रतिषेधः ॥

तद्द्रव्याणां च न कथयेदात्मसंयोगेनाचार्यः ॥६॥

तस्य शिष्यस्य गृहस्थीभूतस्य यानि द्रव्याण्युपस्थापितानि[1] तेषां मध्ये एकेनापि द्रव्येण यथात्मा संयुज्यते न तथा कथयेत्। आचार्यश्शिष्यगृहं प्रत्यागतः अहो ! दर्शनीयं भोजनपात्रमित्यादि लिप्सा यथा गम्यते तथा न कथयेदिति ॥

स्नातस्तु काले यथाविध्यभिहृतमाहूतोभ्येतो वा न प्रतिसंहरेदित्येके ॥ ७ ॥

'वेदमधीत्य स्नास्यन्'[2] इति विधिना स्नातः तस्मिन्काले यथाविध्यभिहृतमाबद्धं[3] स्रगाद्याचार्येणाहूतस्स्वयमेव वा तत्समीप-

[1]ग. ङ—उपस्थितानि. [2]आप. गृ॰ १२-१. [3]क—हृतं लब्धं.

मभ्येतो न प्रतिसंहरेन्न विमुञ्चेदित्येके मन्यन्ते । स्वपक्षस्तु तदापि प्रतिमुञ्चेदिति । 'काले यथाविध्यभिहृतम्' इति वचनादपरेद्युरारभ्य प्रतिसंहरेदेव ॥

उच्चैस्तरां नासीत ॥ ८ ॥

स्वार्थे तरप् । आचार्यस्यासनादुच्चतर आसने नासीत ॥

तथा बहुपादे ॥ ९ ॥

नीचेप्यासने बहुपादे नासीत ॥

सर्वतः प्रतिष्ठिते ॥ १० ॥

आसने त्वासीत । आचार्यं पीठादावुपवेश्य स्वयं वेत्रासनादावासीत[1], तद्धि भूमौ सर्वतः प्रतिष्ठितं भवति ॥

शय्यासने चाचरिते नाविशेत् ॥ ११ ॥

आचार्येणाचरित उपभुक्ते शय्यासने नाविशेत् । शयने न शयीत, आसने नासीत । पित्रादिष्वपि गुरुषु समानमिदम् । तथा च मनुरविशेषेणाह—

'शय्यासने चाध्युषिते श्रेयसा न समाश्रयेत्'[2] । इति ।

गतं समावृत्तस्य वैशेषिकम् । अथ ब्रह्मचर्यविधेरेव शेषः—

यानमुक्तोध्वन्यन्वारोहेत् ॥ १२ ॥

यानं शकटादि, आरोहेत्युक्तो गुरुणा पश्चादारोहेत् । 'छत्रं

---

[1] 'सर्वतः प्रतिष्ठिते आसने नासीत । आचार्यं......वेत्रासनादौ नासीत' इति मुम्बैमुद्रितपुस्तके.

[2] मनु. २-११९.

यानमिति वर्जयेत्'[1] इति पूर्वोक्तस्य प्रतिषेधस्यापवादः । यानं च गुर्वारूढमन्यद्वा ॥

## सभानिकषकटस्वस्तरांश्च ॥ १३ ॥

उक्तोन्वारोहेदित्येव । 'सभास्समाजांश्चागन्ता'[2] इत्यस्यापवादार्थं सभाग्रहणम् । निकषो नाम कृषीवलानामुपकरणम्, कृष्टं क्षेत्रं येन समीक्रियते । तच्च कस्मिंश्चिदारूढे केनचिदाकृष्यते[3] । तत्र गुरुणाकृष्यमाणेपि तेनोक्तस्सन्नारोहेत्, न त्वनौचित्यभयान्नारोहेदिति । कटो वीरणनिर्मिता शय्या । तत्र गुरुणोक्तस्सन् सहासीत । उत्सवादावेष आचारः । स्वस्तरो नाम पलालशय्या, 'नवस्वस्तरे संविशन्ति' इति दर्शनात् । तत्रापि गुरुणोक्तस्सन् सहासनादि कुर्यात् ॥

## नानभिभाषितो गुरुमभिभाषेत प्रियादन्यत् ॥ १४ ॥

गुरुणानभिभाषितो गुरुं प्रति न किञ्चिद्ब्रूयात् प्रियादन्यत् । प्रियवचनं तु ब्रूयात् यथा पुत्रो जात इति ॥

## व्युपतोदव्युपजापव्यभिहासोदामन्त्रणनामधेयग्रहणप्रेषणानीति गुरोर्वर्जयेत् ॥१५॥

व्युपतोदोङ्गुल्यादिना घट्टनम्, यदाभिमुख्यार्थं क्रियते । व्युपजापः कर्णयोर्मुहुर्जल्पनम् । वकारश्छान्दसोपपाठो वा । व्यभि-

---

[1]आप. ध. १-७-५.   [2]आप. ध. १-३-१२.

[3]'कृष्यमाणे क्षेत्रं समं भवति' मुम्बैपुस्तके.

मभ्येतो न प्रतिसंहरेन्न विमुञ्चेदित्येके मन्यन्ते । स्वपक्षस्तु तदापि प्रतिमुञ्चेदिति । 'काले यथाविध्यभिहृतम्' इति वचनादपरेद्युरारभ्य प्रतिसंहरेदेव ॥

**उच्चैस्तरां नासीत ॥ ८ ॥**

स्वार्थे तरप् । आचार्यस्यासनादुच्चतर आसने नासीत ॥

**तथा बहुपादे ॥ ९ ॥**

नीचेप्यासने बहुपादे नासीत ॥

**सर्वतः प्रतिष्ठिते ॥ १० ॥**

आसने त्वासीत । आचार्यं पीठादावुपवेश्य स्वयं वेत्रासनादावासीत[1], तद्धि भूमौ सर्वतः प्रतिष्ठितं भवति ॥

**शय्यासने चाचरिते नाविशेत् ॥ ११ ॥**

आचार्येणाचरित उपभुक्ते शय्यासने नाविशेत् । शयने न शयीत, आसने नासीत । पित्रादिष्वपि गुरुषु समानमिदम् । तथा च मनुरविशेषेणाह—

'शय्यासने चाध्युषिते श्रेयसा न समाश्रयेत्'[2] । इति ।

गतं समावृत्तस्य वैशेषिकम् । अथ ब्रह्मचर्यविधेरेव शेषः—

**यानमुक्तोध्वन्यन्वारोहेत् ॥ १२ ॥**

यानं शकटादि, आरोहेत्युक्तो गुरुणा पश्चादारोहेत् । 'छत्रं

---

1 'सर्वतः प्रतिष्ठिते आसने नासीत । आचार्यं......वेत्रासनादौ नासीत' इति मुम्बैमुद्रितपुस्तके.

2 मनु. २–११९.

यानमिति वर्जयेत्'[1] इति पूर्वोक्तस्य प्रतिषेधस्यापवादः । यानं च गुर्वारूढमन्यद्वा ॥

## सभानिकषकटस्वस्तरांश्च ॥ १३ ॥

उक्तोन्वारोहेदित्येव । 'सभास्समाजांश्चागन्ता'[2] इत्यस्यापवादार्थं सभाग्रहणम् । निकषो नाम कृषीवलानामुपकरणम्, कृष्टं क्षेत्रं येन समीक्रियते । तच्च कस्मिंश्चिदारूढे केनचिदाकृष्यते[3] । तत्र गुरुणाकृष्यमाणेपि तेनोक्तस्सन्नारोहेत्, न त्वनौचित्यभयान्नारोहेदिति । कटो वीरणनिर्मिता शय्या । तत्र गुरुणोक्तस्सन् सहासीत । उत्सवादावेष आचारः । स्वस्तरो नाम पलालशय्या, 'नवस्वस्तरे संविशन्ति' इति दर्शनात् । तत्रापि गुरुणोक्तस्सन् सहासनादि कुर्यात् ॥

## नानभिभाषितो गुरुमभिभाषेत प्रियादन्यत् ॥ १४ ॥

गुरुणानभिभाषितो गुरुं प्रति न किञ्चिद्ब्रूयात् प्रियादन्यत् । प्रियवचनं तु ब्रूयात् यथा पुत्रो जात इति ॥

## व्युपतोदव्युपजापव्यभिहासोदामन्त्रणनामधेयग्रहणप्रेषणानीति गुरोर्वर्जयेत् ॥१५॥

व्युपतोदोङ्गुल्यादिना घट्टनम्, यदाभिमुख्यार्थं क्रियते । व्युपजापः कर्णयोर्मुहुर्जल्पनम् । वकारश्छान्दसोपपाठो वा । व्यभि-

[1]आप. ध. १–७–५.        [2]आप. ध. १–३–१२.

[3]'कृष्यमाणे क्षेत्रं समं भवति' मुम्बैपुस्तके.

हासः आभिमुख्येन हसनम् । उदामन्त्रणमुच्चैस्सम्बोधनं यथा बधिरं प्रति । नामधेयग्रहणं दशम्यां पितृविहितस्य नामधेयस्य ग्रहणम्, न पूज्यनाम्नो भगवदादेः । प्रेषणमाज्ञापनम् । एतानि गुरुविषये न कर्तव्यानि । इतिकरणादेवम्प्रकाराणां चान्येषामपि प्रतिषेधः । यथाह मनुः—

नोदाहरेत्तस्य नाम परोक्षमपि केवलम् ।
न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम्[1] ॥ इति ॥

**आपद्यर्थं ज्ञापयेत् ॥ १६ ॥**

आपदि व्युपतोदादिभिरप्यर्थमभिप्रेतं ज्ञापयेत् । असति पुरुषान्तरे वचनेनापि बोधयेत्, न साक्षात्प्रेषयेत्; यथा शूलतोदो मे भवति, स चाग्निना शाम्यति, न चात्र कश्चित्सन्निहितः, किं करोमि मन्दभाग्य इति ॥

उत्तरे सूत्रे समावृत्तविषये—

**सहवसंत्सायम्प्रातरनाहूतो गुरुं दर्शनार्थो गच्छेत् ॥ १७ ॥**

एकस्मिन्ग्रामे वसन् सायम्प्रातरनाहूतोपि गुरुं दर्शनार्थो नान्यप्रयोजनार्थो गच्छेत् ॥

**विप्रोष्य च तदहरेव पश्येत् ॥ १८ ॥**

यदा ग्रामान्तरं गतः प्रत्यागच्छति तदा तदहरेवाचार्यं पश्येत् ॥

---

[1]मनुस्मृ. २-१९९.

आचार्यप्राचार्यसन्निपाते प्राचार्यायोपसङ्गृह्योपसञ्जिघृक्षेदाचार्यम् ॥ १९ ॥

आचार्यस्याचार्यः प्राचार्यः, प्रपितामह इतिवत् । यदा आचार्यस्य प्राचार्यस्य च कार्यवशात्सन्निपातो मेळनं भवति, तदा प्राचार्याय । द्वितीयार्थे चतुर्थी । प्राचार्यं पूर्वमुपसङ्गृह्य पश्चात्स्वाचार्यमुपसङ्गृहीतुमिच्छेत् । न केवलं मनसा, किन्तु, यथाचार्यो जानाति मामयमुपसञ्जिघृक्षतीति तथा चेष्टेत । अन्यथाऽदृष्टार्थमुपदिष्टं स्यात् ॥

प्रतिषेधेदितरः ॥ २० ॥

इतर आचार्यः प्रतिषेधेत्, वत्स मोपसङ्ग्रहीरिति ॥

लुप्यते पूजा चास्य सकाशे ॥ २१ ॥

अस्य प्राचार्यस्य सकाशे सन्निधौ आचार्यस्य पूजा लुप्यते न कार्या, न केवलमुपसङ्ग्रहणमेव ॥

उत्तरसूत्रं समावृत्तविषयम्—

मुहूंश्चाचार्यकुलं दर्शनार्थो गच्छेद्यथाशक्त्यधिहस्त्यमादायापि दन्तप्रक्षाळनानीति ॥२२॥

मुहूंश्चेत्यनुस्वारदीर्घौ छान्दसौ । वीप्सालोपश्चात्र द्रष्टव्यः । मुहुर्मुहुरिति विवक्षितम् । ग्रामान्तरे वसन्नपि मुहुर्मुहुराचार्यकुलं दर्शनार्थो गच्छेत् । यथाशक्ति गोरसापूपाद्यधिहस्त्यं

हस्तेभवमादाय स्वयमेव गृहीत्वेत्यर्थः । अपिशब्दः अभावेपि विधिं द्योतयति, गोरसाद्यभावे दन्तकाष्ठान्यपीति । इतिशब्दो-न्तेवासिधर्माणां समाप्तिद्योतनार्थः ॥

*तस्मिन्गुरोर्वृत्तिः ॥ २३ ॥

तस्मिन्नन्तेवासिनि गुरोर्वृत्तिर्वृत्तेः प्रकारो वक्ष्यते ॥

पुत्रमिवैनमनुकाङ्क्षन्त्सर्वधर्मेष्वनपच्छादयमान-स्सुयुक्तो विद्यां ग्राहयेत् ॥ २४ ॥

एनं शिष्यं पुत्रमिवास्याभ्युदयस्स्यादित्यनुकाङ्क्षन्त्सर्वेषु धर्मे-ष्वप्यनपच्छादयमानः अगूहन् सुयुक्तः सुष्ठ्ववहितस्तत्परो भूत्वा विद्यां ग्राहयेत् ॥

न चैनमध्ययनविघ्नेनात्मार्थेषूपरुन्ध्यादनापत्सु ॥ २५ ॥

न चैनं शिष्यमध्ययनविघ्नेनात्मप्रयोजनेषूपरुन्ध्यात् । उप-रोधोऽस्वतन्त्रीकरणम् । अनापत्स्विति वचनादापद्यध्ययनविघा-तेनाप्युपरोधे न दोषः ॥

अन्तेवास्यनन्तेवासी भवति विनिहितात्मा गु-रावनैपुणमापद्यमानः ॥ २६ ॥

आपद्यमान इत्यन्तर्भावितण्यर्थः । योन्तेवासी विनिहितात्मा

*इतःपूर्वं 'मातरं पितरमाचार्यमग्नीꣳश्च गृहाणि च रिक्तपाणिर्नोपगच्छेत्' इति सूत्रं ग. च. पुस्तकयोः दृश्यते ॥

द्वयोराचार्ययोर्विधिवन्निहितात्मा गुरावनैपुणमापादयति, नानेनायं प्रदेशस्सम्यगुक्त इति, सोन्तेवासी न भवति, स त्याज्य इत्यर्थः । अत्र मनुः—

धर्मार्थौ यत्र न स्यातां शुश्रूषापि न तद्विधा ।
तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे[1] ॥

अपर आह—योन्तेवासी वाङ्मनःकायकर्मभिरनैपुणमापद्यमानः गुरौ विसदृशं निहितात्मा भवत्यनुरूपं न शुश्रूषते, सोन्तेवासी न भवति ॥

**आचार्योप्यनाचार्यो भवति श्रुतात्परिहरमाणः ॥ २७ ॥**

आचार्योप्यनाचार्यो भवतीति, त्याज्य इत्यर्थः । किं कुर्वन्? श्रुतात्परिहरमाणः, तेनतेन व्याजेन विद्याप्रदानमकुर्वन् ॥

**अपराधेषु चैनꣳ सततमुपालभेत ॥ २८ ॥**

अपराधेषु कृतेषु एनं शिष्यं सततमुपालभेत, इदमयुक्तं त्वया कृतमिति ॥

**अभित्रास उपवास उदकोपस्पर्शनमदर्शनमिति दण्डा यथामात्रमानिवृत्तेः ॥ २९ ॥**

अभित्रासो रज्जुवेण्वादिना भयोत्पादनम् । उपवासो भोजनलोपः । उदकोपस्पर्शनं शीतोदकेन स्नापनम् । अदर्शनं यथासा-

---

[1] मनुस्मृ. २-११२.

वात्मानं न पश्यति तथा करणम्, गृहप्रवेशनिषेधः । सर्वत्र ण्यन्तात्प्रत्ययः । इत्येते दण्डाश्शिष्यस्य यथामात्रं यावत्यपराधमात्रा तदनुरूपं व्यस्तास्समस्ताश्च । आ निवृत्तेः, यावदसौ ततोपराधान्निवर्तते तावदेते दण्डाः ॥

निवृत्तं चरितब्रह्मचर्यमन्येभ्यो धर्मेभ्योनन्तरो भवेत्यतिसृजेत् ॥ ३० ॥

एवं चरितब्रह्मचर्यं निवृत्तं गुरुकुलात्, कृतसमावर्तनमित्यर्थः। एवम्भूतमेनमन्येभ्यो धर्मेभ्यो यमसावाश्रमं प्रतिपत्स्यते तत्र तेभ्यो धर्मेभ्योनन्तरो भव, तेभ्यो धर्मेभ्यो यथा त्वमन्तरितो न भवसि तथा भवेत्युक्त्वातिसृजेत् तमाश्रमं प्रतिपत्तुमुत्सृजेत् ॥

इत्यष्टमः खण्डः.

इति श्रीहरदत्तमिश्रविरचितायां आपस्तम्बधर्मसूत्रव्याख्यायां उज्ज्वलाख्यायां द्वितीयः पटलः.

---

श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत ॥ १ ॥

एवमध्येतुरध्यापयितुश्च धर्मा उक्ताः । अथ देशकालकृताध्ययनधर्मा उच्यन्ते—

मेषादिस्थे सवितरि यो यो दर्शः प्रवर्तते ।
चान्द्रमासास्तत्तदन्ताश्चैत्राद्या द्वादश स्मृताः ॥
तेषु या या पौर्णमासी सा सा चैत्रादिका स्मृता ।
कादाचित्केन योगेन नक्षत्रस्येति निर्णयः ॥

तदेवं सिंहस्थे सवितरि यामावास्या तदन्ते चान्द्रमसे मासे या मध्यवर्तिनी पौर्णमासी सा श्रावणी। श्रवणयोगस्तु भवतु, मा वा भूत्। तस्यां श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य गृह्योक्तेन विधिनोपाकर्म कृत्वा स्वाध्यायमधीयीत। अधीयानश्च मासमेकं प्रदोषे प्रथमे रात्रिभागे, नाधीयीत ग्रहणाध्ययनं धारणाध्ययनं च न कुर्यात्। प्रदोषग्रहणाद्रात्रावप्यूर्ध्वं न दोषः॥

## तैष्यां पौर्णमास्याꣳरोहिण्यां वा विरमेत्॥ २॥

तिष्यः पुष्यः तेन युक्ता पौर्णमासी तैषी, श्रावणीवत्। तस्यां विरमेत् उत्सर्जनं कुर्यात्। तस्यापि प्रयोगो गृह्योक्त एव। रोहिण्यां वा, तैषे मासि तिष्यात्पूर्वा या रोहिणी तस्यां वा विरमेत्। अनयोः पक्षयोः पञ्च मासानधीयीत॥

## अर्धपञ्चमाꣳश्चतुरो मासानित्येके॥ ३॥

अर्धं पञ्चमं येषां ते अर्धपञ्चमाः। अर्धाधिकांश्चतुरो मासानधीयीतेत्येके मन्यन्ते। अस्मिन्पक्षे प्रोष्ठपद्यामुपाकरणम्, शाखान्तरदर्शनात् उत्सर्जनस्य वापकर्षः†। उत्सर्जने कृते श्रावण्याः प्राक् शुक्लपक्षेषु धारणाध्ययनं वेदस्य, कृष्णपक्षेषु व्याकरणाद्यङ्गानामध्ययनम्, पुनश्च श्रावण्यामुपाकृत्य अगृहीतभागस्य ग्रहणाध्ययनमिति। प्रपञ्चितमेतद्गृह्ये*॥

## निगमेष्वध्ययनं वर्जयेत्॥ ४॥

निगमाश्चत्वराः, ग्रामनिर्गममार्गा वा, नियमेन गम्यन्ते येष्विति। तेषु सर्वप्रकारमध्ययनं वर्जयेत्॥

---

*आप.गृ. ८-१

†झ. ञ—प्रतिकर्षः.

**आनडुहेन वा शकृत्पिण्डेनोपलिप्तेधीयीत ॥५॥**

अनडुत्सम्बन्धिना शकृत्पिण्डेन उपलिप्य निगमेष्वधीयीत ॥

**श्मशाने सर्वतश्शम्याप्रासात् ॥ ६ ॥**

श्मशाने चाध्ययनं वर्जयेत्। सर्वतस्सर्वासु दिक्षु शम्याप्रासात्। पञ्चमीनिर्देशादर्वागिति गम्यते। शम्या क्षिप्ता यावति देशे पतति ततोर्वागिति ॥

**ग्रामेणाध्यवसिते क्षेत्रेण वा नानध्यायः ॥ ७ ॥**

यदा श्मशानं ग्रामतया क्षेत्रतया वाध्यवसितं स्वीकृतं भवति तदा नानध्यायः, अध्येतव्यमेव ॥

**ज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत ॥ ८ ॥**

यदा तु तदध्यवसितमपि श्मशानं ज्ञायते अयं स प्रदेश इति, तदा तावत्येव प्रदेशे नाधीयीत, न शम्याप्रासात् ॥

**श्मशानवच्छूद्रपतितौ ॥ ९ ॥**

शूद्रपतितयोस्सकाशेपि शम्याप्रासान्नाध्येयम् ॥

**समानागार इत्येके ॥ १० ॥**

एके मन्यन्ते समानागारे शूद्रपतितौ वर्ज्यौ, न शम्याप्रासादिति ॥

**शूद्रायां तु प्रेक्षणप्रतिप्रेक्षणयोरेवानध्यायः॥११॥**

शूद्रायां तु यदा परस्परप्रेक्षणं भवति, तदैवानध्यायः, न समानागारे' नापि शम्याप्रासादिति ॥

तथान्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने ॥ १२ ॥

शूद्राव्यतिरिक्तापि या स्त्री मैथुने वर्णव्यतिक्रान्ता नीचवर्णगामिनी, तस्यामपि प्रेक्षणप्रतिप्रेक्षणयोरेवानध्यायः ॥

ब्रह्माध्येष्यमाणो मलवद्वाससेच्छन्त्सम्भाषितुं ब्राह्मणेन सम्भाष्य तया सम्भाषेत सम्भाष्य तु ब्राह्मणेनैव सम्भाष्याधीयीतैवं तस्याः प्रजानिश्श्रेयसम् ॥ १३ ॥

यो वेदमध्येष्यमाणो मलवद्वाससा रजस्वलया सह सम्भाषितुमिच्छति, स पूर्वं ब्राह्मणेन सम्भाष्य पश्चात्तया सम्भाषेत । सम्भाष्य च पुनरपि ब्राह्मणेनैव सम्भाष्याधीयीत । किमेवं सति भवति? एवं तस्या मलवद्वासस आगामिनी या प्रजा तस्या निश्श्रेयसमभ्युदयो भवति । प्रजारूपं वा निश्श्रेयसं तस्या भवति । प्रजानिश्श्रेयसमिति वचनाद्विधवादिभिस्सम्भाषणे नैतत्कर्तव्यम् ॥

अन्तश्शवम् ॥ १४ ॥ अन्तश्चाण्डालम् ॥ १५ ॥

अन्तश्शवो यत्र ग्रामे तत्र नाध्येयम् । एतेनान्तश्चाण्डालमिति व्याख्यातम् । चण्डाल एव चाण्डालः । उभयत्र प्रथमा सप्तम्यर्थे, अव्ययीभावो वा विभक्त्यर्थे द्रष्टव्यः ॥

अभिनिर्हृतानां तु सीम्न्यनध्यायः ॥ १६ ॥

यदा तु शवा ग्रामसीम्न्यभिनिर्हृता भवन्ति तदा तत्रानध्यायः ॥

**सन्दर्शने चारण्ये ॥ १७ ॥**

अरण्ये च यावति प्रदेशे शवश्चाण्डालो वा दृश्यते तावत्यनध्यायः ॥

**तदहरागतेषु च ग्रामं बाह्येषु ॥ १८ ॥**

बाह्या उग्रनिषादादयः परिपन्थिनः । तेषु च ग्राममागतेषु तदहरनध्यायः । तस्मिन्नहनि नाध्येतव्यम् ॥

**अपि सत्सु ॥ १९ ॥**

ये विद्याचारित्रादिभिर्महान्तस्सन्तस्तेषु च ग्राममागतेषु तदहरनध्यायः ॥

**सन्धावनुस्तनिते रात्रिम् ॥ २० ॥**

सन्धिस्सन्ध्या । तस्मिन् सन्धावनुस्तनिते मेघगर्जिते सति रात्रिमनध्यायः सर्वां रात्रिं नाधीयीत । वर्षर्ताविदम् । अन्यस्मिन्नधिकं वक्ष्यति ॥

**स्वप्नपर्यान्तं विद्युति ॥ २१ ॥**

स्वप्नपर्यान्तम् । अन्त्यो दीर्घ उपान्त्यो ह्रस्वः । विपर्यासश्छान्दसः, अपपाठो वा । सन्धौ विद्युति सत्यां स्वप्नपर्यन्तां रात्रिमनध्यायः, न सर्वाम् । स्वप्नपर्यन्ता रात्रिः प्रहरावशिष्टा ॥

एवं सायंसन्ध्यायामुक्तम् । प्रातस्सन्ध्यायामाह—

**उपव्युषं यावता वा कृष्णां रोहिणीमिति शम्याप्रासाद्विजानीयादेतस्मिन्काले विद्योतमाने सप्रदोषमहरनध्यायः ॥ २२ ॥**

उषस्समीपे उपव्युषम् । तत्रापि विद्योतमाने वि‍द्युति सत्याम‍परेद्युस्सप्रदोषमहरनध्यायः । प्रदोषादूर्ध्वं रात्रावध्ययनम् । यावता वा कालेन शम्याप्रासादर्वागवस्थितां गां कृष्णामिति वा रोहिणीमिति वा विजानीयात्, एतस्मिन्काले उपव्युषं विद्योतमान इत्यन्वयः । रोहिणी गौरवर्णा । इतिशब्दप्रयोगे द्वितीया प्रयुज्यते । तत्रान्वयप्रकारश्चिन्त्यः ॥

**दह्रेपररात्रे स्तनयित्नुना ॥ २३ ॥**

रात्रेस्तृतीयो भागस्सर्वोऽपररात्रः । तस्य त्रेधा विभक्तस्याद्योंऽशो महारात्रः, अन्त्यो दह्रः । तस्मिन्दह्रेऽपररात्रे स्तनयित्नुना निमित्तेन सप्रदोषमहरनध्यायः ॥

**ऊर्ध्वमर्धरात्रादित्येके ॥ २४ ॥**

अर्धरात्रादूर्ध्वं स्तनिते सप्रदोषमहरनध्याय इत्येके मन्यन्ते । स्वपक्षस्तु दह्र एवेति ॥

**गवां चावरोधे ॥ २५ ॥**

दस्युप्रभृतिभिरवरुद्धासु गोषु तावन्तं कालमनध्यायः । अवरोधो ग्रामान्निर्गमननिरोधः ॥

**वध्यानां च यावता वा हन्यन्ते ॥ २६ ॥**

बधार्हाणां चोरादीनामुपरोधे यावता कालेन ते हन्यन्ते तावन्तं कालमनध्यायः ॥

**पृष्ठारूढः पशूनां नाधीयीत ॥ २७ ॥**

हस्त्यश्वादीनां पशूनां पृष्ठारूढस्तत्रासीनस्सन्नाधीयीत ॥

**अहोरात्रावमावास्यासु ॥ २८ ॥**

अमावास्यासु द्वावहोरात्रौ नाधीयीत । तासु च पूर्वेद्युश्चतुर्दशीषु च । तथा च मनुः—

'अमावास्याचतुर्दश्योः पौर्णमास्यष्टकासु च ।'[1] इति ॥

इति नवमः खण्डः.

---

**चातुर्मासीषु च ॥ १ ॥**

चतुर्षु मासेषु भवाश्चातुर्मास्यः । संज्ञैषा तिसृणां पौर्णमासीनाम्, यासु चातुर्मास्यानि क्रियन्ते । काः पुनस्ताः? फाल्गुन्याषाढीकार्तिक्यः । चातुर्मास्यो यज्ञः । 'तत्र भवः' इति वर्तमाने 'संज्ञायामण्' इत्यण्प्रत्ययः । तासु च चातुर्मासीषु पूर्ववद्वावहोरात्रावनध्यायः । गौतमस्तु स्वशब्देनाह 'कार्तिकीफाल्गुन्याषाढी पौर्णमासी'[1] इति । पौर्णमास्यन्तरे प्रतिपत्सु च शास्त्रान्तरवचनादनध्यायः; यथाहोशनाः 'पर्वणीतिहासवर्जितानां विद्यानामनध्यायः'[2] इति, 'प्रतिपत्सु न चिन्तयेत्' इति च । एवं चतुर्दशीमात्रस्य वर्जने शास्त्रान्तरं मूलम्* । तत्र याज्ञवल्क्यः

---

* घ. छ.—तरं मृग्यम्. [1]गौ, ध. १६-३२.

[2]उ. ३-२५. [मुद्रिते औशनसकोशे पद्यरूपमिदं वचनम्.]

पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा च श्राद्धिकं प्रतिगृह्य च[1] ॥

**वैरमणो गुरुष्वष्टाक्य औपाकरण इति त्र्यहाः ॥ २ ॥**

विरमणमुत्सर्जनम्, तदेव वैरमणम्, तस्मिन् वैरमणे। प्रथमान्तपाठे सप्तम्यर्थे प्रथमा। गुरुषु श्वशुरादिषु; संस्थितेष्विति प्रकरणाद्गम्यते। अष्टकैवाष्टक्यं। स्वार्थे ष्यञ्। आदौ प्राप्ता वृद्धिर्मध्ये कृता। उपाकरणमेवौपाकरणम्। एतेषु निमित्तेषु त्र्यहा अध्ययनरहिताः। तत्र गुरुषु मरणदिवसादारभ्य त्र्यहाः, इतरेषु तु पूर्वेद्युरपरेद्युस्तस्मिंश्च दिनं नाधीयीत। तत्र गौतमः— 'तिस्रोऽष्टकास्त्रिरात्रम्' ....'अभितो वार्षिकम्'[2] इति। उपाकरणादूर्ध्वं प्रागुत्सर्जनाद्यदध्ययनं तद्वार्षिकम्, तदभितस्तस्यादावन्ते च यत्कर्म क्रियते तत्रापि त्रिरात्रमित्यर्थः। उशनसा च व्यक्तमुक्तम्—'उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम्।' इति॥

**तथा सम्बन्धेषु ज्ञातिषु ॥ ३ ॥**

सन्निकृष्टा ये ज्ञातयः भ्रातृतत्पुत्रपितृव्यादयः तेष्वपि मृतेषु तथा त्र्यहमनध्यायः। ब्रह्मचारिणो विधिरयम्। आशौचवतां तु यावदाशौचमनध्यायः शास्त्रान्तरसिद्धः। तत्र मनुः—

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते ॥

उभयत्र, जनने मरणे च ॥

---

[1]या. स्मृ-१-१४६.    [2]गौ. ध. १६-३८,४०.

**मातरि पितर्याचार्य इति द्वादशाहाः ॥ ४ ॥**

मात्रादिषु मृतेषु द्वादशाहमनध्यायः। अयं विधिः गृहस्थानामपि। केचिदाशौचमपि तावन्तं कालमिच्छन्ति। नेति वयम्, अनध्यायप्रकरणात् ॥

**तेषु चोदकस्पर्शनं तावन्तं कालम् ॥ ५ ॥**

मात्रादिष्वधिकम्—तावन्तं कालं अहरहस्स्नानमपि कार्यं, न केवलमनध्यायः ॥

**अनुभाविनां च परिवापनम् ॥ ६ ॥**

अनु पश्चाद्भूता जाता अनुभाविनः मृतापेक्षयाऽवरवयसः, तेषां परिवापनमपि भवति केशानाम्। 'कृत्यचः' इति प्राप्तस्य णत्वस्य 'णेर्विभाषा' इति विकल्पः। अन्ये तु—शावं दुःखमनुभवतां सर्वेषां परिवापनमिच्छन्ति। अपर आह—अनुभाविनः उदकार्हाः, तेषां मरणे परिवापनमिति ॥

**न समावृत्ता वपेरन्नन्यत्र विहारादित्येके ॥ ७ ॥**

विहारो यज्ञदीक्षा, ततोन्यत्र न समावृत्ता वपेरन्नित्येके मन्यन्ते। स्वमतं तु वपेरन्नेवेति ॥

तत्र वपनस्यामङ्गलत्वं गुणविधिना परिहारं च वक्तुं ब्राह्मणमुदाहरति—

**अथापि ब्राह्मणम्। रिक्तो वा एषोऽनपिहितो यन्मुण्डस्तस्यैतदपिधानं यच्छिखेति ॥ ८ ॥**

रिक्तोन्तश्शून्यो घटादिः। सोयमनपिहितः पिधानरहितो यादृशः तादृश एष यन्मुण्डो नाम। तस्य रिक्तस्यापिधानमेतत्

यच्छिखा नाम। अनेन चैतद्दर्शितं—निषेधशास्त्रं सह शिखया वपनप्रतिषेधपरमिति ॥

कथं तर्हि सत्रेषु 'शिखामनु प्र वपन्त ऋद्धयै'[1] इति वचनम्? तस्य बलीयस्त्वादित्याह—

**सत्रेषु तु वचनाद्वपनꣳ शिखायाः ॥ ९ ॥**

स्पष्टम् ॥

**आचार्ये त्रीनहोरात्रानित्येके ॥ १० ॥**

आचार्ये संस्थिते त्रीनहोरात्रानध्ययनं वर्जयेदित्येके मन्यन्ते। स्वपक्षस्तु द्वादशाहः पूर्वोक्तः ॥

**श्रोत्रियसꣳस्थायामपरिसंवत्सरायामेकाम् ॥**

श्रोत्रियं वक्ष्यति[2]। तस्य संस्थायामपरिपूर्णसंवत्सरायां श्रुतायामेकां रात्रिमेकमहोरात्रमनध्यायः। अत्र संस्थाश्रवणादूर्वादिष्वपि सैव निमित्तमनध्यामस्य ॥

**सब्रह्मचारिणीत्येके ॥ १२ ॥**

एके तु सब्रह्मचारिमरण एवानन्तरोक्तमनध्यायमिच्छन्ति, न श्रोत्रियसामान्यमरणे ॥

**श्रोत्रियाभ्यागमेऽधिजिगाꣳसमानोऽधीयानो वानुज्ञाप्याधीयीत ॥ १३ ॥**

श्रोत्रियेऽभ्यागते अध्येतुकामोऽधीयानश्च तमनुज्ञाप्याधीयीत ॥

**अध्यापयेद्वा ॥ १४ ॥**

अध्यापयितुकामोऽध्यापयन्वेति प्रकरणाद्गम्यते। सोऽपि श्रोत्रियमभ्यागतं अनुज्ञाप्याध्यापयेदिति ॥

---

[1] तै. सं. ७-४-९.   [2] आप. ध. २-६-४.

**गुरुसन्निधौ चाधीहि भो इत्युक्त्वाधीयीत ॥१५॥**

धारणाध्ययनं पारायणाध्ययनं वा कुर्वन् गुरौ सन्निहिते सति अधीहि भो इत्युक्त्वाधीयीत ॥

**अध्यापयेद्वा ॥ १६ ॥**

अध्यापयन्नपि गुरौ सन्निहिते एवमेवोक्त्वाध्यापयेत् ॥

**उभयत उपसङ्ग्रहणमधिजिगाꣳसमानस्य चाधीत्य च ॥ १७ ॥**

उभयतोध्ययनस्यादावन्ते च उपसङ्ग्रहणं कर्तव्यम्, अध्येतुकामस्यादावधीत्य चान्ते ॥

**अधीयानेषु वा यत्रान्यो व्यवेयादेतमेव शब्दमुत्सृज्याधीयीत ॥ १८ ॥**

बहुवचनमतन्त्रम् । अधीयानेषु च यत्रान्यो व्यवेयात् अन्तराऽऽगच्छेत्, तत्रापि 'अधीहि भो' इत्येतमेव शब्दमुत्सृज्योच्चार्याधीयीत । प्रत्येकमुपदेशादेकवचनम् । अधीयीरन् ॥

**श्वगर्दभनादास्सलावृक्येकसृकोलूकशब्दास्सर्वे वादितशब्दा रोदनगीतसामशब्दाश्च ॥१९॥**

शुनां गर्दभानां च बहूनां नादाः, बहुवचननिर्देशात् । सलावृकी वृकजातावन्तरभेदः; क्रोष्ट्रीत्यन्ये । लिङ्गस्याविवक्षितत्वात्पुंसोपि ग्रहणम् । 'इन्द्रो यतीन्त्सालावृकेभ्यः'[1] इत्यादौ दर्शनात्, सर्वत्रादिमस्स्वरो दीर्घः । स एवायं विकृतः प्रयुक्तः ।

---

[1] तै. सं. ६-२-७.

एकसृकः एकचरस्सृगालः । उलूको दिवाभीतः । एतेषां च शब्दाः । वादितानि वादित्राणि वीणावेणुमृदङ्गादीनि । तेषां च सर्वे शब्दाः रोदनशब्दा गीतशब्दास्सामशब्दाश्च, एते श्रूयमाणा अनध्यायस्य हेतवः ॥

**शाखान्तरे च साम्नामनध्यायः ॥ २० ॥**

वेदान्तरस्य सकाशे साम नाध्येयम् , 'गीतिषु सामाख्या[1]'। तद्योगाद्वेदवचनस्सामशब्द इत्यन्ये ॥

**सर्वेषु च शब्दकर्मसु यत्र सꣳसृज्येरन् ॥२१॥**

आक्रोशपरिहासादिषु सर्वेषु शब्दकर्मसु अनध्यायः, यत्राध्ययनशब्देन ते संसृज्येरन् ॥

**छर्दयित्वा स्वप्नान्तम् ॥ २२ ॥**

छर्दनं वमनं, तत्कृत्वा स्वप्नान्तं यावन्नाधीयीत ॥

**सर्पिर्वा प्राश्य ॥ २३ ॥**

अथवा सर्पिः प्राश्याधीयीत ॥

**पूतिगन्धः ॥ २४ ॥**

दुर्गन्धः । स चोपलभ्यमानोनध्यायहेतुः ॥

**शूक्तं चात्मसंयुक्तम् ॥ २५ ॥**

यत्पक्वं कालपाकेनाम्लं जातं तच्छूक्तम् । तद्यावदात्मसंयुक्तं स्वोदरस्थमजीर्णम्, यावत्तदनुगुण उद्गारो वा, तावदनध्यायहेतुः ॥

**प्रदोषे च भुक्त्वा ॥ २६ ॥**

नाधीयीतेति शेषः । तेनाधीत्यैव भुञ्जीत ॥

---

[1] जै. मी. २-१-३६.

**प्रोदकयोश्च पाण्योः ॥ २७ ॥**

भुक्त्वेत्येव । भुक्त्वा यावत्प्रोदकौ पाणी आर्द्रौ तावन्नाधीयीत। केचिद्भुक्त्वेति नानुवर्तयन्ति ॥

**प्रेतसङ्कॢप्तं चान्नं भुक्त्वा सप्रदोषमहरनध्यायः॥**

यो मृतोसपिण्डीकृतस्स प्रेतः । तदुद्देशेन दत्तमन्नं भुक्त्वा सप्रदोषमहर्नाधीयीत । प्रदोषादूर्ध्वं न दोषः । अत्र मनुः–

यावदेकानुदिष्टस्य गन्धो लेपश्च तिष्ठति ।
विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्तयेत्[1] ॥ इति ॥

**आ च विपाकात् ॥ २९ ॥**

यदि तावता कालेन तदन्नं जीर्णं विपक्कं न भवति ततश्चा विपाकात्तस्य नाधीयीत ॥

**अश्राद्धेन तु पर्यवदध्यात् ॥ ३० ॥**

जीर्णे अजीर्णे च तस्मिन् अश्राद्धेनान्नेन पर्यवदध्यात् । तस्योपर्यश्राद्धमन्नं भुञ्जीतेत्युक्तं भवति । केचित्–अश्राद्धेनेति वचनात्पूर्वत्रापि प्रेतान्नमिति श्राद्धमात्रं विवक्षितं मन्यन्ते ॥

इति दशमः खण्डः.

---

**काण्डोपाकरणे चामातृकस्य ॥ १ ॥**

काण्डोपाकरणं काण्डव्रतादेशनम् । तस्मिन्नहन्यमातृकस्यान्नं भुक्त्वा सप्रदोषमहरनध्यायः । अपर आह–भुक्त्वेति नानुवर्तते ।

---

[1] मनुस्मृ. ४–११७.

तथा चोत्तरत्र भुक्त्वाग्रहणम् । काण्डोपाकरणे निमित्तेऽमातृकस्य माणवकस्य सप्रदोषमहरनयध्याय इति । एतेनोत्तरं व्याख्यातम् ॥

काण्डसमापने चापितृकस्य ॥ २ ॥

काण्डसमापनं व्रतविसर्गः ॥

मनुष्यप्रकृतीनां च देवानां यज्ञे भुक्त्वेत्येके ॥

ये मनुष्या भूत्वा प्रकृष्टेन तपसा देवास्सम्पन्नास्ते मनुष्यप्रकृतयो देवाः, नन्दीश्वरकुमारा[1]दयः । तेषां यज्ञे तत्प्रीत्यर्थे ब्राह्मणभोजने भुक्त्वा सप्रदोषमहरनध्याय इत्येके मन्यन्ते । मनुष्यमुखेषु[2] देवेष्विज्यमानेष्वित्यन्ये ॥

पर्युषितैस्तण्डुलैराममांसेन च नानध्यायः ॥

'प्रेतसङ्क्लृप्तम्'[3] इत्यस्यापवादः । पर्युषिता रात्र्यन्तारिताः । ह्यः प्रतिगृहीतेषु तण्डुलेषु अद्य पक्त्वा भुज्यमानेषु नानध्यायः । तथाऽऽममांसेन तदहर्भक्षितेनापि नानध्यायः । पर्युषितेनेत्यन्ये । पर्युषितैरिति वचनात्तदहर्भुक्तैस्सप्रदोषमहरनध्यायः ॥

तथौषधिवनस्पतिमूलफलैः ॥ ५ ॥

ओषधिग्रहणेन वीरुधोपि गृह्यन्ते । वनस्पतिग्रहणेनापि वृक्षमात्रम् । तेषां मूलैस्सूरणकन्दादिभिः फलैश्चाम्रादिभिः पक्कैरपक्कैश्च तदहर्भक्षितैरपि नानध्यायः । पर्युषितेनेत्यन्ये[4] ॥

---

1 क—कुबेरा. 2 क. घ—मुखेन. 3आप. ध. १-१०-२८.

4'पर्युषितेनेत्यन्ये' इति केषु चित्कोशेषु न.

यत्काण्डमुपाकुर्वीत यस्य चानुवाक्यं कुर्वीत न तत्तदहरधीयीत ॥ ६ ॥

यस्मिन्नहनि यत्काण्डमुपाकृतं न तत्तदहरधीयीत । तथा श्रावण्यां पौर्णमास्यामुपाकृत्य प्रशस्तेहरन्तरे यस्य काण्डस्यानुवाक्यमध्येतुमारम्भं कुर्वीत, न तत्तदहरधीयीत । अहरित्यहोरात्रोपलक्षणम् ॥

उपाकरणसमापनयोश्च पारायणस्य तां विद्याम् ॥ ७ ॥

अनेकवेदाध्यायी यदैकस्य वेदस्य पारायणं कुरुते, तदा तस्य पारायणस्य ये उपाकरणोत्सर्जने तयोः कृतयोस्तां विद्यां तदहर्नाधीयित । एतदेव ज्ञापकं पारायणस्याप्युपाकरणोत्सर्जने भवत इति । 'तां विद्याम्' इति वचनाद्विद्यान्तराध्ययने न दोषः ॥

वायुर्घोषवान्भूमौ वा तृणसंवाहो वर्षति वा यत्र धाराः प्रवहेत् ॥ ८ ॥

घोषवान्कर्णश्रावः । भूमाववस्थितानि तृणानि संवहति उत्क्षिप्य गमयतीति तृणसंवाहः । वर्षति वा मेघे धाराः प्रवहेत् विक्षिपेत् । यत्र देशे एवंविधो वायुस्तत्र तावन्तं कालं नाधीयीत । अत्र मनुः-

'कर्णश्रवेऽनिले रात्रौ दिवा पांसुसमूहने '[1] । इति ॥

उत्तरे सूत्रे निगदसिद्धे-

---

[1]मनुस्मृ. ४-१०२.

**ग्रामारण्ययोश्च सन्धौ ॥ ९ ॥**

**महापथे च ॥ १० ॥**

**विप्रोष्य च समध्ययनं तदहः ॥ ११ ॥**

यदा सहाधीयानेषु केचित्कारणवशाद्विप्रवसेयुः, केचिच्चाचार्येण सङ्गताः, तदा समध्ययनं सहाधीयमानं प्रदेशं तदहर्नाधीयीत। विप्रोषितानां यदहः पुनर्मेळनं तदहर्नाधीयीतेत्यन्ये ॥

**स्वैरिकर्मसु च ॥ १२ ॥**

नाधीयीतेत्येव ॥

तत्रोदाहरणम्—

**यथा पादप्रक्षाळनोत्सादनानुलेपनाणीति[1] ॥ १३ ॥**

णत्वमाकस्मिकम्, अपपाठो वा ॥

**तावन्तं कालं नाधीयीताध्यापयेद्वा ॥ १४ ॥**

तेषु स्वैरिकर्मसु तावन्तं कालमध्ययनमध्यापनं च वर्जयेत् ॥

**सन्ध्योः ॥ १५ ॥**

'सज्योतिष्या ज्योतिषो दर्शनात्'[2]। उभे सन्ध्ये, तयोस्तावन्तं कालं नाधीयीताध्यापयेद्वा। एवमुत्तरत्राप्यनुवृत्तिः ॥

उत्तरसूत्रे निगदसिद्धे—

---

[1] ग. छ. लेपणानीति, ञ—अवलेखनानीति.

[2] गौ. ध. २-११. 'सज्योतिषि काले समारभ्य आ ज्योतिषो दर्शनात् ज्योतिरन्तरदर्शनात्। प्रातर्नक्षत्रज्योतिरारभ्य आ सूर्यज्योतिर्दर्शनात् सायमादित्यज्योतिरारभ्य आ नक्षत्रज्योतिर्दर्शनात् इति' इति मिताक्षरी.

**तथा वृक्षमारूढः ॥ १६ ॥**

**अप्सु चावगाढः ॥ १७ ॥**

**नक्तं चागारावृते ॥ १८ ॥**

विवृतद्वारमपावृतम् । तत्र नक्तं नाधीयीत ॥

**दिवा चापिहिते ॥ १९ ॥**

संवृतद्वारमपिहितम् । तत्र दिवा नाधीयीत ॥

**अविहितमनुवाकाध्ययनमाषाढवासन्तिकयोः॥**

वासन्तिको वसन्तोत्सवः, स चैत्रे मासि शुक्लत्रयोदश्यां भवति । आषाढशब्देनापि तस्मिन्मासे क्रियमाणस्तादृशः कश्चिदिन्द्रोत्सवादिर्विवक्षितः । तयोस्तदहरनुवाकाध्ययनमविहितम् । अनुवाकग्रहणान्न्यूने न दोषः । अपर आह—अनुवाकग्रहणा-[1] न्मन्त्रब्राह्मणयोरेव प्रतिषेधो नाङ्गानामिति ॥

**नित्यप्रश्नस्य चाविधिना ॥ २१ ॥**

नित्यं प्रश्नाध्ययनं यत्र स नित्यप्रश्नो ब्रह्मयज्ञः । तस्य चाविधिना वक्ष्यमाणेन प्रकारेण विनानुवाकाध्ययनमविहितम् । यद्यपि नित्यं ब्रह्मयज्ञाध्ययनम्, तथापि केनचिदप्यङ्गेन विना न कर्तव्यम् । तेन विस्मृत्य प्रातराशे कृते प्रायश्चित्तमेव, न ब्रह्मयज्ञः । मनुः—

वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥[2] इति ॥

---

[1] 'न्यूने' इत्यादिः 'ग्रहणात्' इत्यन्तो ग्रन्थः केषु चित्कोशेषु न.

[2] मनुस्मृ. ११-२०४.

**तस्य विधिः ॥ २२ ॥**

तस्य नित्यप्रश्नस्य विधिर्वक्ष्यते ॥

**अकृतप्रातराश उदकान्तं गत्वा प्रयतश्शुचौ देशेऽधीयीत यथाध्यायमुत्सृजन्वाचा ॥२३॥**

अकृतप्रातराशः अकृतदिवाभोजनः । उदकान्तमुदकसमीपं गत्वा । प्रयतस्स्नानमार्जनादिना शुद्धश्शुचौ देशे प्राच्यामुदीच्यां वा दिश्यच्छदिर्दर्शेऽधीयीत यथाध्यायं यथापाठमनुषङ्गरहितम् । उत्सृजन्, आदित आरभ्य प्रथमादिष्वहस्स्वधीतं द्वितीयादिष्वहस्सूत्सृज्य ततः परमधीयीत । वाचा उच्चैरित्यर्थः ॥

**मनसा चानध्याये ॥ २४ ॥**

अनध्याये च मनसाधीयीत नित्यस्वाध्यायम् ॥

**विद्युति चाभ्यग्रायाꣳ स्तनयित्नावप्रायत्ये प्रेतान्ने नीहारे च मानसं परिचक्षते ॥ २५ ॥**

विद्युत्यभ्यग्रायामविरतायाम् । स्तनयित्नौ चाभ्यग्रे । अप्रायत्ये आत्मनोऽशुचिभावे । प्रेतान्ने च भुक्ते । नीहारो हिमानी, तस्मिंश्च वर्तमाने । मानसमनन्तरोक्तमध्ययनं परिचक्षते वर्जयन्ति ॥

**श्राद्धभोजन एवैके ॥ २६ ॥**

एके त्वाचार्याश्श्राद्धभोजन एव मानसं परिचक्षते, न विद्युदादिषु ॥

विद्युत्स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र सन्निपतेयुस्त्र्यहमनध्यायः ॥ २७ ॥

अपर्तौ, यस्मिन्देशे यो वर्षकालस्ततोन्यस्तत्रापर्तुः, तत्र यदि विद्युदादयस्सन्निपतेयुस्समुदितास्स्युस्तदा त्र्यहमनध्यायः ॥

यावद्भूमिर्व्युदकेत्येके ॥ २८ ॥

यावता कालेन भूमिर्विगतोदका भवति तावन्तं कालमनध्याय इत्येके मन्यन्ते ॥

एकेन द्वाभ्यां वैतेषामाकालम् ॥ २९ ॥

एतेषां विद्युदादीनां मध्ये एकेन द्वाभ्यां वा योगे आकालमनध्यायः, अपरेद्युरा तस्य कालस्य प्राप्तेरित्यर्थः ॥

सूर्याचन्द्रमसोर्ग्रहणे भूमिचलेपस्वान उल्कायामग्न्युत्पाते च सर्वासां विद्यानाꣳ सार्वकालिकमाकालम् ॥ ३० ॥

सूर्याचन्द्रमसोरिति वचनं बृहस्पत्यादिनिवृत्त्यर्थम् । भूमिचले भूमिकम्पे । अपस्वाने निर्घाते । उल्कायामुल्कापाते । अग्न्युत्पाते ग्रामादिदाहे । एतेषु निमित्तेषु सर्वासां विद्यानां—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥

इत्युक्तानां सार्वकालिकमृतौ चापर्तौ चाकालमनध्यायः । सर्वासामिति वचनादन्यत्र वेदानामेव प्रतिषेधः । अङ्गानामपीत्यन्ये ॥

**अभ्रं चापर्तौ सूर्याचन्द्रमसोः परिवेष इन्द्रधनुः-प्रतिसूर्यमत्स्यश्च वाते पूतिगन्धे नीहारे च सर्वेष्वेतेषु तावत्कालम् ॥ ३१ ॥**

अपर्तावभ्रं दृश्यमानं यावद्दृश्यते तावत्कालमनध्यायः । एवं परिवेषादिष्वपि योज्यम् । अत्रापि बृहस्पत्यादिपरिवेषे न दोषः । इन्द्रधनुः प्रसिद्धम् । सूर्यसमीपे तदाकृतिः प्रतिसूर्यः । मत्स्यः पुच्छवन्नक्षत्रम् । समाहारद्वन्द्वे छान्दसो लिङ्गव्यत्ययः । सर्वेष्वेतेषु वातादिषु च त्रिषु तावत्कालमनध्यायः । वाते घोषवति । पूतिगन्धे दुर्गन्धे । नीहारे हिमान्याम् । वातादिग्रहणं पूर्वोक्तानां श्वगर्दभादीनामुपलक्षणार्थम् । पुनरिह वचनं तावत्कालमिति विधातुम् । अत्रैव श्वगर्दभादिग्रहणे कर्तव्ये पूर्वत्र पाठस्य चिन्त्यं प्रयोजनम् ॥

**मुहूर्तं विरते वाते ॥ ३२ ॥**

वाते घोषवति विरतेपि मुहूर्तमात्रमनध्यायः । द्वे नाडिके मुहूर्तः ॥

**सलावृक्यामेकसृक इति स्वप्नपर्यन्तम् ॥ ३३ ॥**

तावत्कालमित्यस्यापवादोयम् । सलावृक्येकसृकशब्दौ व्याख्यातौ[1] ॥

**नक्तं चारण्येऽनग्नावहिरण्ये वा ॥ ३४ ॥**

रात्रावग्निवर्जिते हिरण्यवर्जिते वारण्ये नाधीयीत ॥

---

[1]आप. ध. १-१०-१९.

अननूक्तं चापर्तौ छन्दसो नाधीयीत ॥ ३५ ॥

उत्सर्जनादूर्ध्वमुपाकरणादर्वागपर्तुः । तत्र छन्दसोननूक्तमंशमपूर्वं नाधीयीत, ग्रहणाध्ययनमपर्तौ न कर्तव्यम् । यद्यपि 'तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत्'[1] इत्युक्तं, तथापि, कियन्तं कालं तद्विरमणम्? कस्मादध्ययनात्? इत्यपेक्षायामुच्यते—एतावन्तं कालं ग्रहणाध्ययनं न कर्तव्यम् । धारणाध्ययने तु न दोषः । तथा 'छन्दसः' इति वचनादङ्गानां ग्रहणाध्ययनेपि न दोषः ॥

प्रदोषे च ॥ ३६ ॥

प्रदोषे चाननूक्तमृतावपि नाधीयीत । 'मासं प्रदोषे नाधीयीत'[2] इत्येतत्तु धारणाध्ययनस्यापि प्रतिषेधार्थम् । अपर आह—यस्यां रात्रौ द्वादशी त्रयोदशी च मिश्रे भवतस्तस्यां प्रदोषे नाधीयीताननूक्तमनूक्तं च । ऋतावपर्तौ चैष आचार इति ॥

सार्वकालिकमाम्नातम् ॥ ३७ ॥

आम्नातमधीतम्, तत्सार्वकालिकमपर्तौ प्रदोषे च सर्वस्मिन्कालेध्येयम् ॥

यथोक्तमन्यदतः परिषत्सु ॥ ३८ ॥

अत एव तस्मादनध्ययनप्रकरणादन्यदनध्ययननिमित्तं परिषत्सु मानवादिषु धर्मशास्त्रेषु यथोक्तं तथा द्रष्टव्यम् । तत्र वसिष्ठः—'दिग्दाहपर्वतप्रपातेषूपलरुधिरपांसुवर्षेष्वाकालिकम्'[3] इति । यमः—

---

[1] आप. ध. १-९-२. [2] आप. ध. १-९-१. [3] वसि. ध. १३-३५.

श्लेष्मातकस्य शाल्मल्या मधूकस्य न चाप्यधः ।
कदाचिदपि नाध्येयं कोविदारकपित्थयोः ॥

'सङ्क्रमोद्यानदेवतासमीपेषु नाधीयीत' ॥

इत्येकादशः खण्डः.

इति श्रीहरदत्तमिश्रविरचितायामापस्तम्बधर्मसूत्र-
व्याख्यायामुज्ज्वलाख्यायां तृतीयः
पटलः

---

तपस्स्वाध्याय इति ब्राह्मणम् ॥ १ ॥

योयं नित्यस्वाध्यायस्तत्तपः, कृच्छ्रातिकृच्छ्रचान्द्रायणादिलक्षणं तपो यावत्फलं साधयति तावत्साधयतीत्यर्थः ॥

तत्र श्रूयते । स यदि तिष्ठन्नासीनश्शयानो वा स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्याय इति ॥ २ ॥

तत्रैव ब्राह्मणे स यदि तिष्ठन्नासीन इत्यापत्कल्पश्श्रूयते । तत्र 'दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङासीनस्स्वाध्यायमधीयीत'[1] इत्यादि मुख्यः कल्पो ब्राह्मण एवोक्तः । इह पुनरासीनवचनं यथाकथंचिदासनार्थम् । सर्वथाप्यधीयानस्तप एव तत्तप्यत इति ब्राह्मणार्थः । मनुरप्याह—

---

[1] तै. आ. २-११.

आहैव स नखाग्रेभ्यः परमं तप्यते तपः ।
यस्स्रग्व्यपि द्विजोधीते स्वाध्यायं शक्तितोन्वहम्[1] ॥ इति ।
स्रग्वीति स्वैरं दर्शयति ॥

एवं कर्तुर्नियमो नापद्यतीवादरणीय इत्युक्त्वा कालेप्याह—

**अथापि वाजसनेयिब्राह्मणम् । ब्रह्मयज्ञो ह वा एष यत्स्वाध्यायस्तस्यैते वषट्कारा यत्स्तनयति यद्विद्योतते यदवस्फूर्जति यद्वातो वाति । तस्मात्स्तनयति विद्योतमानेवस्फूर्जति वाते वा वायत्यधीयीतैव वषट्काराणामछम्बट्कारायेति ॥ ३ ॥**

अथापि अपिच स्वाध्यायो नाम यदेष ब्रह्मयज्ञः, ब्रह्म वेदः, तत्साधनो यागः, यथा दर्शपूर्णमासादयः पुरोडाशादिसाधनाः । हवैशब्दौ प्रसिद्धिं द्योतयतः । तस्य यज्ञस्यैते वक्ष्यमाणास्स्तनयित्न्वादयो वषट्काराः । बहुवचननिर्देशाद्वषट्कारानुवषट्कारस्वाहाकारादयस्सर्वे प्रदानार्था गृह्यन्ते । स्तननं मेघशब्दः । विद्योतनं विद्युद्व्यापारः । अवस्फूर्जनमशनिपातः, तत्र 'अवस्फूर्जथुर्लिङ्गम्' इति दर्शनात् । वायतीति ओ वै शोषणे इत्यस्य रूपम् । यथार्द्रप्रदेशश्शुष्को भवति तथा वाती[2]त्यर्थः । यस्मादेते वषट्कारा ब्रह्मयज्ञस्य, तस्मात्स्तननादिष्वनध्यायनिमित्तेषु सत्स्वप्यधीयीतैव, न पुनरनध्याय इति नाधीयीत, ब्रह्मयज्ञं कुर्यादित्यर्थः । किमर्थम् ?

[1] मनुस्मृ. २–१६७.

[2] क. ख—वायती.

वषट्काराणामेतेषामछम्बट्काराय अभ्यर्थत्वाय । अन्यथा एते वषट्कारा व्यर्थास्स्युः । ततश्च यथा होत्रा वषट्कृतेध्वर्युर्न जुहुयात्ताद्दगेतत्स्यात् ॥

तस्य शाखान्तरे वाक्यसमाप्तिः ॥ ४ ॥

तस्य वाजसनेयिब्राह्मणस्य शाखान्तरे वाक्यसमाप्तिर्भवति । न तावता पर्यवसानम् ॥

तदेव शाखान्तरं पठति—

अथ यदि वातो वा वायात्स्तनयेद्वा विद्योतेत वावस्फूर्जेद्वैकां वर्चमेकं वा यजुरेकं वा सामाभिव्याहरेद्भूर्भुवस्सुवस्सत्यं तपश्श्रद्धायां जुहोमीति वैतत् । तेनो हैवास्यैतदहस्स्वाध्याय उपात्तो भवति ॥ ५ ॥

अन्ते इतिशब्दोध्याहर्तव्यः । वातादिषु सत्सु एकामृचमधीयीत प्राप्ते प्रदेशे । यजुर्वेदाध्ययन एकं यजुः । सामवेदाध्यन एकं साम । सर्वेषु वा वेदेषु भूर्भुवस्सुवरित्यादिकं यजुरभिव्याहरेत्, न पुनर्यथापूर्वं प्रश्नमात्रम् । तेनैतावदेवास्याध्येतुस्तदहस्तस्मिन्नहनि स्वाध्याय उपात्तो भवति स्वीकृतो भवति, अधीतो भवतीत्यर्थः । केचित्तु—भूर्भुवस्सुवरित्यादिकं ब्राह्मणभागाध्ययनविषयं मन्यन्ते, न सार्वत्रिकम् ॥

कस्मात्पुनर्वाजसनेयिब्राह्मणस्योदाहृते शाखान्तरे वाक्यसमाप्तिराश्रीयते, न पुनर्यथाश्रुतमात्रं गृह्यते ? तत्राह—

**एवꣳ सत्यार्यसमयेनाविप्रतिषिद्धम् ॥ ६ ॥**

एवं सति एवं वाक्यसमाप्तावाश्रीयमाणायां, आर्यसमयेन, आर्याश्शिष्टा मन्वादयः, तेषां समयो व्यवस्था, तेनाविप्रतिषिद्धं भवति। इतरथा विप्रतिषिद्धं स्यात् ॥

कथम्?—

**अध्यायानध्यायꣳ ह्युपदिशन्ति तदनर्थकꣳ स्याद्वाजसनेयिब्राह्मणं चेदवेक्षेत ॥ ७ ॥**

आर्या ह्यध्यायमनध्यायं चोपदिशन्ति। तदुपदेशमनर्थकं स्यात् यदि वाजसनेयिब्राह्मणं यथाश्रुतमवेक्षेताध्येता ॥

आह—अनर्थकमेतदस्तु श्रुतिविरोधात्। तत्राह—

**आर्यसमयो ह्यगृह्यमानकारणः ॥ ८ ॥**

योयमध्यायानध्यायविषय आर्यसमयः न तत्र किञ्चित्कारणं गृह्यते, यथा 'वैसर्जनहोमीयं वासोध्वर्यवे ददाति' इत्यत्रागृह्यमाणकारणश्चार्यसमयः श्रुत्यनुमानद्वारेण प्रमाणम्। अतो वाक्यसमाप्तिरेव युक्ता। एवं हि वाजसनेयिब्राह्मणस्यापि नात्यन्तबाधः। अनध्यायोपदेशनस्यापि प्रभूताध्ययनविषयतयार्थवत्त्वमिति। सूत्रे 'अगृह्यमानकारण' इति णत्वाभावश्छान्दसः ॥

का पुनरसौ स्मृतिः या ब्रह्मयज्ञेप्यनध्यायमुपदिशति? मानवे तावद्विपर्ययश्श्रूयते—

नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम्[1]। इति।

---

[1]मनुस्मृ. २–१०६

सामान्येनानध्यायोपदेशस्तु ब्रह्मयज्ञादन्यत्र चरितार्थः। तस्मात्तादृशी स्मृतिर्मृग्या। एवं तर्ह्यग्निहोत्रादिष्वपि मन्त्राणामनध्यायः प्राप्नोति। नेत्याह—

**विद्यां प्रत्यनध्यायश्श्रूयते न कर्मयोगे मन्त्राणाम् ॥ ९ ॥**

विद्या वेदनमध्ययनं, तां प्रत्यनध्यायश्श्रूयते, न पुनर्मन्त्राणां कर्मयोगे। हेतुः परिभाषायामुक्तः 'अर्थान्तरत्वात्'[1] इति। अर्थान्तरं हि कर्मणि प्रयोगो मन्त्राणां न पुनर्ग्रहणार्थमध्ययनमनुष्ठेयार्थप्रकाशकतया। एवं च पारायणाध्ययनमध्ये अनध्यायागमे अध्ययनं भवति न वेति चिन्त्यम्। एवं रुद्रादिजपेपि ॥

कथम्पुनरार्यसमयः प्रमाणं यावता न तेषामतीन्द्रियार्थे ज्ञानं सम्भवतीति? तत्राह—

**ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते ॥ १० ॥**

विधीयन्त इति विधयः कर्माणि। ते सर्वेपि स्मार्ता अपि ब्राह्मणेष्वेवोक्ताः। नन्विदानीं ब्राह्मणानि नोपलभ्यन्ते? सत्यम्। तेषामुत्सन्नाः पाठाः, अध्येतृदौर्बल्यात्। कथं तर्हि तेषामस्तित्वम्? प्रयोगादनुमीयन्ते। प्रयोगस्स्मृतिनिबन्धनमनुष्ठानं च, तस्माद्ब्राह्मणान्यनुमीयन्ते मन्वादिभिरुपलब्धानीति। कथमपरथा स्मरेयुरनुष्ठेयुर्वा। सम्भवति च तेषां वेदसंयोगः ॥

---

[1] आप. प. १–४०.

अथ प्रसङ्गादपस्मृतिरुच्यते—

**यत्र तु प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्ति ॥ ११ ॥**

यत्र तु मातुलसुतापरिणयनादौ प्रीत्युपलब्धितः प्रवृत्तिर्न तत्रोत्सन्नपाठं शास्त्रमनुमीयते; प्रीतेरेव प्रवृत्तिहेतोस्सम्भवात् ॥

ततश्च—

**तदनुवर्तमानो नरकाय राध्यति ॥ १२ ॥**

तद्विधानमनुतिष्ठन्नरकायैव कल्पते ॥

**अथ ब्राह्मणोक्ता विधयः ॥ १३ ॥**

एवं स्मृत्याचारप्राप्तानां श्रुतिमूलत्वमुक्तम् । अथेदानीं प्रत्यक्षब्राह्मणोक्ता एव केचिद्विधयो व्याख्यायन्ते तेषामपि स्मार्तेष्वनुप्रवेशार्थम् । तेन तदतिक्रमे स्मार्तातिक्रमनिमित्तमेव प्रायश्चित्तं भवति ॥

**तेषां महायज्ञा महासत्त्राणीति संस्तुतिः ॥ १४ ॥**

तेषां वक्ष्यमाणानां महायज्ञा इति संस्तुतिः स्वाध्यायब्राह्मणे । महासत्त्राणीति च संस्तुतिर्भवति बृहदारण्यकादौ । संस्तुतिग्रहणेन संस्तुतिमात्रमिदं न नामधेयं धर्मातिदेशार्थमिति दर्शयति । तेन महायज्ञेषु सोमयागेषु ये धर्मा उक्ताः 'न ज्येष्ठभ्रातरमतीत्य सोमेन यष्टव्यम्' इत्यादयः, ये च महासत्त्रस्य गवामयनस्य धर्माः 'इष्टप्रथमयज्ञैर्यष्टव्यम्' इत्यादयः, उभयेपि ते वक्ष्यमाणेषु पञ्चमहायज्ञेषु न भवन्ति ॥

के पुनस्ते? तानाह—

अहरहर्भूतबलिर्मनुष्येभ्यो यथाशक्ति दानम् ॥ १५ ॥

इति द्वादशः खण्डः.

---

देवेभ्यस्स्वाहाकार आकाष्ठात्पितृभ्यस्स्वधाकार ओदपात्रात्स्वाध्याय इति ॥ १ ॥

वैश्वदेवे वक्ष्यमाणेन बलिहरणप्रकारेण भूतेभ्योऽहरहर्भूतबलिर्देयः। एष भूतयज्ञः। मनुष्येभ्यश्च यथाशक्ति दानं कर्तव्यम्। एष मनुष्ययज्ञः। देवेभ्यश्च स्वाहाकारेण प्रदानमाकाष्ठात्, अशनीयाभावे काष्ठमपि तावद्देयं वैश्वदेवोक्तेन प्रकारेण। एष देवयज्ञः। केचिद्वैश्वदेवाहुतिभ्यः पृथग्भूतामिमामाहुतिं मन्यन्ते, 'देवेभ्यस्स्वाहा' इति मन्त्रमिच्छन्ति, 'देवयज्ञेन यक्ष्ये' इति च सङ्कल्पमिच्छन्ति। वयं तु न तथेति गृह्य एवावोचाम। केचिदाहुः 'आकाष्ठात्' इति वचनादशनीयाभावेन भोजनलोपेऽपि यथाकथंचिद्वैश्वदेवं कर्तव्यम्, पुरुषसंस्कारत्वादिति। अपरेत्वशनीयसंस्कार इति वदन्तो भोजनलोपे वैश्वदेवं न कर्तव्यमिति स्थिताः। पितृभ्यस्स्वधाकारेण प्रदानमोदपात्रात्, अन्नाद्यभावे उदपात्रमपि स्वधाकारेण तावद्देयम्। पात्रग्रहणात्सहपात्रेण देयम्। एष पितृयज्ञः। स्वाध्यायः, 'तस्य विधिः'[1] इत्यारभ्योक्तो नित्यस्वाध्यायः। एष ब्रह्मयज्ञः। इतिशब्दस्समाप्तौ, इत्येते महायज्ञा

---

[1]आप. ध. १-११-२२.

इति । न चायमुपदेशक्रमोनुष्ठान उपयुज्यते । अनुष्ठानं तु ब्रह्मयज्ञो देवयज्ञो भूतयज्ञः पितृयज्ञो मनुष्ययज्ञ इति ॥

पूजां प्रसङ्गादाह–

**पूजा वर्णज्यायसां कार्या ॥ २ ॥**

वर्णतो ये ज्यायांसः प्रशस्ततरा भवन्ति तेषामवरेण वर्णेन पूजा कार्या, अध्वन्यनुगमनादिका, उत्सवेषु च गन्धमाल्यादिका ॥

**वृद्धतराणां च ॥ ३ ॥**

सजातीयानामपि पूजा कार्या । तरपो निर्देशाद्विद्यावयःकर्मभिर्वृद्धानां ग्रहणम् । हीनानामपीत्येके; तथा च मनुः–'शूद्रोपि दशमीं गतः' इति ॥

पूजा कार्येत्युक्तम् । तद्विरोधी हर्षो वर्ज्य इत्याह–

**हृष्टो दर्पति दृप्तो धर्ममतिक्रामति धर्मातिक्रमे खलु पुनर्नरकः ॥ ४ ॥**

अभिमतलाभादिनिमित्तश्चित्तविकारो हर्षः, तद्युक्तो हृष्टः । दर्पति दृप्यति । दर्पो गर्वोभिमानः । दृप्तो धर्ममतिक्रामति, पूज्यपूजनादिकं प्रति स्तब्धत्वात् । खलुपुनश्शब्दौ वाक्यालङ्कारे । धर्मातिक्रमे खलु पुनर्नरको भवति निरयं प्रतिपद्यते । तस्माद्धर्मातिक्रममूलभूतो हर्षो न कर्तव्यः । यद्यपि भूतदाहीयेषु दोषेषु वर्जनीयेषु हर्षोपि वक्ष्यते,[1] तथापीह विशेषेण हर्षस्य वर्जनार्थोयमारम्भः, योगाङ्गत्वाद्वक्ष्यमाणस्य ॥

---

[1]आप. ध. १–२३–६.

**न समावृत्ते समादेशो विद्यते ॥ ५ ॥**

समावृत्तं शिष्यं प्रत्याचार्येण समादेशो न देयः, इदं त्वया कर्तव्यमिति; यथाऽसमावृत्तदशायामाज्ञा दीयते उदकुम्भमाहरेत्यादि, नैवमिदानीम् । स्वेच्छया करणे न प्रतिषेध्यम् ॥

**ओङ्कारस्स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत ॥ ६ ॥**

ओङ्कारः प्रणवः । स च स्वर्गस्य द्वारमिव, यथा द्वारेण गृहाभ्यन्तरं प्राप्यते तथानेन स्वर्गः । तस्माद्ब्रह्म वेदं स्वर्गसाधनमध्येष्यमाण एतदादि अनाम्नातमप्योङ्कारमादौ कृत्वा प्रतिपद्येत उपक्रमेताध्येतुम् ॥

**विकथां चान्यां कृत्वैवं लौकिक्या वाचा व्यावर्तते ब्रह्म ॥ ७ ॥**

अध्ययनेनुपयुक्ता कथा विकथा, तां चान्यां कृत्वैतदादि प्रतिपद्येत । एवं सति ब्रह्म वेदः लौकिक्या वाचा व्यावर्तते तया मिश्रितं न भवति ॥

पुनरप्योङ्कारमेव स्तौति—

**यज्ञेषु चैतदादयः प्रसवाः ॥ ८ ॥**

यज्ञेषु दर्शपूर्णमासादिषु एतदादयः ओङ्कारादयः प्रसवा अनुज्ञावाक्यानि भवन्ति । ब्रह्मादीनां 'ओम्प्रणय,' 'ओं निर्वप,' 'ओंस्तुध्वम्' इति सोमे ॥

**लोके च भूतिकर्मस्वेतदादीन्येव वाक्यानि स्यु-र्यथा पुण्याहꣳस्वस्त्यृद्धिमिति ॥ ९ ॥**

यथा यज्ञेषु ओङ्कारादयः प्रसवाः तथा लोके च भूतिकर्मसु पाणिग्रहणादिषु एतदादीन्येव वाक्यानि स्युः, तान्युदाहरति—यथेति। पुण्याहवाचने 'ओं कर्मणः पुण्याहं भवन्तो ब्रुवन्तु' इति वाचयिता वदति। 'ओं पुण्याहं कर्मणोस्तु' इति प्रतिवक्तारः। तथा 'ओं कर्मणे स्वस्ति भवन्तो ब्रुवन्तु' इति वाचयिता। 'ओं कर्मणे स्वस्ति' इति परे। 'ओं कर्मण ऋद्धिं भवन्तो ब्रुवन्तु' इति वाचयिता। 'ओं कर्म ऋद्ध्यताम्' इति परे। तस्मादेवं प्रशस्त ओङ्कारः ॥

**नासमये न कृच्छ्रं कुर्वीत त्रिश्श्रावणं त्रिस्सहवचनमिति परिहाप्य ॥ १० ॥**

समयश्शुश्रूषा, तेन विना कृच्छ्रं दुःखं दुरवधारणमपूर्वं ग्रन्थं न कुर्वीत। क्रियासामान्यवचनः करोतिः अध्ययनेऽध्यापने च वर्तते। समयेन विना शिष्योपि कृच्छ्रं ग्रन्थं नाधीयीत, आचार्योपि नाध्यापयेत्। तथा च मनुः—

धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा।
न तत्र विद्या वप्तव्या शुभं बीजमिवोषरे ॥[1] इति ॥

किमविशेषेण? नेत्याह—त्रिश्श्रावणं त्रिस्सहवचनं परिहाप्य वर्जयित्वा। त्रिश्श्रावणमात्रे त्रिस्सहवचनमात्रे चान्यतरापेक्षया क्रियमाणे शुश्रूषा नापेक्ष्या। ततोधिके सर्वत्रापेक्ष्येति ॥

---

[1] मनुस्मृ. २–११२.

आऽविचिकित्साया ब्रह्म निगन्तव्यमिति हारीतः ॥ ११ ॥

विचिकित्सा संशयः तदभावोऽविचिकित्सा यावदुत्पद्यते तावद्ब्रह्म निगन्तव्यं नियमपूर्वकं गन्तव्यमिति हारीत आचार्यो मन्यते। अत्र पक्षे त्रिश्श्रावणत्रिस्सहवचनयोरपि शुश्रूषितव्यम्। ब्रह्मग्रहणादङ्गेषु नायं विधिः ॥

न बहिर्वेदे गतिर्विद्यते ॥ १२ ॥

वेदाद्बहिर्भूते काव्यनाटकादिश्रवणे गतिश्शुश्रूषा न विद्यते, यद्यपि तदुपयुक्तं वेदार्थज्ञाने ॥

समादिष्टमध्यापयन्तं यावदध्ययनमुपसङ्गृह्णीयात् ॥ १३ ॥

य आचार्येण समादिष्टोऽध्यापयति तं यावदध्ययनं यावदसावध्यापयति तावदुपसङ्गृह्णीयात्। 'तथा समादिष्टेऽध्यापयति'[1] इत्यत्र सूत्रे आचार्यदारवद्वृत्तिरुक्ता, तत्र च 'अन्यत्रोपसङ्ग्रहणात्'[2] इति वर्तते; अत उपसङ्ग्रहणार्थोऽयमारम्भः ॥

नित्यमर्हन्तमित्येके ॥ १४ ॥

स चेत्समादिष्टोऽर्हन्भवति विद्यासदाचारा[3]दिना, ततो नित्यमुपसङ्गृह्णीयात् इत्येके मन्यन्ते। स्वमतं तु यावदध्ययनमिति ॥

---

[1]अप. ध. १-७-२८. [2]आप. ध. १-७-२७. [3]घ. ङ. च.–समाचारा.

न गतिर्विद्यते ॥ १५ ॥

यद्यप्यसावर्हन्भवति, तथाप्याचार्ये या गतिश्शुश्रूषा, सा तस्मिन्न कर्तव्या ॥

वृद्धानां तु ॥ १६ ॥

तुश्चार्थे । वृद्धानां चान्तेवासिनां न गतिर्विद्यते पूर्ववयसान्तेवासिना अवरवया आचार्यो न शुश्रूषितव्यः । अध्ययनादूर्ध्वमित्येके । अध्ययनकालेपीत्यन्ये । केचित्—अवरवयसाप्यन्तेवासिना न वार्धके गतिः कर्तव्येत्याहुः ॥

ब्रह्मणि मिथो विनियोगे न गतिर्विद्यते ॥१७॥

ब्रह्मणि वेदविषये यदा मिथो विनियोगः क्रियते बह्वृचो याजुषसकाशाद्यजुर्वेदमधीते, सोपि तस्मादृग्वेदं, तदापि परस्परं शुश्रूषा न कर्तव्या ॥

अत्र हेतुं स्वयमेवाह—

ब्रह्म वर्धत इत्युपदिशन्ति ॥ १८ ॥

द्वयोरपि ब्रह्म वर्धते, सैव ब्रह्मवृद्धिः शुश्रूषेत्युपदिशन्त्याचार्याः ॥

निवेशे वृत्ते संवत्सरेसंवत्सरे द्वौद्वौ मासौ समाहित आचार्यकुले वसेद्भूयश्श्रुतमिच्छन्निति श्वेतकेतुः ॥ १९ ॥

भूयश्श्रवणमिच्छन्पुरुषः निवेशे वृत्ते दारकर्मणि वृत्तेपि प्र-

तिसंवत्सरं द्वौद्वौ मासौ समाहितो भूत्वा आचार्यकुले वसेदिति श्वेतकेतुराचार्यो मन्यते ॥

अत्र हेतुत्वेन श्वेतकेतोरेव शिष्यान्प्रति वचनम्—

**एतेन ह्यहं योगेन भूयः पूर्वस्मात्कालाच्छ्रुतमकुर्वीत ॥ २० ॥**

एतेनानन्तरोक्तेन योगेन उपायेनाहं पूर्वस्माद्ब्रह्मचर्यकालाद्भूयोधिकतरं श्रुतमकुर्वीत कृतवानस्मि, अतो यूयमपि तथा कुरुध्वमिति ॥

**तच्छास्त्रैर्विप्रतिषिद्धम् ॥ २१ ॥**

तदिदं श्वेतकेतोर्वचनं श्रुत्यादिभिश्शास्त्रैर्विरुद्धम् ॥

कथमित्याह—

**निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते ॥ २२ ॥**

हिशब्दो हेतौ । यस्मान्निवेशे वृत्ते नैयमिकानि नियमेन कर्तव्यानि नित्यानि कर्माणि श्रूयन्ते ॥

इति त्रयोदशः खण्डः.

---

कानि पुनस्तानि—

**अग्निहोत्रमतिथयः ॥ १ ॥**

अग्निहोत्रम्, अतिथयोतिथिपूजा ।

यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षवः ॥ इति ॥

**यच्चान्यदेवंयुक्तम् ॥ २ ॥**

एवंविधं श्राद्धसन्ध्योपासनादि । एवमेतैः कर्मभिरहरहराक्रान्तस्य न शिरःकण्डूयनेप्यवसरो भवति, स कथं द्वौद्वौ मासौ गुरुकुले वसेदिति ॥

**अध्ययनार्थेन यं चोदयेन्न चैनं प्रत्याचक्षीत ॥ ३ ॥**

यमाचार्यं माणवकोध्ययनप्रयोजनमुद्दिश्य चोदयेत् 'शिष्यस्तेहं शाधि मां त्वां प्रपन्नाम्' इति, स एनं माणवकं नैव प्रत्याचक्षीत । चशब्दोवधारणे ॥

किमविशेषेण ? नेत्याह—

**न चास्मिन् दोषं पश्येत् ॥ ४ ॥**

चणिति निपातोस्ति 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण् कच्चिद्यत्र युक्तम्' इति । स चेदर्थे वर्तते । 'इन्द्रश्च मृडयाति नः'[1] इत्यादौ दर्शनात् तस्यायं प्रयोगः । न चेदस्मिन्माणवके दोषमनध्याप्यताहेतुं पश्येदिति ॥

**यदृच्छायामसंवृत्तौ गतिरेव तस्मिन् ॥ ५ ॥**

समानमधीयानेषु माणवकेषु यदि कस्य चिद्यदृच्छया दृष्टहेतुमन्तरेणैव बुद्धिमान्द्यादिना अध्ययनस्यासंवृत्तिस्स्यात् अधीतो

---

[1] ऋ. सं. २-४१-११.

भागो माणवकान्तरवन्नागच्छेत्तदा तस्यां यदृच्छायामसंवृत्तौ नस्मिन्नाचार्ये गतिरेव शुश्रूषैव माणवकस्य शरणम् । तथा च मनुः—

यथा खनन्खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति[1] ॥ इति ॥

अधिकं शुश्रूषितो गुरुस्सर्वात्मना तं शिक्षयेदिति ॥

## मातरि पितर्याचार्यवच्छुश्रूषा ॥ ६ ॥

मातृग्रहणेन पितामहीप्रपितामह्योरपि ग्रहणम्, पितृग्रहणेन पितामहप्रपितामहयोः । सर्व एते आचार्यवच्छुश्रूषितव्याः ॥

## समावृत्तेन सर्वे गुरव उपसङ्ग्राह्याः ॥ ७ ॥

उक्ताश्चानुक्ताश्च ज्येष्ठभ्रातृमातुलादयः सर्वे गुरवस्समावृत्तेन अहरहरुपसङ्ग्राह्याः ॥

## प्रोष्य च समागमे ॥ ८ ॥

यदि स्वयं प्रोष्य च समागतो भवति, गुरवो वा प्रोष्य समागता भवन्ति, तदापि ते उपसङ्ग्राह्याः ॥

## भ्रातृषु भगिनीषु च यथापूर्वमुपसङ्ग्रहणम् ॥ ९ ॥

पूर्वेणैव सिद्धे क्रमार्थमिदं वचनम् । यथापूर्वं ज्येष्ठक्रमेणेति ॥

## नित्या च पूजा यथोपदेशम् ॥ १० ॥

'पूजा वर्णज्यायसां कार्या । वृद्धतराणां च[2]' इत्युपदेशानुरोधेन या नित्या पूजा सा च यथापूर्वं वृद्धक्रमेण ॥

---

[1] मनुस्मृ. २–२१८.　　[2] आप. ध. १-१३-२, ३.

**ऋत्विक्श्वशुरपितृव्यमातुलानवरवयसः प्रत्युत्थायाभिवदेत् ॥ ११ ॥**

'त्रिवर्षपूर्वश्श्रोत्रियोऽभिवादनमर्हति'[1] इति वक्ष्यति । तेन अवरवयस ऋत्विगादयोऽप्यभिवादयन्ते, तानभिवादयमानान्प्रत्युत्थायाभिवदेत्, नान्येष्विव यथासुखमासीनवत् । अत उत्कृष्टानां तेषामियमेव पूजा ॥

**तूष्णीं वोपसङ्गृह्णीयात् ॥ १२ ॥**

अथ वा प्रत्युत्थाय स्वयमपि तान् तूष्णीमुपसङ्गृह्णीयात् । विद्याचारित्राद्यपेक्षो विकल्पः ॥

अथाभिवाद्या उच्यन्ते—

**दशवर्षं पौरसख्यं पञ्चवर्षं तु चारणम् ।**
**त्रिवर्षपूर्वश्श्रोत्रियः अभिवादनमर्हति ॥१३॥**

पुरे भवं पौरं पौरं च तत्सख्यं च पौरसख्यं सेवादिनिबन्धनं बान्धवं, तदभिवादनस्य निमित्तम् । कीदृशं? दशवर्षान्तरालम् । दशवर्षाधिकः पौरसखाऽश्रोत्रियोऽप्यभिवाद्य इति विवक्षितम् । पञ्चवर्षं तु चारणं सख्यमित्युपसमस्तमपेक्षते । चारण[2]शब्दः शाखाध्यायिषु रूढः । तेषां सख्यं पञ्चवर्षमभिवादनस्य निमित्तम् । श्रोत्रियं वक्ष्यति[3] । स त्रिवर्षपूर्वतामात्रेणाभिवादनमर्हति, न पूर्वसंस्तवमपेक्षते ॥

---

[1] आप. ध. १-१४-१३.
[2] ग. ङ. च—चरण.
[3] आप. ध. २-३-४.

**ज्ञायमाने वयोविशेषे वृद्धतरायाभिवाद्यम् ॥ १४ ॥**

क्रमार्थमिदं वचनम् । वयोविशेषे ज्ञायमाने पूर्वं वृद्धतरायाभिवाद्यं अभिवादनं कर्तव्यम्, पश्चाद्वृद्धायेति ॥

**विषमगतायागुरवे नाभिवाद्यम् ॥ १५ ॥**

उच्चैस्स्थाने नीचैस्स्थाने वा स्थितो विषमगतः । तस्मै गुरुव्यतिरिक्ताय नाभिवाद्यम् । गुरवे त्वभिवाद्यमेव, दर्शने सति तूष्णीमवस्थानस्यायुक्तत्वात् ॥

**अन्वारुह्य वाभिवादयीत ॥ १६ ॥**

इदमगुरुविषयम् । यत्रासावभिवादनीयस्स्थितस्तत्रान्वारुह्य वाभिवादयीत । अन्ववरुह्येत्येतदपि द्रष्टव्यम्, न्यायस्य तुल्यत्वात् । गुरौ तु दृष्टमात्र एवाभिवादनमित्युक्तम् ॥

**सर्वत्र तु प्रत्युत्थायाभिवादनम् ॥ १७ ॥**

सर्वत्र गुरावगुरौ च प्रत्युत्थायैवाभिवादनं कर्तव्यम् ॥

उत्तरे द्वे सूत्रे निगदसिद्धे—

**अप्रयतेन नाभिवाद्यम् ॥ १८ ॥**

**तथाऽप्रयताय ॥ १९ ॥**

**अप्रयतश्च न प्रत्यभिवदेत् ॥ २० ॥**

यद्यज्ञानादप्रयताय कश्चिदभिवादयेत्, तथापि सोऽप्रयतो न प्रत्यभिवदेत् ॥

**पतिवयसस्स्त्रियः ॥ २१ ॥**

पत्युर्यद्वयस्तदेव स्त्रीणां वयः। तेन तदनुरोधेन ज्येष्ठभार्यादिष्वभिवादनम् ॥

**न सोपानद्वेष्टितशिरा अवहितपाणिर्वाभिवादयीत ॥ २२ ॥**

अवहितपाणिस्समित्कुशादिहस्तः, दात्रादिहस्तो वा। अन्यत्प्रसिद्धम् ॥

**सर्वनाम्ना स्त्रियो राजन्यवैश्यौ च न नाम्ना॥२३॥**

स्त्रियस्सर्वनाम्नैवाभिवादयीत अभिवादयेहमिति, न नाम्ना असाधारणेन देवदत्तोहमभिवादय इति। एवं राजन्यवैश्यौ च ॥

**मातरमाचार्यदारं चेत्येके ॥ २४ ॥**

मातरमाचार्यदारं चैते अपि द्वे सर्वनाम्नैवाभिवादयीत, न नाम्नेत्येके मन्यन्ते। स्वमतं तु नाम्नैवेति ॥

वयोविशेषेणाभिवादनं हीनवर्णे नास्तीत्याह—

**दशवर्षश्च ब्राह्मणश्शतवर्षश्च क्षत्रियः।**
**पितापुत्रौ स्म तौ विद्धि तयोस्तु ब्राह्मणः पिता ॥ २५ ॥**

शिष्यं प्रत्याचार्यस्यायमुपदेशः। स्मशब्दः श्लोकपूरणे निपातः। ब्राह्मणः क्षत्रिय इत्युपलक्षणमुत्तमाधमवर्णानाम्। विद्धि जानीहि। स्पष्टमन्यत् ॥

कुशलमवरवयसं वयस्यं वा पृच्छेत् ॥ २६ ॥

ब्राह्मणविषयमिदम्, क्षत्रियादिषु विशेषस्य वक्ष्यमाणत्वात् । वयसा तुल्यो वयस्यः । अवरवयसं वयस्यं वा ब्राह्मणं पथादिषु सङ्गतं कुशलं पृच्छेत्, अपि कुशलम्? इति ॥

अनामयं क्षत्रियम् ॥ २७ ॥

अनामयः अरोगः, तं पृच्छेत्, अप्यनामयो भवतः? इति ॥

अनष्टं वैश्यम् ॥ २८ ॥

अप्यनष्टपशुधनोसि? इति ॥

आरोग्यं शूद्रम् ॥ २९ ॥

शूद्रमारोग्यं, अप्यरोगो भवान्? इति ॥

नासम्भाष्य श्रोत्रियं व्यतिव्रजेत् ॥ ३० ॥

श्रोत्रियं पथि सङ्गतमसम्भाष्य न व्यतिव्रजेत् ॥

अरण्ये च स्त्रियम् ॥ ३१ ॥

सभयस्य देशस्योपलक्षणमरण्यग्रहणम् । तत्र स्त्रियमेकाकिनीं दृष्ट्वाऽसम्भाष्य न व्यतिव्रजेत् । सम्भाषणं च मातृवद्भगिनीवच्च, भगिनि ! किं ते करवाणि? न भेतव्यमिति ॥

इति चतुर्दशः खण्डः.

इति श्रीहरदत्तमिश्रविरचितायामापस्तम्बधर्मसूत्रव्याख्यायामुज्ज्वलायां चतुर्थः पटलः.

सर्वेषामेव कर्मणां शेषभूतमाचमनं विधास्यंस्तदुपयोगिनो विधीनाह—

**उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात् ॥ १ ॥**

गुरूणामाचार्यादीनामन्येषां च वृद्धानां पूज्यानामतिथीनां चोपासने यदा नानुपास्ते तदा, होमे साङ्गे पित्र्यादन्यत्र, जप्यकर्मणि जपक्रियायां, भोजनाचमनयोश्च, स्वाध्यायेऽध्ययने च, यज्ञोपवीती स्याद्भवेत् । वासोविन्यासविशेषो यज्ञोपवीतम् । 'दक्षिणं बाहुमुद्धरतेव धत्ते सव्यमिति यज्ञोपवीतम्'[1] इति ब्राह्मणम् । वाससोऽसम्भवेऽनुकल्पं वक्ष्यति 'अपि वा सूत्रमेवोपवीतार्थे'[2] इति । मनुरप्याह—

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्[3] । इति,
उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः[4] । इति च ।

एतेषु कर्मसु यज्ञोपवीतविधानात्कालान्तरे नावश्यम्भावः ॥

**भूमिगतास्वप्स्वाचम्य प्रयतो भवति ॥ २ ॥**

आपश्शुद्धा भूमिगता वैतृष्ण्यं यासु गोर्भवेत् ।
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः[5] ॥
शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम्[6] ॥

इति याज्ञवल्क्यः ।

---

[1] तै. आ. २-१. [2] आप. ध. २-४-२२. [3] मनुस्मृ. २-४४.
[4] मनुस्मृ. २-६३. [5] मनुस्मृ. ५-१२८. [6] याज्ञ. १-१९२.

अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका।
दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकम् ॥

इति मनुः।

श्रावणे मासि सम्प्राप्ते सर्वा नद्यो रजस्वलाः।

इति स्मृत्यन्तरे। एवम्भूतदोषरहितास्वप्सु आचम्य प्रयतो भवति। प्रायत्यार्थमाचमनं भूमिगतास्वप्सु कर्तव्यमिति ॥

**यं वा प्रयत आचमयेत्* ॥ ३ ॥**

यं वा प्रयतोन्य आचमयेत्सोपि प्रयतो भवति। सर्वथा स्वयं वामहस्तावर्जिताभिरद्भिराचमनं न भवति। एतेन शास्त्रान्तरोक्तं कमण्डलुधारणमप्याचार्यस्य नाभिमतमिति लक्ष्यते। अलाबुपात्रेण नालिकेरपात्रेण वा स्वयमाचमनमाचरन्ति शिष्टाः॥

**न वर्षधारास्वाचामेत् ॥ ४ ॥**

पूर्वोक्तेन प्रकारेण प्रायत्यार्थस्याचमनस्य वर्षधारासु प्रसङ्गाभावात्पिपासितस्य पानप्रतिषेधार्थोयमिति केचित्। अपर आह—अस्मादेव प्रतिषेधाच्छिक्यादिस्थस्य करकादेर्या धारा तत्र प्रायत्यार्थमाचमनं न भवत्येव ॥

**तथा प्रदरोदके ॥ ५ ॥**

भूमेस्स्वयं दीर्णः प्रदेशः प्रदरः, तत्र यदुदकं तस्मिन्भूमिगतेपि नाचामेत् ॥

---

*आचामयेत्, इति पाठान्तरम्.

तप्ताभिश्चाकारणात् ॥ ६ ॥

तप्ताभिश्चाद्भिश्च नाचामेदकारणात् । ज्वरादौ कारणे सति न दोषः । तप्ताभिरिति वचनात् शृतशीताभिरदोषः । तथाचोष्णानामेव प्रतिषेधस्स्मृतिषु प्रायशो भवति ॥

रिक्तपाणिर्वयस उद्यम्याप उपस्पृशेत् ॥ ७ ॥

वय इति पक्षिनाम । यो रिक्तपाणिस्सन्वयसे पक्षिण उद्यम्य तस्य प्रोत्सारणाय पाणिमुद्यच्छेत्, स तत्कृत्वाप उपस्पृशेत् तेनैव पाणिना । रिक्तपाणिरिति वचनात्काष्ठलोष्टसहितस्य पाणेरुद्यमने न दोषः । केचिदुपस्पर्शनमाचमनमाहुः ॥

शक्तिविषये न मुहूर्तमप्यप्रयतस्स्यात् ॥ ८ ॥

शक्तौ सत्यां मुहूर्तमात्रमप्यप्रयतो न स्यात् । आचमनयोग्यं जलं दृष्ट्वैव मूत्रपुरीषादिकं कुर्यात्, यदि तावन्तं कालं वेगं धारयितुं शक्नुयात् ॥

नग्नो वा ॥ ९ ॥

मुहूर्तमपि न स्यादिति सम्बध्यते, शक्तिविषय इति च । व्रणादिना कौपीनाच्छादनाशक्तौ न दोषः ॥

नाप्सु सतः प्रयमणं विद्यते ॥ १० ॥

येन प्रयतो भवति तत्प्रयमणमाचमनम् । करणे ल्युट् । तदप्सु सतो वर्तमानस्य न भवति । जलमध्ये आसीनोपि नाचामेत् ॥

उत्तीर्य त्वाचामेत् ॥ ११ ॥

तीरे उत्तीर्य त्वाचामेन्न जले इत्ययमर्थो न विधेयः, पूर्वेण गतत्वात् । तस्मादयमर्थः—यदा नदीमुत्तरति नावा प्रकारान्तरेण वा, तदा तामुत्तीर्य तीरान्तरं गतः प्रयतोप्याचामेत्, नद्यादेरुत्तरणमप्याचमनस्य निमित्तमिति । तुशब्दोप्यर्थे ॥

नाप्रोक्षितमिन्धनमग्नावादध्यात् ॥ १२ ॥

श्रौते स्मार्ते लौकिके वाग्नौ अप्रोक्षितमिन्धनं नादध्यात् न प्रक्षिपेत् । केचिल्लौकिके नेच्छन्ति ॥

मूढस्वस्तरे चासःस्पृशन्नन्यानप्रयतान्प्रयतो मन्येत ॥ १३ ॥

'पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्टुपस्पर्शने सचेलोदकोपस्पर्शनाच्छुध्येत्'[1] इति गौतमः । तस्मिन्विषय इदमुच्यते, शयनतयासनतया वा सुप्रास्तीर्णः पलालादिसङ्घातस्स्वस्तरः । पृषोदरादिषु दर्शनाद्रूपसिद्धिः । यत्रातिश्लक्ष्णतया पलालादेर्मूलाग्रविभागो न ज्ञायते स मूढः । मूढश्चासौ स्वस्तरश्च मूढस्वस्तरः । तस्मिन्पतितादिष्वप्रयतेष्वासीनेषु यदि कश्चित्प्रयत उपविशेन्न च तान्संस्पृशेत्तदा स प्रयतो मन्येत, यथा प्रयत आत्मानं मन्यते प्रयतोस्मीति, तथैव मन्येत । नैवंविधे विषये तत्स्पृष्टिन्यायः प्रवर्तत इति ॥

तथा तृणकाष्ठेषु निखातेषु ॥ १४ ॥

तृणकाष्ठेषु भूमौ निखातेषु तत्स्पृष्टिन्यायो न भवति ॥

---

[1] गौ. ध. १४-३०.

**प्रोक्ष्य वास उपयोजयेत् ॥ १५ ॥**

शुद्धमपि वासः प्रोक्ष्यैवोपयोजयेद्वसीत । अपर आह—अशुद्धस्यापि वाससः प्रोक्षणमेव शुद्धिहेतुरिति ॥

**शुनोपहतस्सचेलोवगाहेत ॥ १६ ॥**

शुना उपहतः स्पृष्टः । यद्यपि चेलं न शुना स्पृष्टम् । तथापि सचेलोवगाहेत भूमिगतास्वप्सु स्नायान्नोद्धृताभिः । दष्टस्य तु स्मृत्यन्तरे प्रायश्चित्तम् । तत्र वसिष्ठः—

ब्राह्मणस्तु शुना दष्टो नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति[1] ॥

आङ्गिराः—

ब्रह्मचारी शुना दष्टस्त्रिरात्रेणैव शुध्यति ।
गृहस्थस्तु द्विरात्रेण एकाहेनाग्निहोत्रवान् ॥
नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् ।
तदेव त्रिगुणं वक्त्रे मूर्ध्नि चेत्स्याच्चतुर्गुणम् ॥
क्षत्रविट्छूद्रयोनिस्तु स्नानेनैव शुचिर्भवेत् ।
द्विगुणं तु वनस्थस्य तथा प्रव्राजितस्य च ॥
ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत् ।
यदा न दृश्यते सोमः प्रायश्चित्तं तदा कथम् ॥
यां दिशं तु गतस्सोमस्तां दिशं त्ववलोकयेत् ।
सोममार्गेण सा पूता पञ्चगव्येन शुद्ध्यति ॥

**प्रक्षाळ्य वा तं देशमग्निना सꣳस्पृश्य पुनः प्रक्षाळ्य पादौ चाचम्य प्रयतो भवति ॥१७॥**

---

[1] वासि. ध. २२-२१.

शुना वा स्पृष्टं देशं प्रक्षाळ्य, अग्निना च संस्पृश्य, पुनः प्रक्षाळ्य, पादौ च प्रक्षाळ्य, पश्चादाचम्य प्रयतो भवति। व्यवस्थितविकल्पोयम्—

ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते।
तत्र स्नानविधिः प्रोक्तो ह्यधः प्रक्षाळनं स्मृतम्॥

इति मानवे दर्शनात्॥

**अग्निं नाप्रयत आसीदेत्॥ १८॥**

अप्रयतस्सन्नग्निं नासीदेत्, अग्नेरासन्नो न भवेत्, यावति देश ऊष्मोपलम्भः। अत्राप्यशक्तौ न दोषः॥

**इषुमात्रादित्येके॥ १९॥**

इषुमात्रादर्वाङ्नासीदेत् अग्नेरासन्नो न भवेत् ऊष्मोपलम्भो भवतु, मा वा भूदित्येके मन्यन्ते॥

**न चैनमुपधमेत्॥ २०॥**

अप्रयत इत्येव। एनमग्निमप्रयतो नोपधमेत्। प्रयतस्य न दोषः।

मुखेनोपधमेदग्निं मुखादग्निरजायत।

इति स्मृत्यन्तरे दर्शनात्। 'नाग्निं मुखेनोपधमेत्'[1] इति मानवे दर्शनादुभयोर्विकल्पः। अपर आह—वाजसनेयिके श्रौतप्रकरणे 'मुखादग्निरजायत तस्मान्मुखेनोपसमिन्ध्यात्' इति दर्शनाच्छ्रौतेषु मुखेनैवोपधमनम्, अन्यत्र स्मार्ते प्रतिषेध इति।

---

[1]मनुस्मृ. ४-५३.

अन्ये तु—वैणवेनायसेन वा सुषिरेणोपसमिन्धनमिच्छन्ति । एवं हि मुखव्यापारस्यान्वयाच्छ्रुतिरप्यनुगृहीता भवति, आस्यबिन्दूनां पतनशङ्काभावात्प्रतिषेधस्मृतिरपीति ॥

खट्वायां नोपदध्यात् ॥ २१ ॥

खट्वायां खट्वाया अधः अग्निं नोपदध्यात् । अत्राप्यशक्तौ न दोषः ॥

प्रभूतैधोदके ग्रामे यत्रात्माधीनं प्रयमणं तत्र वासो धार्म्यो ब्राह्मणस्य ॥ २२ ॥

प्रभूतमेधोदकं यस्मिन् ग्रामे तत्र ब्राह्मणस्य वासो धार्म्यः धर्म्यः । तत्रापि न सर्वत्र । किं तर्हि? यत्रात्माधीनं प्रयमणं प्रायत्यम्, मूत्रपुरीषप्रक्षाळनादीनि यत्रात्माधीनानि तत्रैव । यत्र तु कूपेष्वेवोदकं तत्र बहुकूपेपि न वस्तव्यम् । ब्राह्मणग्रहणाद्वर्णान्तरस्यानियमः । ग्रामग्रहणादेवम्भूतेषु घोषादिष्वपि न वस्तव्यम् ॥

मूत्रं कृत्वा पुरीषं वा मूत्रपुरीषलेपानन्नलेपानुच्छिष्टलेपान्रेतसश्च ये लेपास्तान्प्रक्षाळ्य पादौ चाचम्य प्रयतो भवति ॥ २३ ॥

मूत्रं पुरीषं वा कृत्वा उत्सृज्य, तयोर्मूत्रपुरीषयोर्ये लेपास्तस्मिन्देशे स्थिताः प्रदेशान्तरे वा पतितास्तांत्सर्वानन्नलेपानुच्छिष्टानप्युच्छिष्टलेपानन्नलेपानपि, तथा रेतसश्च ये लेपास्स्वप्नादौ मैथुने च, तांत्सर्वानद्भिर्मृदा च प्रक्षाळ्य, पादौ च लेपवर्जितावपि प्रक्षाळ्य, पश्चादाचम्य प्रयतो भवति । अत्र मृत्प्रमाणस्य

सङ्ख्यायाश्चानुक्तत्वात् यावता गन्धलेपक्षयो भवति तावदेव विवक्षितम् । तथा च याज्ञवल्क्यः—

गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः[1] । इति ।

देवलस्तु व्यक्तमेवाह—

यावत्स शुद्धिं मन्येत तावच्छौचं समाचरेत् ।
प्रमाणं शौचसङ्ख्याया न शिष्टैरुपदिश्यते ॥ इति ।

अत्र पैठीनसिः—

मूत्रोच्चारे कृते शौचं न स्यादन्तर्जलाशये ।
अन्यत्रोद्धृत्य कुर्यात्तु सर्वदैव समाहितः ॥ इति ॥

इति पञ्चदशः खण्डः.

---

## तिष्ठन्नाचामेत्प्रह्वो वा ॥ १ ॥

तिष्ठन्प्रह्वो वा नाचामेत् । नायं प्रतिषेधश्शक्यो वक्तुम् । कथम् ? 'आसीनस्त्रिराचामेत्'[2] इति वक्ष्यति । ततश्च यथा शयानस्याचमनं न भवेत्तथा तिष्ठतः प्रह्वस्य वा न भवति । एवं तर्हि नायं शौचार्थस्याचमनस्य प्रतिषेधः । किं तर्हि ? पानीयपानस्य प्रतिषेधः । तथा च गौतमः—'नाञ्जलिना पिबेत् । न तिष्ठन्'[3] इति । अपर आह—अस्मादेव प्रतिषेधात्क्वचित्तिष्ठतः प्रह्वस्य चाचमनमभ्यनुज्ञातं भवति; भूमिगतास्वप्सु तीरस्यायोग्यत्वे ऊरुदघ्ने नाभिदघ्ने वा जले स्थितस्याचमनं भवति ।

---

[1] या. स्मृ—१-१७.　[2] आप. ध.—१-१६-२.　[3] गौ. ध.—९-९, १०.

गौतमीयेपि 'न तिष्ठन्नुद्धृतोदकेनाचामेत्'[1] इति सूत्रच्छेदादुद्धृतोदकेनैव तिष्ठतः प्रतिषेध इति ॥

अथाचमनविधिः—

**आसीनस्त्रिराचामेद्धृदयङ्गमाभिरद्भिः ॥ २ ॥**

अद्भिः, द्वितीयार्थे तृतीया । अत्रानुक्तं स्मृत्यन्तरवचनादुपस्क्रियते । आसीनश्शुचौ देशे नासने, भोजनान्ते त्वासने, दक्षिणं बाहुमूर्वन्तरे कृत्वा, प्राङ्मुख उपविष्ट उदङ्मुखो वा हृदयङ्गमा आपः करतलस्थितासु यावतीषु माषो निमज्जति तावतीः फेनबुद्बुदरहिता वीक्षितास्त्रिराचामेत्पिबेद्ब्राह्मणः, क्षत्रियः कण्ठगाः, वैश्यस्तालुगाः, शूद्रो जिह्वास्पृष्टास्सकृत् ॥

**त्रिरोष्ठौ परिमृजेत् ॥ ३ ॥**

परिमृज्यात् ॥

**द्विरित्येके ॥ ४ ॥**

तुल्यविकल्पः ॥

**सकृदुपस्पृशेत् ॥ ५ ॥**

मध्यमाभिस्तिसृभिरङ्गुलीभिरेवोष्ठौ ॥

**द्विरित्येके ॥ ६ ॥**

तुल्यविकल्पः ॥

**दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाण्युपस्पृशेच्चक्षुषी नासिके श्रोत्रे च ॥ ७ ॥**

---

[1] गौ. ध.–९-१०

दक्षिणेन पाणिना सव्यं पाणिं प्रोक्ष्य, तथा पादौ शिरश्च, इन्द्रियाण्युपस्पृशेदङ्गुळीभिः । सर्वेषामिन्द्रियाणां प्रसङ्गे परिसंचष्टे—चक्षुषी नासिके श्रोत्रे चेति । इन्द्रियाणीति वचनं स्वरूपकथनमात्रम् । तत्राङ्गुष्ठानामिकाभ्यां चक्षुषी । केचिद्युगपत्, केचित्पृथक्पृथक् । अङ्गुष्ठप्रदेशिनीभ्यां नासिके । अङ्गुष्ठकनिष्ठिकाभ्यां श्रोत्रे । अत्र सहभावस्याशक्यत्वात्पृथग्भावस्य निश्चितत्वात् पूर्वत्रापि पृथगेवेति युक्तम्[1] ॥

**अथाप उपस्पृशेत् ॥ ८ ॥**

इन्द्रियस्पर्शनानन्तरं हस्तौ प्रक्षाळयेत् ॥

**भोक्ष्यमाणस्तु प्रयतोपि द्विराचामेद्द्विः परिमृजेत्सकृदुपस्पृशेत् ॥ ९ ॥**

भोजनं करिष्यन् प्रयतोपि द्विराचमनं कुर्यात् । अत्र विशेषः—द्विः परिमृजेत्, न विकल्पेन त्रिः । सकृदुपस्पृशेत्, न विकल्पेन द्विः । प्रयतोपीति वचनादप्रायत्ये सर्वत्र द्विराचमनमाचार्यस्याभिप्रेतम् । अत्र स्मृत्यन्तरम्—

क्षुत्वा सुप्त्वा च भुक्त्वा च ष्ठीवित्वोक्त्वानृतं वचः ।
आचान्तः पुनराचामेद्वासोपि परिधाय च ॥ इति ॥

**श्यावान्तपर्यन्तावोष्ठावुपस्पृश्याचामेत् ॥ १० ॥**

दन्तमूलात्प्रभृत्योष्ठौ । तत्रालोमकः प्रदेशश्श्यावः । तस्यान्त-

---

[1] ञ—शक्यत्वात्पृथगपि क्रियते । अत्र पृथग्भावस्य निश्चितत्वात्पूर्वत्रापि पृथगेवेति युक्तम्, क. ...युक्तमित्यन्ये.

स्सलोमकः । तत्पर्यन्तावोष्ठावुपस्पृश्याचामेत् । ओष्ठयोरलोमकप्रदेशमङ्गुल्या काष्ठादिना वोपस्पृश्याचामेदिति ॥

न श्मश्रुभिरुच्छिष्टो भवत्यन्तरास्ये सद्भिर्यावन्न हस्तेनोपस्पृशति ॥ ११ ॥

श्मश्रूणि यदाऽऽस्यान्तर्भवन्ति तदा तैरन्तरास्ये सद्भिरुच्छिष्टो न भवति, यावन्न हस्तेनोपस्पृशति । उपस्पर्शने तूच्छिष्टो भवति, ततश्चाचामेदिति । अस्मादेव प्रतिषेधाज्ज्ञायते—यत्किञ्चिदपि द्रव्यमन्तरास्ये सदुच्छिष्टतायां निमित्तमिति ॥

य आस्याद्बिन्दवः पतन्त उपलभ्यन्ते तेष्वाचमनं विहितम् ॥ १२ ॥

भाषमाणस्यास्यात्पतन्तो ये लालाबिन्दव उपलभ्यन्ते चक्षुषा स्पर्शनेन वा ये उपलब्धुं योग्यास्तेष्वाचमनं विहितम् । वेदोच्चारणे तु गौतमः— 'मन्त्रब्राह्मणमुच्चारयतो ये बिन्दवश्शरीर उपलभ्यन्ते न तेष्वाचमनम्'[1] इति ॥

ये भूमौ न तेष्वाचामेदित्येके ॥ १३ ॥

ये भूमौ बिन्दवः पतन्ति न शरीरे तेषु नाचामेदित्येके मन्यन्ते । स्वमतं तु तेष्वप्याचामेदिति ॥

स्वप्ने क्षवथौ शिङ्घाणिका[2]श्र्वालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं च गत्वाऽमेध्यं चोपस्पृश्याप्रयतं

---

[1]गौ. ध. नास्ति, मुद्रितकोशे [2]शृङ्घाणिका, शृङ्खाणिका इत्यपि पाठौ.

च मनुष्यं नीवीं च परिधायाप उपस्पृशेत् ॥ १४ ॥

स्वप्नः स्वापः, क्षवथुः क्षुतम्, तयोः कृतयोः । शिङ्घाणिका नासिकामलम्, अश्रु नेत्रजलम्; तयोरालम्भे स्पर्शे । लोहितस्य रुधिरस्य, केशानां शिरोगतानां भूमिगतानां च, अग्न्यादीनां चतुर्णामालम्भे । महापथं च गत्वा । अमेध्यं च गोव्यतिरिक्तानां मूत्रपुरीषे ताम्बूलनिषेकादि चोपस्पृश्य, अप्रयतं च मनुष्यमुपस्पृश्य । नीवी प्रसिद्धा, तद्योगादधोवासो लक्ष्यते, तच्च परिधायाप उपस्पृशेत् । केषु चित्स्नानम्, केषु चिदाचमनम्, केषु चित्स्पर्शनमात्रम्, यावता प्रयतो मन्यते ॥

आर्द्रं वा शकृदोषधीर्भूमिं वा ॥ १५ ॥

उपस्पृशेदित्येव । त्रिष्वार्द्रशब्दस्सम्बध्यते लिङ्गवचनादिपरिणामेन, आर्द्रं वा शकृत्, ओषधीर्वा आर्द्राः, आर्द्रां भूमिं वा। पूर्वोक्तेष्वेव सर्वेषु वैकल्पिकमिदम् ॥

एवमाचमनं सनिमित्तमुक्तम् ॥

अथाभक्ष्याधिकारः—

हिंसार्थेनासिना मांसं छिन्नमभोज्यम् ॥ १६ ॥

असिग्रहणं क्षुरादेरप्युपलक्षणम् । यन्मांसं पाककाले हिंसार्थेनासिना छिन्नं तदभोज्यम् ॥

दद्भिरपूपस्य नापच्छिन्द्यात् ॥ १७ ॥

अपूपग्रहणं मूलफलादेरप्युपलक्षणम् । द्वितीयार्थे षष्ठी । दन्तैरपूपं नापच्छिन्द्यात्, किन्तु हस्तादिभिरपच्छिद्य भक्षयेत् ॥

**यस्य कुले म्रियेत न तत्रानिर्दशे भोक्तव्यम्॥१८**

यस्य कुले कश्चिन्म्रियेतासपिण्डतायां सत्यां तत्रानिर्गते दशाहे न भोक्तव्यम् । अनिर्दश इत्याशौचकालोपलक्षणम् । तेन क्षत्रियादिष्वधिकं, पक्षिण्यादिषु न्यूनम् ॥

**तथानुत्थितायां सूतिकायाम् ॥ १९ ॥**

सूतका सूतिका, तस्यामनुत्थितायाम् । उत्थानं नाम सूतिकागारे निवेशितानामुदकुम्भादीनामपनयनम् । तच्च दशमेऽहनि भवति 'दशम्यामुत्थितायाम्'[1] इति गृह्ये उक्तत्वात् । अत्राप्याशौचकालोपलक्षणत्वाद्यावदाशौचं तावदभोजनम् ।

अत्राङ्गिराः—

ब्रह्मक्षत्रविशां भुक्त्वा न दोषस्त्वग्निहोत्रिणाम् ।
सूतके शाव आशौचे त्वस्थिसञ्चयनात्परम् ॥ इति ॥

**अन्तश्शवे च ॥ २० ॥**

यावद्ग्रामान्न ह्रियते शवस्तावत्तत्र न भोक्तव्यम् । आचारस्तु धनुश्शतादर्वाक् । तत्रापि प्रदीपमारोप्य, उदकुम्भं चोपनिधाय भुञ्जते, यदि समानवंशं गृहं* न भवति ॥

**अप्रयतोपहतमन्नमप्रयतं न त्वभोज्यम् ॥२१॥**

अप्रयतेनाशुचिनोपहतं स्पृष्टमप्रयतं भवति । किन्त्वशुद्धमप्यभोज्यं न भवति । कः पुनरप्रयतस्याभोज्यस्य च विशेषः ? उच्यते—अप्रयतमन्नमग्नावधिश्रितमद्भिः प्रोक्षितं भस्मना मृदा वा संस्पृष्टं वाचा च प्रशस्तं प्रयतं भवति भोज्यं च । अभोज्यं तु लशुनादि न कथं चिदपीति ॥

---

[1] आप. गृ. १५-८.

*ख—वंशत्वं गृहाणां.

**अप्रयतेन तु शूद्रेणोपहृतमभोज्यम् ॥ २२ ॥**

अप्रयतेन तु शूद्रेणोपहृतमानीतमन्नमभोज्यम्, स्पृष्टमस्पृष्टं च। स्पृष्टमेवेत्यन्ये ॥

**यस्मिꣳश्चान्ने केशस्स्यात् ॥ २३ ॥**

तदप्यभोज्यम्। एतच्च पाकदशायामेव पतितेन केशेन सह यत्पक्वमन्नं तद्विषयम्। पश्चात्केशसंसर्गे तु घृतप्रक्षेपादिना संस्कृतस्य भोज्यत्वं स्मृत्यन्तरोक्तम् ॥

**अन्यद्वाऽमेध्यम् ॥ २४ ॥**

अन्यद्वाऽमेध्यं नखादि यस्मिन्नन्ने स्यात्तदप्यभोज्यम्। इदमपि पूर्ववत्। अत्र बोधायनः—'केशकीटनखरोमाखुपुरीषाणि दृष्ट्वा तावन्मात्रमन्नमुद्धृत्य शेषं भोज्यम्'[1] इति। वसिष्ठस्तु 'कामं तु केशकीटादीनुत्सृज्याद्भिः प्रोक्ष्य भस्मनावकीर्य वाचा प्रशस्तमुपयुञ्जीत'[2] इति ॥

**अमेध्यैरवमृष्टम् ॥ २५ ॥**

अमेध्यैः कळञ्जपलाण्ड्वादिभिरवमृष्टं स्पृष्टमभोज्यम् ॥

**कीटो वाऽमेध्यसेवी ॥ २६ ॥**

'यस्मिंश्चान्ने केशस्स्यात्'[3] इति व्यवहितमपि सम्बध्यते। अमेध्यसेवी कीटः पूत्यण्डाख्यः ॥

**मूषिकलाङ्गं वा ॥ २७ ॥**

पूर्ववत्सम्बन्धः। मूषिकला मूषिकपुरीषम्। अङ्गं वा। सम-

---

[1] बो. ध. २-१२-६. [2] वा. ध. १४-२३ [3] आप. ध. १-१६-२३.

स्तमपि मूषिकग्रहणं सम्बध्यते। यस्मिन्नन्ने मूषिकस्याङ्गं पुच्छपादादि भवति तदप्यभोज्यम् ॥

**पदा वोपहतम्॥ २८ ॥**

प्रयतेनापि यत्पदा स्पृष्टं तदप्यभोज्यम् ॥

**सिचा वा ॥ २९ ॥**

सिग्वस्त्रदशा। परिहितस्य वाससः सिचा यत्स्पृष्टं तदप्यभोज्यम् ॥

**शुना वापपात्रेण वा दृष्टम् ॥ ३० ॥**

दृष्टमिति प्रत्येकमभिसम्बध्यते। शुना वा यद्दृष्टं अपपात्रेण वा यद्दृष्टं तदप्यभोज्यम्। पतितचण्डालसूतिकोदक्यादयोपपात्राः, अपगताः पात्रेभ्यः। न हि ते पात्रे भोक्तुं लभन्ते ॥

**सिचा वोपहतम् ॥ ३१ ॥**

अपरिहितस्य शुद्धस्यापि वाससस्सिचा यदुपहतं तदप्यभोज्यम् ॥

**दास्या वा नक्तमाहृतम् ॥ ३२ ॥**

दास्या रात्रावाहृतमभोज्यम्। स्त्रीलिङ्गनिर्देशाद्दासेनाहृते न दोषः। अन्ये लिङ्गमविवक्षितं मन्यन्ते। नक्तमिति वचनाद्दिवा न दोषः ॥

**भुञ्जानं वा ॥ ३३ ॥**

इति षोडशः खण्डः.

---

**यत्र शूद्र उपस्पृशेत् ॥ १ ॥**

यदा भोजनदशायां शूद्र उपस्पृशेत् तदापि न भुञ्जीत। भुञ्जानग्रहणादन्यदा शूद्रोपस्पर्शने नाप्रायत्यमिति केचित्। अन्ये तु—सदा भवत्येवाप्रायत्यं, भोजनदशायामाधिक्यप्रतिपादनाय निषेध इति ॥

**अनर्हद्भिर्वा समानपङ्क्तौ ॥ २ ॥**

सर्वत्र वाशब्दस्समुच्चये। अभिजनविद्यावृत्तरहिता अनर्हन्तः। तैस्सह समानायां पङ्क्तौ न भुञ्जीत ॥

**भुञ्जानेषु वा यत्रानूत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा ॥ ३ ॥**

समानपङ्क्तावित्यनुवर्तते। समानपङ्क्तौ बहुषु भुञ्जानेषु यद्येकोनूत्थाय भोजनाद्विरम्य उच्छिष्टं शिष्यादिभ्यः प्रयच्छेत्, आचामेद्वा, तस्यां पङ्क्तावितरेषां च न भोक्तव्यम्। अतो बहुषु भुञ्जानेषु एको[1] मध्ये न विरमेत्। भोजनकण्टक इति तमाचक्षते ॥

**कुत्सयित्वा वा यत्रान्नं दद्युः ॥ ४ ॥**

मूर्ख, वैधवेय, विषं भुङ्क्ष्व, इत्येवं कुत्सयित्वा यत्रान्नं दद्युः तदप्यभोज्यम् ॥

**मनुष्यैरवघ्रातमन्यैर्वाऽमेध्यैः ॥ ५ ॥**

मनुष्यैरन्यैर्वा मार्जारादिभिरमेध्यैरवघ्रातमन्नमभोज्यम्। अवेत्युपसर्गप्रयोगाद्दूरस्थैर्गन्धस्याघ्राणे न दोषः ॥

[1] घ. ङ. ञ—कोपि.

**न नावि भुञ्जीत ॥ ६ ॥**

नाव्यासीनो न भुञ्जीत शुद्धेपि पात्रे ॥

**तथा प्रासादे ॥ ७ ॥**

प्रासादो दारुमयो मञ्चः, तत्रापि न भुञ्जीत ॥

**कृतभूमौ तु भुञ्जीत ॥ ८ ॥**

भूमावपि भुञ्जानः कृतायां गोमयादिना संस्कृतायां भुञ्जीत। अपर आह—प्रासादोपि यदा कृतभूमिर्भवति, न केवलं दारुमयः, तदा तत्र भुञ्जीतैवेति ॥

**अनाप्रीते मृन्मये भोक्तव्यम् ॥ ९ ॥**

यदि मृन्मये भुञ्जीत, तदा अनाप्रीते भोक्तव्यम् । आप्रीतं क्वचित्कार्ये पाकादावुपयुक्तम् ॥

**आप्रीतं चेदभिदग्धे ॥ १० ॥**

आप्रीतमेव चेल्लभ्यते, तदाग्निना तदभितो दग्ध्वा तत्र भोक्तव्यम् ॥

**परिमृष्टं लौहं प्रयतम् ॥ ११ ॥**

लौहं लोहविकारभूतं कांस्यादि भोजनपात्रं भस्मादिभिः परिमृष्टं सत्प्रयतं भवति। तत्र भस्मना कांस्यं, आम्लेन ताम्रं, राजतं शकृता, सौवर्णमद्भिरेवेत्यादि स्मृत्यन्तरवशाद्द्रष्टव्यम् ॥

**निर्लिखितं दारुमयम् ॥ १२ ॥**

दारुमयं भाजनं निर्लिखितं तष्टं सत्प्रयतं भवति ॥

**यथागमं यज्ञे ॥ १३ ॥**

यज्ञपात्रं तु यथागमं शोधितं प्रयतं भवति। तद्यथा—अग्नि-

होत्रहवणी दर्भैरद्भिः प्रक्षालिता, सोमपात्राणि मार्जालीये प्रक्षालितानि, आज्यपात्राण्युष्णेन वारिणा ॥

**नापणीयमन्नमश्नीयात् ॥ १४ ॥**

आपणः पण्यवीथिका । तत्र क्रीतं लब्धं वा आपणीयं, तच्च कृतान्नं नाश्नीयात् । व्रीह्यादिषु न दोषः ॥

**तथा रसानामाममांसमधुलवणानीति परिहाप्य ॥ १५ ॥**

रसानां रसद्रव्याणि । तान्यप्यापणीयानि नाश्नीयात्, आममांसादीन्वर्जयित्वा ॥

**तैलसर्पिषी तूपयोजयेदुदकेवधाय ॥ १६ ॥**

तैलसर्पिषी त्वापणीये अप्युपयोजयेत्, उदकेवधाय निषिच्य पाकेन तैलसर्पिषी शोधयित्वा । कार्यविरोधो यथा न भवति तथोदकेन संसृज्येत्यन्ये व्याचक्षते ॥

**कृतान्नं पर्युषितमखाद्यापेयानाद्यम् ॥ १७ ॥**

कृतान्नं पक्कान्नं, तत्पर्युषितं पूर्वेद्युः पक्कं सदखाद्यमपेयमनाद्यं च । यथायोगं खरविशदं द्रवं[1] मृदुविशदं सिद्धं [स्निग्धं] च ॥

**शूक्तं च ॥ १८ ॥**

शूक्तं कालपाकेनाम्लीभूतं तदपर्युषितमप्यखाद्यापेयानाद्यम् ॥

**फाणितपृथुकतण्डुलकरम्बभरुजसक्तुशाकमांसपिष्टक्षीरविकारौषधिवनस्पतिमूलफलवर्जम् ॥ १९ ॥**

---

[1] घ. ङ. अ—द्रवमिति नास्ति. ख. ग—दृढं.

अनन्तरोक्तं विधिद्वयं फाणितादीन् वर्जयित्वा द्रष्टव्यम् । फाणितं पानविशेषः, इक्षुरस इति केचित् । भर्जितानां व्रीहीणां तण्डुलाः पृथूकृताः पृथुकाः । करम्बः दधिसक्तुसमाहारो यः करम्भ इति प्रसिद्धः । वेदेप्युभयं भवति—'करम्बैर्जुहोति'[1] 'धानाः करम्भः परिवापः'[2] इति । भरुजाः भ्रष्टा यवाः । क्षीरविकारो दध्यादि । प्रसिद्धमन्यत् ॥

अथ 'शूक्तं च'[3] इत्यस्य विधेश्शेषः—

## शूक्तं चापरयोगम् ॥ २० ॥

परेण द्रव्यान्तरेण योगो यस्य तत्परयोगम्, ततोन्यदपरयोगम् । तदेव शूक्तं वर्ज्यम् । यत्तु दध्यादिद्रव्यान्तरसंस्पृष्टं शूक्तं तद्भोज्यमेव । एवं च पूर्वत्रैवापरयोगमिति विशेषणं वक्तव्यम्, इदमेव वा सूत्रमस्तु । सूत्रद्वयकरणं त्वाचार्यप्रवृत्तिकृतम् ; यथा 'सलावृक्येकसृकोलूकशब्दाः'[4] इति पूर्वं सामान्येनाभिधाय 'सलावृक्यामेकसृक इति स्वप्नपर्यान्तम्'[5] इति पश्चाद्विशेष उक्तः ॥

## सर्वं मद्यमपेयम् ॥ २१ ॥

मद्यं मदकरं तत्सर्वमपेयम् । अत्र तु स्मृत्यन्तरवशाद्व्यवस्था । अत्र मनुः—

गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
यथैवैका न पातव्या तथा सर्वा द्विजोत्तमैः[6] ॥ इति ।

सुराव्यतिरिक्तं तु मद्यं ब्राह्मणस्य नित्यमपेयम् । तथा च

---

1 तै. ब्रा. ३-८-१४. 2 तै. सं ६-५-११. 3 आप. ध. १-१७-१८.
4 आप. ध. १-१०-१९. 5 आप. ध. १-११-३३. 6 मनुस्मृ. ११-९५.

गौतमः—'मद्यं नित्यं ब्राह्मणस्य क्षत्रियवैश्ययोस्तु ब्रह्मचारिणोः'[1] इति ॥

**तथैलकं पयः ॥ २२ ॥**

अविरेलका, तस्याः क्षीरमपेयम् ॥

**उष्ट्रीक्षीरमृगीक्षीरसन्धिनीक्षीरयमसूक्षीराणीति ॥ २३ ॥**

उष्ट्रीमृग्यौ प्रसिद्धे। या गर्भिणी सती दुग्धे सा सन्धिनीति शास्त्रान्तरे प्रसिद्धा। एककालदोहेत्यन्ये। एकस्मिन्प्रसवे याऽनेकं गर्भं सूते सा यमसूः। उष्ट्र्यादीनां क्षीराण्यपेयानि। इति करणादेवम्प्रकाराणामेकशफानां क्षीरमपेयम्। तथा च मनुः—

आरण्यानां च सर्वेषां मृगाणां महिषीं विना।
स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥
अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः[2] ॥ इति ॥

**धेनोश्चानिर्दशायाः ॥ २४ ॥**

धेनुर्नवप्रसूतिका गौः। चकारादजामहिष्योश्च, 'अजा गावो महिष्यश्च' इति मानवे दर्शनात् ॥

**तथा कीलालौषधीनां च ॥ २५ ॥**

कीलालौषधयः सुरार्था ओषधयः, तासां विकारभूतमन्नं नाद्यम् ॥

---

[1] गौ. धर्म. २-२०.　　[2] मनुस्मृ. ५-९, ८.

**करञ्जपलण्डुपरारिकाः[1] ॥ २६ ॥**

करञ्जं रक्तलशुनम्, पलण्डु श्वेतम्, परारिका कृष्णम्, डुण्डुभाख्यया[2] म्लेच्छानां प्रसिद्धम् । एते चाभक्ष्याः ॥

प्रतिपदपाठो न शक्य इति समासेनाह—

**यच्चान्यत्परिचक्षते ॥ २७ ॥**

यच्चान्यदेवंभूतं शिष्टाः परिचक्षते वर्जयन्ति तदप्यभक्ष्यम् । तत्र मनुः—

लशुनं गृञ्जनं चैव पलण्डुकवकानि च ।
अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च[3] ॥ इति ॥

**क्याकभोज्यमिति हि ब्राह्मणम् ॥ २८ ॥**

क्याकु छत्राकं, तदप्यभोज्यमभक्ष्यम् । ब्राह्मणग्रहणमुक्तार्थम् ॥

**एकखुरोष्ट्रगवयग्रामसूकरशरभगवाम् ॥ २९ ॥**

मांसमित्यर्थाद्गम्यते । एकखुरा अश्वादयः । गवयो गोसदृशः पशुः । शरभोऽष्टपाद आरण्यो मृगः । अन्ये प्रसिद्धाः । एतेषां मांसमभक्ष्यम् ॥

**धेन्वनडुहोर्भक्ष्यम् ॥ ३० ॥**

धेन्वनडुहोर्मांसं भक्ष्यम् । गोप्रतिषेधस्य प्रतिप्रसवः ॥

**मेध्यमानडुहमिति वाजसनेयकम् ॥ ३१ ॥**

आनडुहं मांसं न केवलं भक्ष्यम् । किं तर्हि? मेध्यमपीति वाजसनेयिनस्समामनन्ति ॥

---

[1] ग. पलाण्डुपलागिकाः. ख. पलारिकाः.
[2] ख. घ. ङ. ञ.—मण्डुभाख्यया.
[3] मनुस्मृ. ५-५.

## कुक्कुटो विकिराणाम् ॥ ३२ ॥

व्यवहितमप्यभोज्यमिति सम्बध्यते । पादाभ्यां विकीर्य कीटधान्यादि ये भक्षयन्ति ते मयूरादयो विकिराः । तेषां मध्ये कुक्कुटो न भक्ष्यः । स्मृत्यन्तरवशाद्ग्राम्यो नारण्यः ॥

## प्लवः प्रतुदाम् ॥ ३३ ॥

तुण्डेन प्रतुद्य ये भक्षयन्ति ते दार्वाघाटादयः प्रतुदाः । तेषां मध्ये प्लव एवाभक्ष्यः । प्लवश्शकटाबिलाख्यो[1] बकविशेषः ॥

## क्रव्यादः ॥ ३४ ॥

क्रव्यं मांसम्, तदेव केवलं येऽदन्ति ते क्रव्यादा गृध्रादयः । तेप्यभक्ष्याः ॥

## हंसभासचक्रवाकसुपर्णाश्च ॥ ३५ ॥

हंसः प्रसिद्धः । भासः श्येनाकृतिः पीनतुण्डः । चक्रवाको मिथुनचरः । सुपर्णश्श्येनः । एते चाभक्ष्याः ॥

## क्रुञ्चक्रौञ्चवार्ध्राणसलक्ष्मणवर्जम् ॥ ३६ ॥

क्रुञ्चा बृन्दचराः । क्रौञ्चा मिथुनचराः । ते चाभक्ष्याः । सूत्रे क्रौञ्चेति विभक्तिलोपश्छान्दसः । किमविशेषेण क्रुञ्चक्रौञ्चा न भक्ष्याः? नेत्याह—वार्ध्राणसलक्ष्मणवर्जम् । श्वेतो लोहितो वा मूर्धा येषां ते लक्ष्मणाः । त एव विशिष्यन्ते वार्ध्राणसा इति । वार्ध्रं चर्म, तदाकारा नासिका येषां तानेवम्भूतान् लक्ष्मणान्वर्जयित्वा क्रुञ्चक्रौञ्चा न भक्ष्या इति । अन्ये त्वाहुः—क्रव्याद इति प्राप्तस्य प्रतिषेधस्य क्रुञ्चादिषु चतुर्ष्वप्रतिषेध इति । तत्र लक्ष्मणा सारसी । लक्ष्मणवर्जमिति

---

[1] ख. घ. ङ.—शकाबिलाख्यः, ग.—शकबलाख्यः.

'ङ्यापोस्संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वः। एवं कुञ्चादिशब्दस्याप्यजादिटाबन्तस्य ॥

**पञ्चनखानां गोधाकच्छपश्वाविट्छ्र्यकखङ्गशशपूतिखषवर्जम् ॥ ३७ ॥**

पञ्चनखाः नरवानरमार्जारादयः। तेषां मध्ये गोधादीन्सप्त वर्जयित्वान्येऽभक्ष्याः। गोधा कृकलासाकृतिर्महाकाया। कच्छपः कूर्मः। श्वाविट् वराहविशेषः, यस्य नाराचाकाराणि रोमाणि। शर्यकः शल्यकः, यस्य चर्मणा तनुत्राणं क्रियते। श्वाविट्छल्यक इति युक्तः पाठः। एके तु छकारं पठन्ति, छकारात्पूर्वं वि[1]कारम्। खङ्गो मृगविशेषः, यस्य शृङ्गं तैलभाजनम्। शशः प्रसिद्धः। पूतिखषश्शशाकृतिः हिमवति प्रसिद्धः ॥

**अभक्ष्यश्चेटो मत्स्यानाम् ॥ ३८ ॥**

मत्स्यानां मध्ये चेटाख्यो मत्स्यो न भक्ष्यः। इतरे भक्ष्याः॥

**सर्पशीर्षी मृदुरः क्रव्यादो ये चान्ये विकृता यथा मनुष्यशिरसः ॥ ३९ ॥**

सर्पस्येव शिरो यस्य सोपि मत्स्यो न भक्ष्यः। मृदुरो मकरः। ये च क्रव्यमेवादन्ति शिशुमारादयस्तेप्यभक्ष्याः। ये चोक्तेभ्योन्ये विकृताकारा मत्स्याः। तत्रोदाहरणम्—यथा मनुष्यशिरसः, जलमनुष्याख्याः जलहस्त्यादयश्च। तेपि सर्वे न भक्ष्याः। अत्र मनुः—

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी।
संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः॥
मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम्।

---

[1] 'पूर्वमिकारम्' इति बहुषु कोशेषु पाठः.

एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥
न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥[1] इति ।
अप्रतिषिद्धेष्वपि भक्षणान्निवृत्तिरेव ज्यायसीत्यर्थः ॥

इति सप्तदशः खण्डः.

---

इति श्रीहरदत्तमिश्रविरचितायामापस्तम्बधर्मसूत्रव्याख्यायामुज्ज्वलाख्यायां पञ्चमः पटलः

---

एवं तावन्निमित्तदुष्टं कालदुष्टं जातिदुष्टं चाभोज्यमुक्तम् । तत्र निमित्तदुष्टं 'यस्य कुले म्रियेत'[2] इत्यादि । कालदुष्टं पर्युषितादि । जातिदुष्टं कळञ्जादि । इदानीं प्रतिग्रहाशुचीनि कानिचिदनुज्ञाय कानि चित्प्रतिषेधयति—

**मध्वामं मार्गं माꣳसं भूमिर्मूलफलानि रक्षा गव्यूतिर्निवेशनं युग्यघासश्चोग्रतः प्रतिगृह्याणि ॥ १ ॥**

मधु पक्कमपक्कं वा । आमं तण्डुलादि । मृगस्य विकारो मार्गं मांसम् । भूमिः शालेयादिक्षेत्रम्, विश्रमस्थानमित्यन्ये । मूलफलानि मूलकाम्रादीनि । रक्षा अभयदानम् । गव्यूतिर्गोमार्गः । निवेशनं गृहम् । युगं वहतीति युग्यो बलीवर्दः, तस्य घासो भक्ष्यं पलालादि । एतान्युग्रतोपि प्रतिग्राह्याण्यदुर्भिक्षेपि । उग्रः

---

[1] मनुस्मृ. ५–५१, ५५, ५६.     [2] आप. ध. १-१६-१८.

पापकर्मा द्विजातिः, वैश्याद्वा शूद्रायां जातः । उग्रग्रहणं तादृशानामुपलक्षणम् ॥

**एतान्यपि नानन्तेवास्याहृतानीति हारीतः॥२॥**

एतानि मध्वादीन्यप्यन्तेवास्याहृतान्येव प्रतिगृह्याणि, न स्वयमुग्रत इति हारीत आचार्यो मन्यते ॥

**आमं वा गृह्णीरन् ॥ ३ ॥**

पूर्वोक्तेष्वामं स्वयमेव वा गृह्णीरन् द्विजा इति हारीताचार्यस्य पक्षः ॥

**कृतान्नस्य वा विरसस्य ॥ ४ ॥**

आमस्यालाभे कृतान्नस्य वा विरसस्य लवणादिरसैरसंसृष्टस्य । षष्ठीनिर्देशात् स्तोकं स्वयमन्तेवास्याहृतं वा[1] गृह्णीरन् ॥

**न सुभिक्षास्स्युः ॥ ५ ॥**

अनन्तरोक्ते विधिद्वये यद्गृहीतं तेन सुभिक्षास्सुहिता न भवेयुः । यावता प्राणयात्रा भवति तावदेव गृह्णीरन्, न यावता सौहित्यं तावदिति ॥

**स्वयमप्यवृत्तौ सुवर्णं दत्वा पशुं वा भुञ्जीत॥६॥**

यदा तु दुर्भिक्षतयात्मनो वृत्तिर्न लभ्यते प्रागेव पोष्यवर्गस्य, तदा स्वयमप्यवृत्तौ यत्रैव लभ्यते तत्र कृतान्नमपि भुञ्जीत । तत्र गुणविधिः—सुवर्णं दत्वा सकृदेवोपक्लृप्तमुपरिष्टात्सुवर्णेन स्पृष्ट्वा । एतेन 'पशुं वा दत्वा' इति व्याख्यातः । पशुरग्निः, 'अग्निः पशुरासीत्'[2] इति मन्त्रलिङ्गात्, गोसूक्तेना[3]ग्नेरुपस्थानदर्शनाच्च ॥

---

[1] घ. ङ. ज. ञ—'वा' इति न. [2] तै. सं. ५-७-२६.

[3] ऋ. ६-२८-१.

**नात्यन्तमन्ववस्येत् ॥ ७ ॥**

न पुनरत्यन्तमेव सीदेत् ॥

**वृत्तिं प्राप्य विरमेत् ॥ ८ ॥**

यदा विहिता वृत्तिर्लभ्यते तदा निषिद्धाया विरमेत्, न पुनस्सकृत्प्र[1]वृत्तायाः किमवकुण्ठनेनेतिन्यायेन तत्रैव रमेत । अत्र छान्दोग्योपनिषत्—'मटचीहतेषु कुरुष्वाटक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास । स हेभ्यं कुल्माषान्खादन्तं बिभिक्षे[2]' इत्यादि । मन्त्रवर्णश्च भवति—' अवर्त्या शुन आन्त्राणि पेचे '[3] इति । अवर्त्या वृत्त्यभावेन । अपर आह—दुर्भिक्षे स्वयमप्यवृत्तौ वा आर्तन्निवृत्तेर्यत्र कुत्रचिन्नीचेपि दातारि भुञ्जानो वसेत्, यां च यावतीं च सुवर्णमात्रां यं कंचन पशुं वा तस्मै दत्वा, न पुनरत्यन्तमन्ववस्येत्, वृत्तिं प्राप्य विरमेदिति ॥

एवमापदि वृत्तिमुक्त्वा सुभिक्षेऽनापदि वृत्तिमाह—

**त्रयाणां वर्णानां क्षत्रियप्रभृतीनाᳫं समावृत्तेन न भोक्तव्यम् ॥ ९ ॥**

समावृत्तो द्विजातिः क्षत्रियादीनां त्रयाणां वर्णानां गृहे न भुञ्जीत ॥

**प्रकृत्या ब्राह्मणस्य भोक्तव्यं कारणादभोज्यम् ॥ १० ॥**

ब्राह्मणस्य त्वन्नं प्रकृत्या स्वभावेनैव भोक्तव्यम् । कारणादेव त्वभोज्यम् ॥

कारणमाह—

---

[1] घ. ङ—सर्वप्र. [2] छा. उ. १-१०, [3] ऋ. ४-१८-१३.

**यत्राप्रायश्चित्तं कर्मासेवते प्रायश्चित्तवति॥११॥**

यत्र यदाग्निहोत्रवैश्वदेवादि नित्यमाभ्युदयिकं वा अप्रायश्चित्तं कर्मासेवते नात्यर्येण करोति, प्रायश्चित्तवत्यात्मनि चोदितं प्रायश्चित्तं प्राणायामोपवासपथिकृदादि न करोति, तदा एतस्मात्कारणाद्ब्राह्मणस्यान्नमभोज्यमिति ॥

**चरितनिर्वेषस्य भोक्तव्यम् ॥ १२ ॥**

चरितो निर्वेषः प्रायश्चित्तं येन तस्यान्नं भोक्तव्यम्, तद्भोजने न दोषः । निष्ठया भूतकालस्याभिधानाच्चर्यमाणेपि निर्वेषे न भोज्यम् । किं तर्हि? चरिते ॥

**सर्ववर्णानाꣳ स्वधर्मे वर्तमानानां भोक्तव्यꣳ शूद्रवर्जमित्येके ॥ १३ ॥**

शूद्रवर्जितानां स्वधर्मे वर्तमानानां त्रयाणां वर्णानां भोज्यं, न ब्राह्मणस्यैवेत्येके मन्यन्ते ॥

**तस्यापि धर्मोपनतस्य ॥ १४ ॥**

तस्यापि शूद्रस्यान्नं भोज्यं यद्यसौ धर्मार्थमुपनत आश्रितो भवति । धर्मग्रहणादर्थार्थमुपनतस्याभोज्यम् । आपत्कल्पश्चायम्॥

अत्र गुणविधिः–

**सुवर्णं दत्वा पशुं वा भुञ्जीत नात्यन्तमन्ववस्येद्वृत्तिं प्राप्य विरमेत् ॥ १५ ॥**

गतम्[1] ॥

**सङ्घान्नमभोज्यम् ॥ १६ ॥**

सङ्घो गणः, तस्य यत्स्वमन्नं न त्वेकस्य, तदभोज्यम्, यद्यपि ते सर्वे दद्युः ॥

---

[1]आप. ध. १–१८–६, ७, ८.

**परिक्रुष्टं च ॥ १७ ॥**

भोक्तुकामा आगच्छतेत्येवं परिक्रुश्य, सर्वत आहूय यद्दीयते तत्परिक्रुष्टम्, तदभोज्यम् ॥

**सर्वेषां च शिल्पाजीवानाम् ॥ १८ ॥**

चित्रकर्म चित्रनिर्माणादिकं शिल्पं ये आजीवन्ति तेषां सर्वेषामपि ब्राह्मणानामन्नमभोज्यम् ॥

**ये च शस्त्रमाजीवन्ति ॥ १९ ॥**

ये च शस्त्रेण जीवन्ति तेषामप्यन्नमभोज्यं ; क्षत्रियवर्जम्, तस्य विहितत्वात् ॥

**ये चाधिम् ॥ २० ॥**

आजीवन्तीत्यपेक्षते । स्वगृहे परान्वासयित्वा तेभ्यो भृतिग्रहणमाधिः, यस्स्तोम इति प्रसिद्धः ।

परभूमौ कुटिं कृत्वा स्तोमं दत्वा वसेत्तु यः । इति ।

तं चाधिं ये आजीवन्ति तेषामप्यभोज्यम् । ये तु प्रसिद्धाधिमाजीवन्ति तेषां वार्धुषिकत्वादेवाभोज्यान्नत्वं सिद्धम् ।

**भिषक् ॥ २१ ॥**

अभोज्यान्न इति प्रकरणाद्गम्यते । भिषग्भैषज्यवृत्तिः धर्मार्थं तु ये सर्पदष्टादींश्चिकित्सन्ति ते भोज्यान्ना एव ॥

**वार्धुषिकः ॥ २२ ॥**

वृद्ध्याजीवोऽप्यभोज्यान्नः ॥

**दीक्षितोऽक्रीतराजकः ॥ २३ ॥**

दीक्षितो दीक्षणीयेष्ट्या संस्कृतः । सोऽपि यावत्क्रीतराजको न भवति सोमक्रयणं न करोति तावदभोज्यान्नः ॥

अग्नीषोमीयसंस्थायामेव ॥२४॥

भोक्तव्यमिति वक्ष्यमाणमपेक्षते । अग्नीषोमीयपशौ संस्थिते समाप्त एव भोक्तव्यम्, न प्रागिति पक्षान्तरम् ॥

हुतायां वा वपायां दीक्षितस्य भोक्तव्यम्॥२५॥

अग्नीषोमीयस्य वपायां हुतायां वा दीक्षितस्यान्नं भोक्तव्यम्। तथा च बह्वृचब्राह्मणम्—'अशितव्यं वपायां हुतायाम्' इति ॥

पक्षान्तरमाह—

यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन्निति हि ब्राह्मणम् ॥ २६ ॥

इदं यज्ञार्थमिति व्यादेशे कृते शेषाद्भुञ्जीरन्निति ब्राह्मणं भवति । ब्राह्मणग्रहणं प्रीत्युपलब्धितः प्रवृत्तेरपस्मृति[1]ता मा भूदिति प्रत्यक्षमेवात्र ब्राह्मणमिति ॥

क्लीबः ॥ २७ ॥

षण्डः । सोप्यभोज्यान्नः ॥

भवतिराज्ञां प्रैषकरः ॥ २८ ॥

अ[illegible]मिति बहुवचनात् ग्रामादेर्यः प्रैषकरः तस्यापि प्रतिषेधः[2]

अहविर्याजी ॥ २९ ॥

यश्चाहविषा नररुधिरादिना यजते आभिचारादौ, यथा 'यमभिचरेत्तस्य लोहितमवदानं कृत्वा' इति, सोप्यभोज्यान्नः ॥

चारी ॥ ३० ॥

चारो गूढचरस्स्पशः । सोप्यभोज्यान्नः ॥

[1]ख. ग. घ. ङ—अस्मृति. [2]ख. ग. ङ. ज—तस्याप्रतिषेधः.

अविधिना च प्रव्रजितः ॥३१॥

ये चाविधिना प्रव्रजिताः शाक्यादयस्तेप्यभोज्यान्नाः ॥

यश्चाग्नीनपास्यति ॥३२॥

अविधिनेत्येव । यश्चाविधिना उत्सर्गेष्टया विनाग्नीनपास्यति सोप्यभोज्यान्नः ॥

यश्च सर्वान्वर्जयते सर्वान्नी च श्रोत्रियो निराकृतिर्वृषलीपतिः ॥३३॥

यश्च सर्वान्वर्जयति भोजने न क्वचिदपि भुङ्क्ते, न कं चिद्भोजयति, यश्च सर्वान्नी सर्वेषामन्नं भुङ्क्ते, तावप्यभोज्यान्नौ । श्रोत्रिय इत्युभयोश्शेषः, श्रोत्रियोपि सन्नभोज्यान्न एवेति । निराकृतिर्निस्स्वाध्यायः । निर्व्रत[1] इत्यन्ये । सोप्यभोज्यान्नः । वृषलीपतिः, क्रमविवाहे यस्य वृषली पत्नी जीवति इतरा मृताः स वृषलीपतिः । श्रोत्रियोप्यभोज्यान्न इति ॥

इत्यष्टादशः खण्डः.

---

मत्त उन्मत्तो बद्धोणिकः प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालम् ॥ १ ॥

मत्तो मदद्रव्यसेवया विकृतिं गतः । उन्मत्तो भ्रान्तः । बद्धो निगळितः । अणिकः पुत्राच्छ्रुतग्राही, पुत्राचार्य इति शास्त्रेषु

---

[1]निर्वृत्त इति पा.

निन्दितः। प्रत्युपविष्टः ऋणादिना कारणेनाधमर्णादिकं निरुध्य तत्पार्श्वे उपविष्टः। प्रत्युपवेशयिता तु तस्य परिहारमकुर्वन् तेन सह कामं सुचिरमास्यतामित्यासीनः। एते मत्तादयस्तावन्तं कालमभोज्यान्नाः, यावन्मदाद्यनुवृत्तिः। अपर आह—अणिकः ऋणिकः ऋणस्य दाता। प्रत्युपवेष्टुरिदं विशेषणम्॥

क आश्यान्नः॥ २॥

यद्येते अभोज्यान्नाः कस्तर्ह्याश्यान्नः, कस्य तर्ह्यशनीयमन्नमिति? यद्यप्येतेऽभोज्यान्ना इत्युक्ते परिशिष्टा भोज्यान्ना इति गम्यते, तथाप्यनेकमतोपन्यासार्थोऽयं प्रश्नपूर्वक आरम्भः॥

य ईप्सेदिति कण्वः॥ ३॥

य एव प्रार्थयते स आश्यान्न इति कण्वऋषिर्मन्यते प्रतिषिद्धवर्जम्॥

पुण्य इति कौत्सः॥ ४॥

'सर्ववर्णानां स्वधर्मे वर्तमानानाम्'[1] इत्युक्तत्वाद्भोज्यान्नास्सर्वे पुण्या एव। इह पुनः पुण्यग्रहणमतिशयार्थम्। तपोहोमजप्यैस्स्वधर्मेण च युक्तः पुण्य इति कौत्सः। स स्वयमप्रार्थयमानोपि भोज्यान्न इति कौत्सस्य पक्षः॥

यः कश्चिद्दद्यादिति वार्ष्यायणिः॥ ५॥

यः कश्चन पुण्यो वाऽपुण्यो वा सततं दानशीलः, स भोज्यान्न इति वार्ष्यायणिराह। तथा च मनुः—

श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत्[2]। इति।

अत्रोपपत्तिः—

---

[1]आप. ध. १-१८-१३.

[2]मनुस्मृ. ४-२२५.

यदि ह रजस्स्थावरं पुरुषे भोक्तव्यमथ चेच्च-
लं दानेन निर्दोषो भवति ॥ ६ ॥

रजः पापम् । तद्यदि पुरुषे कर्तरि स्थावरं स्थिरं न भोगमन्तरेण क्षीयते, तदा ततः प्रतिग्रहेपि भोक्तरि सङ्क्रमाभावाद्भोक्तव्यम् । अथ चेच्चलमुपभोगमन्तरेणापि क्षीयते, तदा सततं दानशीले मुहूर्तमपि पापं नावतिष्ठत इति कुतो भोक्तुर्दोष इति ॥

शुद्धा भिक्षा भोक्तव्यैककुणिकौ काण्वकुत्सौ
तथा पुष्करसादिः ॥ ७ ॥

धार्मिकेणोद्यता आहृता भिक्षा शुद्धा । सा भोज्येत्येकादीनां पञ्चानां पक्षः । पुष्करसादिः पौष्करसादिः । आदिवृद्ध्यभावश्छान्दसः ॥

सर्वतोपेतं वार्ष्यायणीयम् ॥ ८ ॥

सर्वतः उपेतं सर्वतोपेतम् । छान्दसो गुणः । उपेतमयाचितोपपन्नम् । तत्सर्वतोपि भोज्यमिति वार्ष्यायणीयं मतम् ॥

इदानीं स्वमतमाह—

पुण्यस्येप्सतो भोक्तव्यम् ॥ ९ ॥

कण्वकौत्सयोः पक्षौ समुच्चितावाचार्यस्य पक्षः ॥

पुण्यस्याप्यनीप्सतो न भोक्तव्यम् ॥ १० ॥

यः प्रार्थितोपि नेत्यसकृदुक्त्वा कथं चिदापादितेप्सस्सोनीप्सन्नित्युच्यते । तस्य पुण्यस्याप्यभोज्यमिति । अपर आह—अनी-

प्सत इति कर्तरि षष्ठी । पुण्यस्याप्यन्नं न भोज्यमिति, यदि भिक्षमाणः पूर्ववैरादिना स्वयमीप्स[1]न्न भवतीति ॥

**यतः कुतश्चाभ्युद्यतं भोक्तव्यम् ॥ ११ ॥**

सर्वतोपेतमित्युक्तमेव पुनरुच्यते विशेषविवक्षया ॥

तमाह—

**नाननियोगपूर्वमिति हारीतः ॥ १२ ॥**

अद्य तुभ्यमिदमाहरिष्यामि तदत्र भवता ग्राह्यमिति निवेदनं नियोगः । तदभाव अनियोगः । पुनर्नञ्समासः । द्वौ नञौ प्रकृतमर्थं गमयतः, अननियोगो नियोगः । तत्पूर्वं चेदभ्युद्यतं न भोज्यमिति॥

**अथ पुराणे श्लोकावुदाहरन्ति—**

**उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् ।**
**भोज्यां मेने प्रजापतिरपि दुष्कृतकारिणः ॥**
**न तस्य पितरोश्नन्ति दश वर्षाणि पञ्च च ।**
**न च हव्यं वहत्यग्निर्यस्तामभ्यधिमन्यते ॥**
**इति ॥ १३ ॥**

अथ अपिच पुराणे

सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥

इत्येवंलक्षणे भविष्यदादौ । उद्यतां हस्ताभ्यामुद्यम्य धारितां, आहृतां स्वयमेवानीतां, पूर्वमनिवेदितां भिक्षां दुष्कृतकारिणोपि सकाशाद्भोज्यां मेने प्रजापतिर्मनुः । ' मनुः प्रजापतिर्य-

[1] घ. ङ. झ. ञ—अनीप्सत इति कर्मणि षष्ठी......भिक्ष [क्ष्य] माणं...मीप्सितम्.

स्मिन्' इति दक्षे दर्शनात्। यस्तु तामभ्यधिमन्यते प्रत्याचष्टे, तस्य पितरः कव्यं नाश्नन्ति। कियन्तं कालम्? दश वर्षाणि पञ्च च। अग्निश्च हव्यं न वहति तावन्तमेव कालम्। इति प्रत्याख्यातुर्निन्दार्थवादः॥

चिकित्सकस्य मृगयोश्शल्यकृन्तस्य पाशिनः।
कुलटायाष्षण्डकस्य च तेषामन्नमनाद्यम्॥

चिकित्सको भिषग्वृत्तिः। मृगयुर्मृगघाती लुब्धकः। शल्यकृन्तश्शस्त्रेण ग्रन्थ्यादीनां छेत्ताऽम्बष्ठः। पाशी पाशवान् पाशजालेन मृगादीनां ग्राहकः। कुलमटतीति कुलटा व्यभिचारिणी। षण्डकस्तृतीया प्रकृतिः। तेषां चिकित्सकादीनामन्नमनाद्यम्। चिकित्सकषण्डयोः पुनर्वचनमुद्यतस्यापि प्रतिषेधार्थम्। पूर्वत्र तर्हि ग्रहणं कर्तुमशक्यम्[1]। एवं तर्हि—सूत्रकारस्य स प्रतिषेधः, अयं तु पुराणश्लोक इत्यपौनरुक्त्यम्॥

अथाप्युदाहरन्ति—
अन्नादे भ्रूणहा मार्ष्टि अनेना अभिशंसति।
स्तेनः प्रमुक्तो राजनि याचन्ननृतसङ्करः॥
इति॥ १५॥

सषडङ्गस्य वेदस्याध्येता भ्रूणः, तं यो हतवान् स भ्रूणहा। सोन्नादे मार्ष्टि लिम्पति। किम्? प्रकरणादेन इति गम्यते। भ्रूणघ्नो योन्नमत्ति तस्मिंस्तदेनस्सङ्क्रामति। तस्मात्तस्योद्यतमप्यभोज्यमिति। प्रकरणसङ्गतः पादः। इतरत्पुराणश्लोके पठ्यमाने

---

[1] ग. घ. ङ. ञ.—णस्य वैयर्थ्यम्.

पठितम् । अनेनसं योभिशंसति मिथ्यैव ब्रूते इदं त्वया कृतमिति, स तस्मिन्नभिशंसति तदेनो मार्ष्टि । मनुस्तु—

पतितं पतितेत्युक्त्वा चोरं चोरेति वा पुनः ।
वचनात्तुल्यदोषस्स्यान्मिथ्या द्विर्दोषभाग्भवेत् ॥

इति द्वैगुण्यमाह । तदभ्यासे द्रष्टव्यम् । 'स्तेनः प्रकीर्णकेशः'[1] इति वक्ष्यति । स एव तृतीयपादस्यार्थः । कर्तृभेदादपौनरुक्त्यम् । सङ्गरः प्रतिज्ञा प्रतिश्रवः, सत्यसङ्गर इति यथा । यः प्रतिश्रुत्य न ददाति सोनृतसङ्गरः । ककारश्छान्दसः । तस्मिन्याचन् स्वयमेनो मार्ष्टि । तस्मात्प्रतिश्रुतं देयमिति ॥

इत्येकोनविंशः खण्डः.

---

इति श्रीहरदत्तमिश्रविरचितायामापस्तम्बधर्मसूत्रव्याख्यायामुज्ज्वलाख्यायां षष्ठः पटलः.



**नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत् ॥१॥**

इमं लौकिकं लोके विदितं ख्यातिलाभपूजात्मकमर्थं प्रयोजनं पुरस्कृत्याभिसन्धाय धर्मान्न चरेत् ॥

किं कारणम् ?

**निष्फला ह्यभ्युदये भवन्ति ॥ २ ॥**

हि यस्मादेवङ्क्रियमाणा धर्मा अभ्युदये फलकाले निष्फला भवन्ति । लोकार्थं ह्यसौ धर्मं चरति, न कर्तव्यमिति श्रद्धया,

---

[1] आप. ध.१–२५–४.

न च श्रद्धया विना धर्मः फलं साधयति, 'यो वै श्रद्धामनारभ्य'[1] इत्यादिश्रुतेः ॥

किमिदानीं दृष्टफलं त्याज्यमेव? नेत्याह—

**तद्यथाम्रे फलार्थे निमिते छाया गन्ध इत्यनूत्पद्येते । एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते ॥ ३ ॥**

तदिति वाक्योपन्यासे । फलार्थं ह्याम्रवृक्षो निमीयते आरोप्यते । तस्मिन् फलार्थे निमिते छाया गन्धश्चानूत्पद्येते । एवं धर्मं चर्यमाणमर्थाः ख्यात्यादयोनूत्पद्यन्ते अनुनिष्पद्यन्ते, तथैव स्वीकार्याः, न चोद्देश्यतया । तथा चाह—

यथेक्षुहेतोस्सलिलं प्रसेचितं तृणानि वल्लीरपि च प्रसिञ्चति ।
तथा नरो धर्मपथेन वर्तयन् यशश्च कामांश्च वसूनि चाश्नुते॥
इति ॥

**नो चेदनूत्पद्यन्ते न धर्महानिर्भवति ॥ ४ ॥**

यद्यपि दैवादर्था नानूत्पद्यन्ते, तथापि धर्मस्तावद्भवति । स च स्वतन्त्रः पुरुषार्थः, किमन्यैरर्थैरिति ॥

**अनसूयुर्दुष्प्रलम्भस्स्यात्कुहकशठनास्तिकबालवादेषु ॥ ५ ॥**

कुहकः प्रकाशे शुचिः एकान्ते यथेष्टचारी, शठो वक्रचित्तः, नास्तिकः प्रेत्यभावापवादी, बालश्श्रुतरहितः, एतेषां वादेष्वसूयुर्न स्यात् । असूयया द्वेषो लक्ष्यते, द्वेष्टा न स्यात् । तान् विषयी-

---

[1] तै. सं. १-६-८.

कृत्य द्वेषमपि न कुर्यात् । तथा दुष्प्रलम्भश्च स्यात् । प्रलम्भनं विसंवादनं मिथ्याफलाख्यानम् । 'गृधिवञ्च्योः प्रलम्भने' इति दर्शनात् । दुष्प्रलम्भो विसंवादयितुं मिथ्याफलाख्यानेन प्रवर्तयितुमशक्यः । कुहकादिवादेषु वञ्चितोपि न स्यात्, तद्वशो न स्यादित्यर्थः ॥

वञ्चनस्य सम्भवमाह—

**न धर्माधर्मौ चरत आवꣳस्व इति । न देवगन्धर्वा न पितर इत्याचक्षतेऽयं धर्मोऽयमधर्म इति ॥ ६ ॥**

आवमिति छान्दसं रूपम् । भाषायां तु 'प्रथमायाश्च द्विवचने भाषायाम्' इत्यात्वं प्राप्नोति । यदि हि धर्माधर्मौ विग्रहवन्तौ गोव्याघ्रवच्चरेतां आवां स्व इति ब्रुवाणौ, यदि वा देवादयः प्रकृष्टज्ञाना ब्रूयुरिमौ धर्माधर्माविति, ततः कुहकादिवादेषु न स्याद्वञ्चना; तदभावात्तु वञ्चनासम्भव इति । इदं चात्र द्रष्टव्यम्—प्रत्यक्षादेरगोचरौ धर्माधर्मौ, किन्तु नित्यनिर्दोषवेदावगम्यौ, तदभावे तन्मूलधर्मशास्त्रावगम्याविति ॥

यत्र तु प्रायश्चित्तादौ विषयव्यवस्था दुष्करा तत्र निर्णयमाह-

**यत्त्वार्याः क्रियमाणं प्रशꣳसन्ति स धर्मो यद्गर्हन्ते सोधर्मः ॥ ७ ॥**

आर्याश्शिष्टास्त्रैवर्णिकाः । बहुवचनाच्चत्वारस्त्रयो वा । यथाह मनुः—

चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मस्स्यादेको वाध्यात्मवित्तमः ॥ इति ॥

इदानीं श्रुतिस्मृत्योः प्रत्यक्षयोरदर्शने शिष्टाचारादप्यवगम्य धर्मः कार्य इत्याह—

**सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत ॥८॥**

सम्यग्विनीताः 'आचार्याधीनस्स्यात्'[1] इत्यादिना विनयेन सम्पन्नाः। वृद्धाः परिणतवयसः; यौवने विषयवशतापि स्यादितीदमुक्तम्। आत्मवन्तो जितेन्द्रियाः। अलोलुपाः अकृपणाः। अदाम्भिका अधर्मध्वजा एकान्तप्रकाशयोरेकवृत्ताः। एवम्भूतानामार्याणां सर्वजनपदेषु यदेकान्तेनाव्यभिचारेण समाहितमनुमतं वृत्तमनुष्ठानम्, न मातुलसुतापरिणयादिवत्कतिपयविषयम्, तद्वृत्तसादृश्यं भजेत तदनुरूपं चेष्टेत। न तेषामनुष्ठानं निर्मूलम्, भवति च वैदिकानामुत्सन्नपाठब्राह्मणानुभव इति॥

**एवमुभौ लोकावभिजयति ॥ ९ ॥**

एवं श्रुतिस्मृतिसदाचारमूलमनुष्ठानं कुर्वन् उभौ लोकावभिजयति इमं चामुं च॥

**अविहिता ब्राह्मणस्य वणिज्या ॥ १० ॥**

क्रयविक्रयव्यवहारो वणिज्या। सा स्वयं कृता ब्राह्मणस्य वृत्तिर्न विहिता। प्राप्तानुवादोयमपवादविधानार्थः॥

**आपदि व्यवहरेत पण्यानामपण्यानि व्युदस्यन् ॥ ११ ॥**

ब्राह्मणवृत्तेरलाभ आपत्, तस्यां सत्यां पण्यानाम्। 'व्यव-

---

[1] आप. ध. १-२-१९.

ह्वपणोस्समर्थयोः' इति कर्मणि षष्ठी। व्यवहरेत, क्रयश्च विक्रयश्च व्यवहारः, पण्यानि क्रीणीयाद्विक्रीणीत चेत्यर्थः। अपण्यानि वक्ष्यमाणानि व्युदस्यन् वर्जयन्। कृत्स्नाया वैश्यवृत्तेरुपलक्षणमिदम्। क्षत्रियवृत्तिश्च दण्डापूपिकया सिद्धा। तथा च गौतमः– 'तदलाभे क्षत्रियवृत्तिः। तदलाभे वैश्यवृत्तिः'[1]। इति॥

अपण्यान्याह–

**मनुष्यान्रसान्रागान्गन्धानन्नं चर्म गवां वशाꣳ श्लेष्मोदके तोक्मकिण्वे पिप्पलिमरीचे धान्यं माꣳसमायुधꣳ सुकृताशां च॥१२॥**

मनुष्या दासादयः। रसा गुडलवणादयः, क्षीरादयो वा। रागाः कुसुम्भादयः रज्यतेनेनेति। रज्यन्त इति वा रागा वस्त्रादयः। गन्धाश्चन्दनादयः। गवां मध्ये वशा वन्ध्या गौः। श्लेष्म जत्वादि, येन विश्लिष्टं चर्मादि सन्धीयते; यथा–'श्लेष्मणा चर्मण्यं वान्यद्वा विश्लिष्टं संश्लेषयेत्' इति बह्वृचब्राह्मणे दर्शनात्। तोक्मानीषदङ्कुरितानि व्रीह्यादीनि। किण्वं सुराप्रकृतिद्रव्यम्। सुकृतं पुण्यम्, तस्य फलं सुकृताशा। शिष्टानि प्रसिद्धानि। एतान्यपण्यानि वर्जयित्वा अन्येषां पण्यानां व्यवहरेत। मनुष्यादीन् वर्जयित्वेत्येव सिद्धे, अपण्यानीति वचनमन्येषामपण्यानां स्मृत्यन्तरोक्तानामपि व्युदासार्थम्, तत्र मनुः–

सर्वान्रसानपोहेत कृतान्नं च तिलैस्सह।
अश्मनो लवणं चैव पशवो ये च मानुषाः॥
सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च।

---

[1] गौ. ध. ७–६,७.

अपि चेत्स्युररक्तानि फलमूले तथौषधीः ॥
अपश्शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः ।
क्षीरं क्षारं दधि घृतं तैलं मधु गुडं कुशान् ॥
आरण्यांश्च पशून्सर्वान् दंष्ट्रिणश्च वयांसि च ।
मद्यं नीलं च लाक्षां च सर्वांश्चैकशफान् पशून् ॥[1] इति ॥

**तिलतण्डुलांस्त्वेव धान्यस्य विशेषेण न विक्रीणीयात् ॥ १३ ॥**

धान्यानां मध्ये तिलतण्डुलानेव विशेषेणातिशयेन न विक्रीणीयात् न विक्रीणीत । अन्येषां विकल्पः । स्वयमुत्पादितेषु नायं प्रतिषेधः । मानवे हि श्रुतम्—

कामगुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः ।
विक्रीणीत तिलान् शुद्धान् धर्मार्थमचिरास्थितान् ॥[1] इति ॥

**अविहितश्चैतेषां मिथो विनिमयः ॥ १४ ॥**

विनिमयः परिवर्तनम्, येषां विक्रयः प्रतिषिद्धः तेषामेतेषां मिथः परस्परेण विनिमयोप्यविहितः प्रतिषिद्धः, न कर्तव्य इत्यर्थः ॥

तेष्वेव केषुचिन्नियमोप्यनुज्ञायते—

**अन्नेन चान्नस्य मनुष्याणां च मनुष्यै रसानां च रसैर्गन्धानां च गन्धैर्विद्यया च विद्यानाम् ॥ १५ ॥**

अन्नादीनां विद्यान्तानां विनिमयो भवत्येवेत्यर्थः । तथा च

[1] मनुस्मृ. १०, ८६–९०.

वसिष्ठः–'रसा रसैस्समतो हीनतो वा····तिलतण्डुलपक्वान्नं विद्यामनुष्याश्च विहिताः परिवर्तने '[1] इति। मानवे तु विशेषः–

रसा रसैर्निमातव्या न त्वेव लवणं रसैः।

कृतान्नं चाकृतान्नेन तिलधान्येन तत्समाः ॥[2] इति ॥

गौतमीये तु–'नियमस्तु। रसानां रसैः। पशूनां च। न लवणकृतान्नयोः। समेनासमेन तु पक्वस्य सम्प्रत्यर्थे '[3] इति। तस्मान्नात्र प्रतिषेधानुवृत्तिश्शङ्कनीया। पूर्वत्र चोक्तं 'ब्रह्मणि मिथो विनियोगे न गतिर्विद्यते '[4] इति नियमा*भ्यनुज्ञानादेव विद्यानां विक्रयः प्रतिषिद्धो वेदितव्यः ॥

अक्रीतपण्यैर्व्यवहरेत ॥ १६ ॥

इति विंशः खण्डः.

---

मुञ्जबल्वजैर्मूलफलैः ॥ १ ॥

अक्रीतानि स्वयमुत्पादितानि अरण्यादाहृतानि वा यानि पण्यानि तैर्व्यवहरेत मुञ्जादिभिः। मुञ्जबल्बजास्तृणविशेषाः ॥

तृणकाष्ठैरविकृतैः ॥ २ ॥

तृणानां विकारो रज्ज्वादिभावः, काष्ठानां विकारस्स्थूणादिभावः। तृणत्वादेव सिद्धे मुञ्जबल्बजग्रहणं विकारार्थम् ॥

नात्यन्तमन्ववस्येत् ॥ ३ ॥

प्रतिषिद्धानामपि विक्रयविनिमयाभ्यां जीवेत्; न पुनरत्य-

---

[1] वा. ध. २–३२,३९. [2] मनुस्मृ. १०–९४. [3] गौ. ध. ७. १६...२१.
[4] आप. ध. १–१३–१७. *विनिमया. इति मुम्बैमुद्रितपुस्तके.

न्नमन्ववस्येत् अवसीदेत् । तथा च गौतमः—' सर्वथा तु वृत्तिरशक्तावशौद्रेण । तदप्येके प्राणसंशये '[1] इति । मनुरपि—

जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
आकाशमिव पङ्केन न स दोषेण लिप्यते ॥[2] इति ॥

**वृत्तिं प्राप्य विरमेत् ॥ ४ ॥**

गतम् ॥

**न पतितैस्संव्यवहारो विद्यते ॥ ५ ॥**

पतितास्स्तेनादयो वक्ष्यमाणाः । तैस्सह न कश्चिदपि व्यवहारः कर्तव्यः । तत्र मनुः—

संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्यौनान्न तु यानासनाशनात् ॥ [3] इति ॥
यानादिभिस्संवत्सरेण पतति, याजनादिभिस्तु सद्य एव ॥

**तथापपात्रैः ॥ ६ ॥**

अपपात्राश्चण्डालादयः । तैश्च संव्यवहारो न कर्तव्यः ॥

**अथ पतनीयानि ॥ ७ ॥**

द्विजातिकर्मभ्यो हानिः पतनम्, तस्य निमित्तानि कर्माणि वक्ष्यन्ते ॥

**स्तेयमाभिशस्त्यं पुरुषवधो ब्रह्मोज्झं गर्भशातनं मातुः पितुरिति योनिसम्बन्धे सहापत्ये स्त्रीगमनं सुरापानमसंयोगसंयोगः ॥ ८ ॥**

---

[1] गौ. ध. ७–२२,२३. [2] मनुस्मृ. १०–१०४. [3] मनुस्मृति. ११–१८१.

स्तेयं सुवर्णचौर्यम् । आभिशस्त्यं ब्रह्महत्या, 'ब्राह्मणमात्रं च'[1] हत्वाभिशस्त इति वक्ष्यमाणत्वात् । पुरुषवधः मनुष्यजातिवधः । तेन स्त्रीवधोपि गृह्यते । ब्रह्मोज्झं, उज्झ उत्सर्गः, भावे घञ्, छान्दसो लिङ्गव्यत्ययः । ब्रह्म वेदः, तस्याधीतस्य नाशनं ब्रह्मोज्झम् । औषधादिप्रयोगेण गर्भस्य वधो गर्भशातनम् । मातुर्योनिसम्बन्धे मातृष्वस्रादौ, पितुर्योनिसम्बन्धे पितृष्वस्रादौ. सहापत्ये अपत्येन सहिते, स्त्रीगमनं मातृष्वसृगमनं पितृष्वसृगमनं तत्सुतागमनं मातुलसुतागमनं चेत्यर्थः ॥

गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
यथैवैका न पातव्या तथा सर्वा द्विजोत्तमैः[2] ॥

इति मानवे निषिद्धायास्सुरायाः पानं सुरापानम् । असंयोगास्संयोगानर्हाः प्रतिलोमादयः, तैस्संयोग एकग्रहवासादिः असंयोगसंयोगः । एतानि पतनीयानि ॥

**गुर्वीसखिं गुरुसखिं च गत्वान्यांश्च परतल्पान् ॥ ९ ॥**

सखीशब्दस्य छान्दसो ह्रस्वः । गुर्वीसखी मात्रादीनां सखी, गुरुसखी पित्रादीनां सखी, तां गत्वा । किम्? पततीत्युत्तरत्र श्रुतमपेक्षते । अन्यांश्च परतल्पान् गत्वा पतति । तल्पशब्देन शयनवाचिना दारा लक्ष्यन्ते ॥

**नागुरुतल्पे पततीत्येके ॥ १० ॥**

गुरुदारव्यतिरेकेण परतल्पगमने पातित्यं नास्तीत्येके मन्यन्ते। यद्यपि सामान्येन पतनीयानीत्युक्तम्, प्रायश्चित्ते तु गुरुलघुभावो द्रष्टव्यः ॥

---

[1] आप. १-२४-७. [2] मनुस्मृ. ११-९५.

एतान्यपि पतनीयानीत्येके ॥ १९ ॥

यान्येतान्यशुचिकरत्वेनानुक्रान्तानि एतान्यपि पतनीयानीत्येके मन्यन्ते ॥

अतोन्यानि दोषवन्त्यशुचिकराणि भवन्ति ॥

उक्तव्यतिरिक्तानि दोषवन्ति कर्माणि दुष्प्रतिग्रहहिंसादीन्यशुचिकराणि भवन्ति ॥

दोषं बुद्ध्वा न पूर्वः परेभ्यः पतितस्य समाख्याने स्याद्वर्जयेत्त्वेनं धर्मेषु ॥ २० ॥

पतितस्य दोषं परैरविदितं बुद्ध्वा परेभ्यस्समाख्याने पूर्वो न स्यात् । परैरविदितं स्वयं विद्वानपि न परेभ्यः पूर्वमाचक्षीत । किं तु स्वयं धर्मकृत्येष्वेनं वर्जयेत्, यथा परे न जानन्ति*। अन्यथा दोषवान् ॥

इत्येकविंशः खण्डः.

---

इति श्रीहरदत्तमिश्रविरचितायामापस्तम्बधर्मसूत्रव्याख्यायामुज्ज्वलाख्यायां सप्तमः पटलः.

---

अध्यात्मिकान्योगाननुतिष्ठेन्न्यायसंहितानानैश्चारिकान् ॥ १ ॥

उक्तानि पतनीयान्यशुचिकराणि च कर्माणि, तेषां प्रायश्चित्तानि वक्ष्यन्नादित आत्मज्ञानं तदुपयोगिनश्च योगानधिकुरुते, तस्यापि सर्वपापहरत्वेन मुख्यप्रायश्चित्तत्वात्; श्रूयते हि-

---

*ग. घ. परे जानन्ति.

एतान्यपि पतनीयानीत्येके ॥ १९ ॥

यान्येतान्यशुचिकरत्वेनानुक्रान्तानि एतान्यपि पतनीयानीत्येके मन्यन्ते ॥

अतोन्यानि दोषवन्त्यशुचिकराणि भवन्ति ॥

उक्तव्यतिरिक्तानि दोषवन्ति कर्माणि दुष्प्रतिग्रहहिंसादीन्यशुचिकराणि भवन्ति ॥

दोषं बुद्ध्वा न पूर्वः परेभ्यः पतितस्य समाख्याने स्याद्वर्जयेत्त्वेनं धर्मेषु ॥ २० ॥

पतितस्य दोषं परैरविदितं बुद्ध्वा परेभ्यस्समाख्याने पूर्वो न स्यात् । परैरविदितं स्वयं विद्वानपि न परेभ्यः पूर्वमाचक्षीत । किं तु स्वयं धर्मकृत्येष्वेनं वर्जयेत्, यथा परे न जानन्ति*। अन्यथा दोषवान् ॥

इत्येकविंशः खण्डः.

---

इति श्रीहरदत्तमिश्रविरचितायामापस्तम्बधर्मसूत्रव्याख्यायामुज्ज्वलाख्यायां सप्तमः पटलः.

---

अध्यात्मिकान्योगाननुतिष्ठेन्न्यायसꣳहितानैश्चारिकान् ॥ १ ॥

उक्तानि पतनीयान्यशुचिकराणि च कर्माणि, तेषां प्रायश्चित्तानि वक्ष्यन्नादित आत्मज्ञानं तदुपयोगिनश्च योगानधिकुरुते, तस्यापि सर्वपापहरत्वेन मुख्यप्रायश्चित्तत्वात्; श्रूयते हि-

---

*ग. घ. परे जानन्ति.

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे[1] ॥ इति ॥

'तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते'[2] इति च । याज्ञवल्क्योऽप्याह—

इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्[3] ॥ इति ॥

अध्यात्मभवानध्यात्मिकान् । छान्दसो वृद्ध्यभावः । आत्मनो लम्भयितॄन् योगांश्चित्तसमाधानहेतून् वक्ष्यमाणानक्रोधादीनुपायाननुतिष्ठेत् सेवेत न्यायसंहितान् उपपत्तिसमन्वितान् । उपपद्यन्ते हि ते न्यायतः क्रोधादीनां दोषाणां निर्घाते । अनैश्चारिकान् निश्चारः चित्तस्य बहिर्विक्षेपः, तस्मै ये प्रभवन्ति क्रोधादयो वक्ष्यमाणाः ते नैश्चारिकाः, तत्प्रतिपक्षभूतान् । अक्रोधादिषु सत्सु चित्तमनिश्चरणशीलं अध्यात्मालम्बनं निश्चलं तिष्ठति, तस्मात्ताननुतिष्ठेत् आत्मानं लब्धुमक्रोधादिलक्षणं चित्तसमाधानं कुर्यादिति ॥

किम्पुनरात्मा प्रयत्नेन लब्धव्यः? ओमित्याह—

## आत्मलाभान्न परं विद्यते ॥ २ ॥

आत्मलाभात्परमुत्कृष्टं लाभान्तरं नास्ति, तस्मात्तस्य लाभाय यत्न आस्थेय इति । कः पुनरसावात्मा? प्रत्यगात्मा । नन्वसौ नित्यलब्धः, न हि स्वयमेव स्वस्यालब्धो भवति । सत्यम्; प्रकृतिमेळनात्तद्धर्मतामुपगतो विनष्टस्वरूप इव भवति । प्रकृत्या हि नित्यसम्बद्धः पुरुषः । स च

[1] मु. उ. २-२-८.    [2] छा. उ. ५-२४-३.    [3] या. १-८.

सम्बन्धस्तथाविधः यथा परस्परं विवेको न ज्ञायते। अन्योन्यधर्माश्चान्योन्यत्राध्यस्यन्ते यथा क्षीरोदके सम्पृक्ते न ज्ञायते इयत् क्षीरमियदुदकं, अमुष्मिन्नवकाशे क्षीरममुष्मिन्नवकाशे उदकमिति। यथा वा अग्नयोगोळकयोरभिसम्बद्धयोः येऽग्निधर्मा उष्णत्वभास्वरत्वादयः, तेऽयोगोळकेऽध्यस्यन्ते, ये चायोगोळकस्य धर्माः काठिन्यदैर्घ्यादयः तेऽग्नावध्यस्यन्ते। एवं हि तत्र प्रतिपत्तिः—एकं वस्तु उष्णं भास्वरं दीर्घं कठिनमिति। तद्वदिहापि पुरुषधर्माश्चैतन्यादयः प्रकृतावध्यस्यन्ते, प्रकृतिधर्माश्च सुखदुःखमोहपरिणामादयः पुरुषे। ततश्चैकं वस्तु चेतनं सुखादिकलिलं परिणामीति व्यवहारः। वस्तुतस्तु तस्मिन् सङ्घाते अचेतनांशः परिणामी, चेतनांशस्तु तमनुधावति। येनयेन रूपेण परिणमति तेनतेनाभेदाध्यासमापद्यते। यथा क्षीरावस्थागतं घृतं क्षीरे दध्यात्मना परिणते तामप्यवस्थामनुप्रविशति, तद्वदिहापि। तदिदमुच्यते 'तत्सृष्ट्वा। तदेवानुप्राविशत्'[1] इति। सर्गेऽप्यात्मनः कर्तृत्वमिदमेव, यदुपभोक्तृतया निमित्तत्वम्। तदेवं स्वभावतस्स्वच्छोऽप्यात्मा प्रकृत्या सहाभेदमापन्नः तद्धर्मा भवति। एवं तद्विकारेण महता तद्विकारेणाहङ्कारेणास्या शरीराद्यहं त्वयं, स्थूलोऽहं कृशोऽहं देवोऽहं मनुष्योऽहं तिर्यगहमिति। तस्यैवंगतस्यापेक्षितः स्वरूपलाभः नीचैरिव वर्धितस्य राजपुत्रस्य। तद्यथा—शबरादिभिर्बाल्यात्प्रभृति स्वसुतैस्सहसंवर्धितस्तज्जातीयमात्मानमवगमयन् मात्रा स्वरूपे कथिते लब्धस्वरूप इव भवति। तथा प्रकृत्यावश्यया स्वभावान्तरं नीतः आत्मा

---

[1] तै. उ. २-६.

मातृस्थानीयया 'तत्त्वमसि'[1] इति श्रुत्या स्वभावं नीयते ; यदेवंविधं परिशुद्धं वस्तु तदेव त्वमसि, न तु यथा मन्यसे मनुष्योहं दुःख्यहमित्यादि तथेति । यथा एवम्भूतो राजा स त्वमसीति राजपुत्रः । ननु तत्त्वमसीति ब्रह्मणा तादात्म्यमुच्यते ? । को वा ब्रूते नेति ; ब्रह्मापि नान्यदात्मनः । किम्पुनरयमात्मा एकः ? आहोस्विन्नाना ? । किमनेन ज्ञातेन ? त्वं तावदेवंविधश्चिदेकरसः नित्यनिर्मलः कलुषसंसर्गात्कलुषतामिव गतः ; तद्वियोगस्ते मोक्षः ; त्वयि मुक्ते यद्यन्ये सन्ति, ते संसरिष्यन्ति, का ते क्षतिः ? अथ न सन्ति, तथापि कस्ते लाभः ? इत्यलमियता ; महत्येषा कथा । तदप्येते श्लोका भवन्ति—

नीचानां वसतौ तदीयतनयैस्सार्धं चिरं वर्धितः
तज्जातीयमवैति राजतनयस्स्वात्मानमप्यञ्जसा ।
सङ्घाते महदादिभिस्सह वसन् तद्वत्पुरः पूरुषः
स्वात्मानं सुखदुःखमोहकलिलं मिथ्यैव धिङ्मन्यते ॥
दाता भोगपरस्समग्रविभवो यश्शासिता दुष्कृताम्
राजा स त्वमसीति मातृमुखतः श्रुत्वा यथावत्स तु ।
राजीभूय यथार्थमेव[2] यतते तद्वत्पुमान्बोधितः
श्रुत्वा तत्त्वमसीत्यपास्य दुरितं ब्रह्मैव सम्पद्यते ॥
इत्येवं बहवोपि राजतनयाः प्राप्ता दशामीदृशीम्
नैवान्योन्यभिदामपास्य सहसा सर्वे भजन्त्येकताम् ।
किन्तु स्वे परमे पदे पृथगमी तिष्ठन्ति भिन्नास्तथा
क्षेत्रज्ञा इति तत्त्वमादिवचसः का भेदवादे क्षतिः ॥

---

[1] छा. उ. ६-९-४.    [2] क. झ—जयार्थमेव.

तेष्वेको यदि जातु मातृवचनात्प्राप्तो निजं वैभवम्
नान्ये का क्षतिरस्य यत्किल परे सन्त्यन्यथा ये स्थिताः ।
यद्वान्ये न भवेयुरेवमपि को लाभोस्य तद्वद्गतिः
पुंसामित्यभिदां भिदां च न वयं निर्बन्ध्य निश्चिन्महे ॥

तदिहापेक्षितमात्मज्ञानमुपदिश्यते । तच्च त्रिविधं श्रुतं मननं ध्यानमिति, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'[1] इति श्रवणात् । तत्र श्रुतमुपनिषदादिशब्दजन्यं ज्ञानम् । मननमुपपत्तिभिर्निरूपणम् । एवं श्रुते मते चात्मनि साक्षात्कारहेतुरविक्षिप्तेन चेतसा निरन्तरा भावना ध्यानम् । तत्सिद्ध्ये श्रौतं ज्ञानं तावदाह—

**तत्रात्मलाभीयाञ्छ्लोकानुदाहरिष्यामः ॥ ३ ॥**

तत्रेति वाक्योपन्यासे । आत्मलाभीयानात्मलाभप्रयोजनान् । अनुप्रवचनादिषु दर्शनाच्छप्रत्ययः । श्लोकान् पादबद्धानौपनिषन्मन्त्रान् उदाहरिष्यामः उद्धृत्याहरिष्यामः ग्रन्थे निवेशयिष्यामः ॥

**पूः प्राणिनस्सर्व एव गुहाशयस्य**
**अहन्यमानस्य विकल्मषस्य ।**
**अचलं चलनिकेतं येनुतिष्ठन्ति तेऽमृताः ॥४॥**

गुहेति प्रकृतिनाम ।
यत्तत्स्मृतं कारणमप्रमेयं ब्रह्म प्रधानं प्रकृतिः प्रसूतिः ।
आत्मा गुहा योनिरनाद्यनन्तं क्षेत्रं तथैवामृतमक्षरं च ॥

---

[1] बृ. उ. २–४–५.

इति पुराणे दर्शनात्। तस्यां शेते तया सहाविभागापन्न-स्तिष्ठतीति गुहाशय आत्मा।

अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्।
अजो ह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोन्यः।[1]

इति च मन्त्रान्तरम्। अहन्यमानस्य, न ह्यसौ शरीरे हन्यमानेपि हन्यते। तथा चोक्तं भगवता—'न हन्यते हन्यमाने शरीरे'[2]। विकल्मषस्य निर्लेपस्य, सर्व एव हि धर्माधर्मादिरन्तःकरणस्य धर्मः, आत्मनि त्वध्यस्तः, एवम्भूतस्यात्मनः सर्व एव प्राणिनः ब्रह्माद्यास्तिर्यगन्ताः प्राणादिमन्तस्सङ्घाताः पूः पुरमुपभोगस्थानम्। यथा राजा पुरमधिवसन् सचिवैरानीतान् भोगानुपभुङ्क्ते, तथायं देवादिशरीरमधिवसन् करणैरुपस्थापितान् भोगानुपभुङ्क्ते। तमेवम्भूतमचलं सर्वगतत्वेन निश्चलं चलनिकेतं, निकेतं स्थानं शरीरं, तद्यस्य चलं तं येनुतिष्ठन्त्युपासते एवम्भूतोहमिति प्रतिपद्यन्ते तेऽमृता मुक्ता भवन्तीति॥

तेन विषयसङ्गपरित्यागेनायमुपास्य इत्याह—

**यदिदमिदि हेदि ह लोके विषयमुच्यते।**
**विधूय कविरेतदनुतिष्ठेद्गुहाशयम्॥ ५॥**

यदिदं विषयमेतदिति सर्वत्र लिङ्गव्यत्ययश्छान्दसः, एवमितिशब्दस्य तकारस्य दकारः। इतिशब्दः प्रसिद्धौ, हशब्द आश्चर्ये। इतिशब्देनावृत्तेन शब्दादिषु विषयेषु अवान्तरप्रकारभेदः

---

[1] श्वे. उ. ४-५.   [2] भ-गीता. २-२०.

प्रतिपाद्यते। विषयापहृतचेतसो हि वदन्ति, इति ह तस्या गीतम्, इति ह तस्यास्सुखस्पर्शः, इति ह तस्या रूपं निष्टप्तमिव कनकम्, इति ह तस्यास्स्वादिष्ठोधरमणिः, इति ह तस्या गन्धो घ्राणतर्पण इति। एवं दिव्यमानुषभेदोपि द्रष्टव्यः। अत्रानन्तरमपर इति शब्दोध्याहार्यः, इति हेति हेति लोके योयं विषय उच्यते। सामान्यापेक्षमेकवचनम्। एतं विधूय गुहाशयमनुतिष्ठेत् कविर्मेधावीति ॥

विषयत्यागे हेतुमाह—

**आत्मन्नेवाहमलब्ध्वैतद्धितꣳ सेवस्व नाहितम्।**
**अथान्येषु प्रतीच्छामि साधुष्ठानमनपेक्षया।**
**महान्तं तेजसस्कायꣳ सर्वत्र निहितं प्रभुम् ॥६॥**

शिष्यं प्रत्याचार्यस्य वचनमेतत्। द्वौ चात्र हेतू विषयाणां त्यागे, पराधीनत्वमहितत्वं च। महान्तं गुणतः। तेजसस्कायं तेजसश्शरीरं तेजोराशिं स्वयम्प्रकाशं 'आत्मा [आदित्य] ज्योतिस्सम्राडिति होवाच'[1] इति बृहदारण्यकम्। सर्वत्र निहितं सर्वगतं प्रभुं स्वतन्त्रं, एवम्भूतं गुहाशयं एतावन्तं कालमहमात्मन्, सप्तम्येकवचनस्य लुक्, आत्मन्यस्मिन् मदीये सङ्घाते अन्यानपेक्षयैव लब्धुं योग्यमलब्ध्वा अथान्येष्विन्द्रियादिषु तंतं विषयं प्रतीच्छामि, लङर्थे लट्, प्रत्यैच्छम्। इदानीं तु तं लब्ध्वा न तथाविधोस्मि। त्वमप्येतदेव हितं साधुष्ठानं साधुमार्गं सेवस्व, नाहितं विषयानुधावनमिति ॥

पुनरप्यसौ कीदृश इत्याह—

---

[1] बृह. ६-३-२.

सर्वभूतेषु यो नित्यो विपश्चिदमृतो ध्रुवः ।
अनङ्गोशब्दोशरीरोस्पर्शश्च महाञ्छुचिः ।
स सर्वं परमा काष्ठा स वैषुवतः स वै वैभा-
जनं पुरम् ॥७॥

सर्वभूतेषु मनुष्यादिसङ्घातेषु यो नित्यः विनश्यत्सु न विनश्यति, विपश्चित् मेधावी चित्स्वरूपः, अमृतः नित्यत्वादेवामरणधर्मा, ध्रुवः एकरूपः विकाररहितः, न प्रधानवद्विकारिणस्सतो धर्मिरूपेणास्य नित्यत्वमित्यर्थः । अनङ्गः करचरणाद्यङ्गरहितः । अशब्दोस्पर्श इति भूतगुणानामुपलक्षणम्, शब्दादिगुणरहितः । अशरीरस्सूक्ष्मशरीरेणापि वर्जितः । महाञ्छुचिः, महत्त्वं शौचस्य विशेषणम्, परमार्थतोत्यन्तशुद्धः । स सर्वं प्रकृत्यभेदद्वारेण । स एव च परमा काष्ठा, अतःपरं गन्तव्याभावात् । स वैषुवतं, विषुवान्नाम गवामयनस्य मध्येभवमहः । 'एकविंशदेतदहरुपयन्ति । विषुवन्तं मध्ये संवत्सरस्य' इति दर्शनात् । विषुवानेव वैषुवतं, तद्यथा संवत्सरस्य मध्ये भवति, एवमङ्गानामेष मध्ये भवति । 'मध्यं ह्येषोङ्गानामात्मा' इति बह्वृचब्राह्मणम् । स एव वैभाजनं पुरं, विविधैर्मार्गैर्भजनीयं विभाजनं, तदेव वैभाजनम् । प्रज्ञादिरनुशतिकादिश्च । यथा समृद्धं पुरं सर्वैरर्थिभिः प्राप्यं, एवमयमपीति ॥

तं योनुतिष्ठेत्सर्वत्र प्राध्वं चास्य सदाचरेत् ।
दुर्दर्शं निपुणं युक्तो यः पश्येत्स मोदेत विष्टपे॥

इति द्वात्रिंशः खण्डः

तमेवम्भूतमात्मानं योनुतिष्ठेत् उपासीत, यश्चास्य सर्वत्र सर्वास्ववस्थासु सदा प्राध्वमानुकूल्यमाचरेत्, आनुकूल्यं प्रतिषिद्धवर्जनं नित्यनैमित्तिककर्मानुष्ठानं च, यश्च दुर्दर्शं निपुणं सूक्ष्ममेतं युक्तः समाहितो भूत्वा पश्येत्साक्षात्कुर्यात्, स विंष्टपे विगततापे स्वे महिम्नि स्थितो मोदते सर्वदुःखवर्जितो भवति, संसारदशायां वा तिरोहितं निरतिशयं स्वमानन्दमनुभवतीति ॥

इत्यापस्तम्बधर्मसूत्रवृत्तावुज्ज्वलायां द्वाविंशः खण्डः.

---

आत्मन्पश्यन्सर्वभूतानि न मुह्येच्चिन्तयन्कविः ।
आत्मानं चैव सर्वत्र यः पश्येत्स वै ब्रह्मा नाकपृष्ठे विराजति ॥१॥

सर्वाणि भूतानि आत्मन् आत्मनि शेषत्वेन स्थितानि पश्यन्नुपनिषदादिभिर्जानन् पश्चाच्चिन्तयन् युक्तिभिर्निरूपयन् यो न मुह्येत् मध्ये मोहं न गच्छेत् कविर्मेधावी, पश्चाच्च सर्वत्रैव शेषित्वेन स्थितमात्मानं पश्येत्साक्षात्कुर्यात्, स वै ब्रह्मा ब्राह्मणः नाकपृष्ठे तत्सदृशे स्वे महिम्नि स्थितो विराजति स्वयं प्रकाशते ॥

निपुणोणीयान्बिसोर्णाया यस्सर्वमावृत्य तिष्ठति ।
वर्षीयाश्श्च पृथिव्या ध्रुवः सर्वमारभ्य तिष्ठति।
स इन्द्रियैर्जगतोस्य ज्ञानादन्योनन्यस्य ज्ञेयात्परमेष्ठी विभाजः ।

**तस्मात्कायाः प्रभवन्ति सर्वे समूलं शाश्वतिकस्स नित्यः ॥२॥**

निपुणो मेधावी चित्स्वरूपः बिसोर्णायाः बिसतन्तोरपि अणीयान् सूक्ष्मो यस्सर्वमावृत्य तिष्ठति व्याप्य स्थितः, यश्च पृथिव्या अपि वर्षीयान् वृद्धतरः सर्वगतत्वादेव सर्वमारभ्य विष्टभ्य शेषित्वेनाधिष्ठाय तिष्ठति, ध्रुवः एकरूपः; अस्य जगतो यदिन्द्रियैर्ज्ञानं इन्द्रियजं ज्ञानं तस्मात्, कीदृशात्? ज्ञेयात् अनन्यस्य, पञ्चम्यर्थे षष्ठी, ज्ञेयान्नीलपीताद्याकारादनन्यभूतं नीलपीताद्याकारं तस्माद्विषयज्ञानादन्य इत्यर्थः। श्रूयते च— 'तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योन्तर आत्मानन्दमयः'[1] इति

ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतस्स्थितम्।[2] इति पुराणम् ॥

स्वभावतस्स्वच्छस्य चिद्रूपस्यात्मनो नीलपीताद्याकारकालुष्यं तद्रूपाया बुद्धिवृत्तेरनुरागकृतं भ्रान्तमित्यर्थः। वैषयिकज्ञानादन्य इति विशेषणात् ज्ञानात्मक इत्यपि सिद्धम्। 'सत्यं ज्ञानमनन्तं ब्रह्म'[3] इति च श्रुतिः। एवम्भूतस्स आत्मा परमेष्ठी परमे स्वरूपे तिष्ठतीति। विभाज इत्यस्य परेण सम्बन्धः। विभजत्यात्मानं देवमनुष्यादिरूपेण नानाशरीरानुप्रवेशेनेति विभाक्, तस्माद्विभाजो निमित्तभूतात् सर्वे कायाः देवमनुष्यादिशरीराणि प्रभवन्ति उत्पद्यन्ते। स मूलं स प्रपञ्चसृष्टेर्भोक्तृतया मूलकारणम्, स नित्यः अविनाशी, शाश्वतिकः एकरूपोऽविकारः ॥

---

[1] तै. उ. २–५. [2] विष्णुपु. १–१–६. [3] तै. उ. २–१.

दोषाणां तु निर्घातो योगमूल इह जीविते ।
निर्हृत्य भूतदाहीयान् क्षेमं गच्छति पण्डितः ॥

दोषाणां वक्ष्यमाणानां क्रोधादीनां निर्घातः निर्मूलनं इह जीविते योगमूलः, योगा वक्ष्यमाणाः अक्रोधादयः, तन्मूलः । ततश्च तान् भूतदाहीयान् भूतानि दहतः क्रोधादीन् दोषान्निर्हृत्य क्षेमं गच्छति आत्मज्ञानद्वारेण पण्डितो लब्धज्ञानः आत्मसाक्षात्कारी क्षेममभयं मोक्षम् । 'अभयं वै जनक प्राप्तोसि '[1] इति बृहदारण्यकम् । समाप्ताश्श्लोकाः ॥

अथ भूतदाहीयान्दोषानुदाहरिष्यामः ॥४॥

भूतानां दाहो भूतदाहः, तस्मै हिता भूतदाहीयाः । 'तस्मै हितम्' इति छः ॥

क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्यमत्याशपरीवादावसूया काममन्यू अनात्म्यमयोगस्तेषां योगमूलो निर्घातः॥५॥

आक्रोशादिहेतुकोन्तःकरणविक्षोभः स्वेदकम्पादिलिङ्गः क्रोधः । हर्षः इष्टलाभाच्चेतस उद्रेकः रोमाञ्चादिलिङ्गः । रोषः क्रोधस्यैव कियानपि भेदः मित्रादिषु प्रतिकूलेषु मनसो वैलोम्यमात्रकार्यकरम् । लोभो द्रव्यसङ्गः, यो धर्मव्ययमपि रुणद्धि । मोहः कार्याकार्ययोरविवेकः, स च प्रायेण क्रोधादिजन्योपि पृथगुपदिश्यते, कदाचित्तु तदभावेपि सम्भवतीति । दम्भो धार्मिकत्वप्रकाशनेन लोकवञ्चनम् । द्रोहोपकारः । मृषोद्यमनृ-

---

[1] बृह. ६–२–४.

तवचनम् । अत्याशोत्यशनम् । परीवादः परदोषाभिधानम् । असूया परगुणेष्वक्षमा । कामः स्त्रीसङ्गमः । मन्युः गूढो द्वेषः । अनात्म्यमजितेन्द्रियत्वं जिह्वाचापल्यादि । अयोगो विक्षिप्तचित्तता । एते भूतदाहीया दोषाः । तेषां योगमूलो निर्घातः ॥

के पुनस्ते योगाः? तानाह—

**अक्रोधोहर्षोरोषोलोभोमोहोदम्भोद्रोहस्सत्यवचनमनत्याशोपैशुनमनसूया संविभागस्त्याग आर्जवं मार्दवꣳ शमो दमस्सर्वभूतैरविरोधो योग आर्यमानृशꣳसं तुष्टिरिति सर्वाश्रमाणाꣳ समयपदानि तान्यनुतिष्ठन्विधिना सार्वगामी भवति ॥ ६ ॥**

एते चाक्रोधादयोपि भावरूपाः, न क्रोधाद्यभावमात्रं, क्रोधादिनिर्घातहेतुतयोपदेशात् । के पुनस्ते? क्रोधादिषु प्रसक्तेष्वपि नाकार्यमिति सङ्कल्पः । अहर्षः इष्टलाभालाभेषु चेतस ऐकरूप्यम् । अरोषो मित्रादिषु प्रतिकूलेष्वपि मनोविकाराभावः । अलोभस्सन्तोषोलम्बुद्धिः । अमोहोवधानम् । अदम्भो धर्मार्थमनुष्ठानम् । अद्रोहः परेष्वपकारिष्वप्यनपकारः । अनसूया परगुणेष्वनुमो[1]दनम् । सत्यवचनं यथादृष्टार्थवादित्वम् । संविभागः आत्मानमुपरुध्यापि अन्नादिदानम् । त्यागोपरिग्रहः । आर्जवं मनोवाक्कायानामेकरूपता । मार्दवं सूपगमता । शमः मन्युपरित्यागः । दम इन्द्रिय-

[1] घ—भिमो.

जयः । एताभ्यामेव गतत्वात् पूर्वत्र स्वस्मिन् क्रमे अकामः, अमन्युः, आत्मवत्त्वमिति नोपदिष्टम् । सर्वभूतैरविरोधः । सर्वग्रहणं क्षुद्रैरप्यविरोधार्थम् । योग ऐकाग्रचम् । आर्याणां भाव आर्यम्, शिष्टाचारानुपालनम् । आनृशंसमानृशंस्यं व्यवहारवचनादौ प्रसक्तस्यापि नैष्ठुर्यस्य वर्जनम्। तुष्टिः अनिर्वेदः । समयो व्यवस्था, सा च प्रकरणाद्धर्मज्ञानाम्, पदं विषयः । एते अक्रोधादयस्सर्वेषामाश्रमाणां सेव्याः, न केवलं योगिनामेवेति धर्मज्ञानां समय इत्यर्थः । ते हि भाव्यमानाः क्रोधादीन् समूलघातं घ्नन्ति । अतश्च तान्यनुतिष्ठन् विधिना सार्वगामी भवति । तान्यक्रोधादीनि तुष्टचन्तानि विधिना यथाशास्त्रमनुतिष्ठन् सर्वस्मै हितः सार्वः आत्मा, तं गच्छति प्राप्नोति । विधिनेति वचनात् ‘ प्राणिनां तु वधो यत्र तत्र साक्ष्यनृतं वदेत् ’ इत्यादिके विषये अनृतवचनादावपि न दोष इति ॥

इति त्रयोविंशः खण्डः.

इत्यापस्तम्बधर्मसूत्रव्याख्यायामुज्ज्वलायां
अष्टमः पटलः.

---

**क्षत्रियꣳ हत्वा गवाꣳ सहस्रं वैरयातनार्थं दद्यात् ॥ १ ॥**

क्षत्रियं हत्वा गवां सहस्रं ब्राह्मणेभ्यो दद्यात् । किमर्थं? वैरयातनार्थं, वैरं पापं, तस्य यातनं निर्हरणं, तदर्थम् ।

'ऋषभश्चात्राधिकस्सर्वत्र प्रायश्चित्तार्थः'[1] इति वक्ष्यति। तेन प्रायश्चित्तरूपमिदं दानम्। प्रायश्चित्तं च पापक्षयार्थम्। तत्किमर्थं वैरयातनार्थमुच्यते? केचिन्मन्यन्ते — 'नाभुक्तं क्षीयते कर्म' इति पुण्यमपुण्यं च। प्रायश्चित्तं तु नैमित्तिकं कर्मान्तरं, यथा गृहदाहादौ क्षामवत्यादय इति। तन्निराकर्तुमिदमुक्तम्। श्रौतेप्युक्तं —'दोषनिर्घातार्थानि भवन्ति'[2] इति। अपर आह — यो येन हन्यते स तेन म्रियमाणस्तस्मिन् वैरं करोति अपि नामाहमेनं जन्मान्तरे वध्यासमिति, तस्य वैरस्य यातनार्थमिदमिति। प्रायश्चित्तार्थत्वमपि वक्ष्यमाणेन सिद्धमिति॥

**शतं वैश्ये ॥ २ ॥**

वैश्ये हते गवां शतं दद्यात्॥

**दश शूद्रे ॥ ३ ॥**

शूद्रे हते गवां दश दद्यात्। गा इति प्रकरणाल्लभ्यते॥

**ऋषभश्चात्राधिकस्सर्वत्र प्रायश्चित्तार्थः ॥ ४ ॥**

सर्वेष्वेतेषु निमित्तेषु ऋषभोप्यधिको देयः। न केवलं गा एव। इदं प्रायश्चित्तत्रयं मानवेन समानविषयम्। यथाह—

अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः।
ऋषभैकसहस्रं गा दद्याच्छुद्ध्यर्थमात्मनः॥
त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम्।
वसन् दूरतरे ग्रामाद्वृक्षमूलनिकेतनः॥

---

[1]आप. ध. १-२४-४. [2]आप. श्रौ. ९-१-४.

एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः ।
प्रमाप्य वैश्यो वृत्तस्थं दद्याद्वैकशतं गवाम् ॥
एतदेव व्रतं कृत्स्नं षण्मासान् शूद्रहा चरेत् ।
ऋषभैकादशा वापि दद्याद्विप्राय गाः स्थिताः ॥[1]

**स्त्रीषु चैतेषामेवम् ॥ ५ ॥**

एतेषां क्षत्रियादीनां स्त्रीषु च हतास्वेवमेव प्रायश्चित्तम्, यथा पुरुषेषु ॥

**पूर्वयोर्वर्णयोर्वेदाध्यायꣳ हत्वा सवनगतं वाभिशस्तः ॥ ६ ॥**

उक्तेषु यौ पूर्वौ वर्णौ क्षत्रियवैश्यौ तयोर्यो वेदाध्यायः अधीतवेदः, तं हत्वाभिशस्तो भवति । अभिशस्त इति ब्रह्मघ्नोभिधानम् । सवनगतं वा, तयोरेव वर्णयोर्यस्सवनगतः । सवनशब्देन न प्रातस्सवनादीन्युच्यन्ते । नापि यागमात्रम् । किं तर्हि? सोमयागः । तत्र यो दीक्षितस्सवनगतः, 'ब्राह्मणो वा एष जायते यो दीक्षितः' इति दर्शनात्; तं च हत्वाभिशस्तो भवति । पूर्वयोर्वर्णयोरिति किम्? ब्राह्मणे मा भूदिति । इष्यते ब्राह्मणे, वक्ष्यति च 'ब्राह्मणमात्रं च'[2] इति । एवं तर्हि शूद्रे मा भून् । न शूद्रो वेदाध्यायस्सवनगतो वा भवति । इदं तर्हि प्रयोजनं पूर्वयोर्वर्णयोरेव यथा स्यात्, तयोरेव यावनुलोमौ करणाम्बष्ठौ[3] तयोर्मा भूदिति । तेनान्ये वर्णधर्मा अनुलोमानामपि भवन्ति ॥

---

[1] म. ११-१२७...३०. [2] आप. ध. १-२४-७.
[3] ज. इतरपुस्तकेषु सर्वेष्वपि 'सवर्णाम्बष्ठौ' इत्येव पाठः.

**ब्राह्मणमात्रं च ॥ ७ ॥**

हत्वाभिशस्तो भवति। मात्रग्रहणान्नाभिजनविद्यासंस्कारापेक्षा ॥

**गर्भं च तस्याविज्ञातम् ॥ ८ ॥**

तस्य ब्राह्मणमात्रस्य गर्भं च स्त्रीपुन्नपुंसकभेदेनाविज्ञातं हत्वाभिशस्तो भवति ॥

**आत्रेयीं च स्त्रियम् ॥ ९ ॥**

'ऋतुस्नातामात्रेयीमाहुः'[1] इति वसिष्ठः। तस्येति वर्तते। आत्रेयीं च ब्राह्मणस्त्रियं हत्वा अभिशस्तो भवति ब्रह्महा भवति, सम्भवत्यस्यां ब्राह्मणगर्भ इति। अत्रिगोत्रजा आत्रेयीत्यन्ये ॥

**तस्य निर्वेषः ॥ १० ॥**

तस्य सर्वप्रकाराभिशस्तस्य निर्वेषः प्रायश्चित्तं वक्ष्यते॥

**अरण्ये कुटिं कृत्वा वाग्यतश्शवशिरध्वजोर्धशाणीपक्षमधोनाभ्युपरिजान्वाच्छाद्य ॥ ११**

कृत्वेति वचनान्न परकृता कुटी ग्राह्या। वाग्यता येन स वाग्यतः वाचंयमः। आहिताग्न्यादिषु दर्शनान्निष्ठान्तस्य परनिपातः। शवशिरो ध्वजो यस्य स शवशिरध्वजः। सलोपश्छान्दसः। स्वव्यापादितस्य ब्राह्मणस्य शिरो ध्वजदण्डस्याग्रे प्रोतं कृत्वेत्यर्थः। यस्य कस्य चिच्छवस्येत्यन्ये। शणस्य विकारश्शाणी पटी, तस्या अर्धमर्धशाणी, तस्याः पक्षमर्धशाणीपक्षं आयामविस्तारयोरुभयो-

[1] वा. ध. १०-९४.

र्घ्यर्थम् । अधोनाभ्युपरिजान्‍वु च यथा भवति तथाच्छाद्य तावन्तं प्रदेशमाच्छाद्य । सापेक्षत्वात् 'ग्रामे प्रतितिष्ठेत'[1] इति वक्ष्यमाणेन संबन्धः । मध्ये क्रियान्तरविधिः ॥

**तस्य पन्था अन्तरा वर्त्मनी ॥ १२ ॥**

तस्य ग्रामं प्रविशतः वर्त्मनी अन्तरा शकटादेर्वर्त्मनो-र्मध्ये पन्था वेदितव्यः । अपर आह—यत्र रथ्यादावुभयोः पार्श्वयोः वर्त्मनी भवतः, तत्र तयोर्मध्येन सूकरादिपथेन सञ्चरेदित्यर्थः ॥

**दृष्ट्वा चान्यमुत्क्रामेत् ॥ १३ ॥**

अन्यमार्यं दृष्ट्वा पथ उत्क्रामेत् । तत्र कौटिल्यः — 'पञ्चारत्नी रथपथश्चत्वारो हस्तिपथः द्वौ क्षुद्रमनुष्याणाम्' इति । तेन मनुष्येषु द्वौ हस्तावुत्क्रामेदिति ॥

**खण्डेन लोहितकेन शरावेण ग्रामे प्रतितिष्ठेत॥**

धर्ममात्रं खण्डनम् । लोहितकमनाग्रीतम् । एवम्भूतं शरावं भिक्षापात्रं गृहीत्वा ग्रामे प्रतितिष्ठेत ग्रामं गच्छेत् ॥

**कोभिशस्ताय भिक्षामिति सप्तागारं चरेत् ॥**

अभिशस्तो ब्रह्महा, तस्मै मह्यं को धार्मिको भिक्षां ददाती-त्युच्चैर्ब्रुवाणस्सप्तागाराणि चरेत् । सप्तग्रहणमधिकनिवृत्त्यर्थम् । द्वित्रिष्वेवागारेषु यदि पर्याप्तं लभ्यते तदा तावत्स्वेव ॥

**सा वृत्तिः ॥ १६ ॥**

सप्तस्वगारेषु या च यावती लभ्यते सैव वृत्तिरपर्याप्तापि ॥

---

[1] आप. ध. १-२४-१४.

**अलब्धोपवासः ॥ १७ ॥**

यदि सप्तस्वगारेषु न किञ्चिल्लभ्यते तदोपवास एव तस्मिन्नहनि ॥

**गाश्च रक्षेत् ॥ १८ ॥**

एवं प्रायश्चित्तं कुर्वन्नहरहर्गाश्च रक्षेत् ॥

**तासां निष्क्रमणप्रवेशने द्वितीयो ग्रामेर्थः ॥**

तासां गवां निष्क्रमणसमये प्रवेशसमये च द्वितीयो ग्रामेर्थः प्रयोजनम् । भिक्षार्थं प्रथममुक्तम् । नान्यदा ग्रामं प्रविशेदित्युक्तं भवति ॥

**द्वादशवर्षाणि चरित्वा सिद्धस्सद्भिस्सम्प्रयोगः॥**

एवं द्वादशवर्षाणि व्रतमेतच्चरित्वा सद्भिस्सम्प्रयोगः कर्तव्यः । सद्भिस्सह सम्प्रयुज्यते येन विधिना, स कर्तव्यः । स च शिष्टाचारे शास्त्रान्तरे च सिद्धः । स उच्यते—कृतप्रायश्चित्तस्स्वहस्ते यवसं गृहीत्वा गामाह्वयेत् । सा यद्यागत्य श्रद्दधाना भक्षयति, तदा सम्यगनेन व्रतं चरितमिति जानीयात् , अन्यथा नेति ॥

**आजिपथे वा कुटिं कृत्वा ब्राह्मणगव्योपजिगीषमाणो वसेत्त्रिः प्रतिराद्धोपजित्य वा मुक्तः ॥ २१ ॥**

सङ्ग्रामेण जेतव्या दस्यवो येन पथा ग्रामं प्रविश्य गवादिकमपहृत्यापसरन्ति स आजिपथः । तस्मिन्वा कुटिं कृत्वा वसेत् । किं चिकीर्षन्? ब्राह्मणगव्यः, 'वा छन्दसि'

---

[1]घ. ज—लब्धो.

इति शसि पूर्वसवर्णाभावे यणादेशः, ब्राह्मणगवीरपजिगीषमाणः दस्यूनपजित्य प्रत्याहर्तुमिच्छन्। एवं वसन् दस्युभिः ह्रियमाणं गवादिकमुद्दिश्य तैर्युद्धं कुर्वन् त्रिः प्रतिराद्धः तैरपजितः, अपजित्य वा तान्, गवादिकं प्रत्याहृत्य ब्राह्मणेभ्यो दत्वा मुक्तो भवति तस्मादेनसः। द्वादशवार्षिके प्रवृत्तस्येदम्। एवमुत्तरमपि॥

**आश्वमेधिकं वावभृथमवेत्य मुच्यते॥ २२॥**

अथवा अश्वमेधावभृथे स्नात्वा मुच्यते॥

**धर्मार्थसन्निपातेर्थग्राहिण एतदेव॥ २३॥**

धर्मस्याग्निहोत्रादेरर्थस्य कुडुकरणादेर्यत्र युगपत्सन्निपातस्तत्रोभयानुग्रहासम्भवे धर्मलोपेन योर्थं गृह्णाति तस्याप्येतदेव प्रायश्चित्तम्। अथवा यो धर्मं हित्वार्थहेतोः कौटसाक्ष्यादिकं करोति तद्विषयमेतत्। अत्र गौतमः—

'कौटसाक्ष्यं राजगामिपैशुनं गुरोरनृताभिशंसनं पातकसमानि'[1] इति। मनुरपि—

अनृतं च समुत्कर्षे राजगामिनि पैशुनम्।
गुरोश्चालीकनिर्बन्धस्समानि ब्रह्महत्यया॥[2] इति॥

**गुरुं हत्वा श्रोत्रियं वा कर्मसमाप्तमेतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत्॥ २४॥**

गुरुः पित्राचार्यादिः। श्रोत्रियोधीतवेदः। स यदि कर्मसमाप्तो भवति। सोमान्तानि कर्माणि समाप्तानि यस्य स एवमुच्यते। तौ हत्वा एतेनैवानन्तरोक्तेन विधिना ओत्तमादु-

---

[1] गौ. ध. २०-९. [2] म. ११-५६.

च्छ्वासाच्चरेत् । उत्तम उच्छ्वासः प्राणवियोगः, आ तस्माच्चरेत् ॥

**नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते ॥ २५ ॥**

अश्वमेधावभृथादिषु सम्भवत्स्वप्यस्यास्मिन् लोके अस्मिन् जीविते प्रत्यापत्तिश्शुद्धिर्नास्तीत्यर्थः ॥

**कल्मषं तु निर्हण्यते ॥ २६ ॥**

मृतस्य तु कल्मषं निर्हण्यते । तेन पुत्रादिभिस्संस्काराद्यौर्ध्वदैहिकाः कार्या इति भावः । अन्ये तु पूर्वसूत्रं तन्निवृत्त्यर्थं मन्यन्ते, प्रत्यापत्तिः पुत्रादिभिः पित्रादिभावेन सम्बन्ध इति ॥

इति चतुर्विंशः खण्डः.

---

**गुरुतल्पगामी सवृषणꣳ शिश्नं परिवास्याञ्जलावाधाय दक्षिणां दिशमनावृत्तिं व्रजेत् ॥**

गुरुरत्र पिता, नाचार्यादिः । तल्पशब्देन शयनवाचिना भार्या लक्ष्यते । सा च साक्षाज्जननी, न तत्सपत्नी । तां गत्वा सवृषणं साण्डं शिश्नं परिवास्य क्षुरादिना छित्वा अञ्जलावाधाय दक्षिणां दिशं व्रजेत् । अनावृत्तिं, आवृत्तिर्न क्रियते यस्यां तां दिशमनावर्तमानो गच्छेदिति । अथ ये दक्षिणस्योदधेस्तीरे वसन्ति, तेपि यावद्देशं गत्वा उदधिमेव प्रवेक्ष्यन्ति, मरणं ह्यत्र विवक्षितम् । अत्र संवर्तः —

पितृदाराः समारुह्य मातृवर्जं नराधमः ।

भगिनीं मातुराप्तां वा स्वसारं वान्यमातृजाम् ।
एता गत्वा स्त्रियो मोहात् तप्तकृच्छ्रांत्समाचरेत् ॥[1] इति ।

नारदस्तु –

माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यपत्नी शिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
दुहिताचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥
आसामन्यतमां गत्वा गुरुतल्पग उच्यते ।
शिश्नस्योत्कृन्तनं तत्र नान्यो दण्डो विधीयते ॥ इति ॥

**ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयात् ॥२॥**

आयसी ताम्रमयी वा अन्तस्सुषिरा स्त्रीप्रतिकृतिरत्र सूर्मिः। तां ज्वलितामग्नौ तप्तां परिष्वज्य समाप्नुयात् समाप्तिं गच्छेत् म्रियेत ॥

**सुरापोग्निस्पर्शाᳶ सुरां पिबेत् ॥ ३ ॥**

गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
यथैवैका न पातव्या तथा सर्वा द्विजोत्तमैः ॥[2] इति ।

तस्याः पाता सुरापः । सोग्निस्पर्शां अतिक्वथितां*सुरां पिबेत् । तया दग्धकायश्शुद्ध्यति ॥

**स्तेनः प्रकीर्णकेशोᳶसे मुसलमाधाय राजानं गत्वा कर्माचक्षीत तेनैनᳶ हन्यात् । वधे मोक्षः ॥ ४ ॥**

---

[1] संवर्त. १५८, १५९. [2] मनु. ११-९५. *अतिक्वथितां.

स्तेनो ब्राह्मणसुवर्णहारी । अंसे स्वे स्कन्धे मुसलमाधाय आयसं खादिरं वा धारयन् राजानं गत्वा कर्माचक्षीत एवं-कर्मास्मि शाधि मामिति । स तेन मुसलेन एनं स्तेनं हन्यात् यथा मृतो भवति । वधेन स्तेयान्मोक्षो भवति ॥

अनुज्ञातेनुज्ञातारमेनः स्पृशति ॥ ५ ॥

यदि तु राजा दयादिना तमनुजानीयात् गच्छेति, तदा तम-नुज्ञातारं राजानमेव तदेनस्स्पृशति । उत्तरमृजु ॥

अग्निं वा प्रविशेत् ॥ ६ ॥

तीक्ष्णं वा तप आयच्छेत् ॥ ७ ॥

तीक्ष्णं तपो महापराकादि । तद्वा आयच्छेत् आवर्तयेत् ॥

भक्तापचयेन वात्मानꣳ समाप्नुयात् ॥ ८ ॥

भक्तमन्नम् । तस्यापचयो ह्रासः । प्रथमे दिने यावन्तो ग्रासाः, ते एकेन न्यूना द्वितीये । एवं तृतीयादिष्वपि आ एकस्माद्ग्रासात् । तत्रापि यदि न समाप्तिः, ततस्तत्रैव ग्रास-परिमाणापचयः कर्तव्यः । एवं भक्तापचयेन वात्मानं समाप्नु-यात् समापयेत् ॥

कृच्छ्रसंवत्सरं वा चरेत् ॥ ९ ॥

अथ वा संवत्सरमेकं नैरन्तर्येण कृच्छ्रं चरेत् । एषामेनस्सु गुरुषु गुरूणि, लघुषु लघूनीति व्यवस्था ॥

अथाप्युदाहरन्ति ॥ १० ॥

अस्मिन्नेव विषये पुराणश्लोकमप्युदाहरन्तीत्यर्थः ॥

स्तेयं कृत्वा सुरां पीत्वा गुरुदारं च गत्वा ब्रह्महत्यामकृत्वा । चतुर्थकाला मितभोजिनस्स्युरपोऽभ्यवेयुस्सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैरप पापं नुदन्ते ॥ ११ ॥

ब्रह्महत्याव्यतिरिक्तानि स्तेयादीनि कृत्वा चतुर्थकालाः चतुर्थो भोजनकालो येषां ते, यथा अद्य दिवा भुङ्क्ते श्वो रात्राविति, ते तथोक्ताः । तथापि मितभोजिनः, न मृष्टाशिनः । अपोऽभ्यवेयुः भूमिगतास्वप्सु स्नानं कुर्युः । सवनानुकल्पं, यथा सवनानि प्रातस्सवनादीनि अनुक्लृप्तानि अनुवृत्तानि*भवन्ति, तथा; त्रिषवणमित्यर्थः । तिष्ठेयुरहनि, रात्रावासीरन्, एवं स्थानासनाभ्यां विहरन्तः कालं क्षिपन्तः एते त्रिभिर्वर्षैस्तत्पापमपनुदन्ते ॥

प्रथमं वर्णं परिहाप्य प्रथमं वर्णꣳ हत्वा संग्रामं गत्वावतिष्ठेत । तत्रैनꣳ हन्युः ॥ १२ ॥

प्रथमो वर्णो ब्राह्मणस्तं हत्वा संग्रामं गत्वा सेनयोर्मध्येऽवतिष्ठेत । किं सर्वे? नेत्याह — प्रथमं वर्णं परिहाप्य ब्राह्मण-

*ग. घ.—अनुसृतान्यनुष्ठितानि.

वर्जं इतरो वर्णः क्षत्रियादिरित्यर्थः । तत्र स्थितमेनं ते सैनिका हन्युः, अघ्नन्तस्ते एनस्विनस्स्युः, यथा राजा स्तेनम् । स मृतश्शुद्ध्यति ॥

**अपि वा लोमानि त्वचं माꣳसमिति हावयित्वाग्निं प्रविशेत् ॥ १३ ॥**

अनन्तरोक्तविषय एव प्रायश्चित्तान्तरम् । इतिशब्दो लोहितादीनामप्युपलक्षणार्थः । आत्मनो लोमादीन्युत्कृत्य पुरोहितेन हावयित्वा होमं कारयित्वा पश्चात्स्वयं तस्मिन्नग्नौ प्रविशेत् । मृतश्शुद्ध्यति । तत्राग्निमुपसमाधाय जुहुयात् — 'लोमानि मृत्योर्जुहोमि लोमभिर्मृत्युं वासये स्वाहा । त्वचं मृत्योर्जुहोमि त्वचा मृत्युं वासये स्वाहा । लोहितं मृत्योर्जुहोमि लोहितेन मृत्युं वासये स्वाहा । स्नावानि मृत्योर्जुहोमि स्नावभिर्मृत्युं वासये स्वाहा । मांसानि मृत्योर्जुहोमि मांसैर्मृत्युं वासये स्वाहा । अस्थीनि मृत्योर्जुहोमि अस्थिभिर्मृत्युं वासये स्वाहा । मज्जानं मृत्योर्जुहोमि मज्जभिर्मृत्युं वासये स्वाहा । मेदो मृत्योर्जुहोमि मेदसा मृत्युं वासये स्वाहा[1] ।' इत्येते मन्त्रा वसिष्ठेन पठिताः ॥

**वायसप्रचलाकबर्हिणचक्रवाकहꣳसभासमण्डूकनकुलडेरिकाश्वहिꣳसायाꣳ शूद्रवत्प्रायश्चित्तम् ॥ १४ ॥**

वायसः काकः, प्रचलाकः कामरूपी कृकलासः, बर्हिणो

---

[1] वा. ध—२०-२६.

मयूरः, चक्रवाको दिवा मिथुनचरः रात्रौ विरही, हंसो मानसवासी, भासो गृध्रविशेषः, अश्व*नकुलमण्डूकाः प्रसिद्धाः। डेरिका गन्धमूषिका। एषां समुदितानां वधे शूद्रवत्प्रायश्चित्तम्। प्रत्येकवधे तु तत्कल्प्यम्। केचित्प्रत्येकवधे एतत्प्रायश्चित्तमित्याहुः॥

इति पञ्चविंशः खण्डः.

---

धेन्वनडुहोश्चाकारणात्॥ १॥

धेनुः पयस्विनी गौः, अनड्वान् अनोवहनयोग्यो बलीवर्दः, तयोः कारणमन्तरेण हिंसायां शूद्रवत्प्रायश्चित्तं कर्तव्यम्। कारणं कोपो मांसेच्छा वा, तेन विना, अबुद्धिपूर्वमित्यर्थः। बुद्धिपूर्वं चेत्[†] वैश्यवदित्यादि स्मृत्यन्तरे द्रष्टव्यम्॥

धुर्यवाहप्रवृत्तौ चेतरेषां प्राणिनाम्॥ २॥

धुरं वहतीति धुर्यो बलीवर्दः, तेन वोढुं शक्या धुर्यवाहाः। तावत्सु हिंसायां प्रवृत्तौ सत्यां इतरेषां प्राणिनां, केवलं प्राणा एव येषां नास्थीनि सन्ति, तेषां हिंसायां शूद्रवत्प्रायश्चित्तमिति। अत्र गौतमः—'अस्थन्वतां सहस्रं हत्वा। अनस्थिमतामनडुद्भारे च'[1] इति॥

अनाक्रोश्यमाक्रुश्यानृतं वोक्त्वा त्रिरात्रमक्षीराक्षारलवणभोजनम्॥ ३॥

---

*क्वचित्—श्व इत्येव. †'बुद्धिपूर्वे तु गां हत्वा' इति पा. 1गौ. ध. २२–२०, २१.

यो न कथं चनाक्रोशमर्हति स पित्राचार्यादिः अनाक्रोश्यः, तमाक्रुश्य निन्दां कृत्वा, अनृतं वोक्त्वा पातकोपपातकवर्जं, त्रिरात्रं भोजने क्षीरादि वर्जयेत् । क्षीरग्रहणेन विकाराणां दध्यादीनामपि ग्रहणमित्याहुः ॥

**शूद्रस्य सप्तरात्रमभोजनम् ॥ ४ ॥**

शूद्रस्त्वनन्तरोक्ते विषये सप्तरात्रमुपवसेत् ॥

**स्त्रीणां चैवम् ॥ ५ ॥**

'क्षत्रियं हत्वा'[1] इत्यादिष्वनृतवचनान्तेषु निमित्तेषु यानि प्रायश्चित्तान्युक्तानि स्त्रीणामप्येवमेव कर्तव्यानि । एतत् 'चत्वारो वर्णाः'[2] इति जात्यभिधानादेव प्राप्तं सन्नियमार्थमुच्यते, अत ऊर्ध्वं पुरुषस्यैव न स्त्रीणामिति ॥

अपर आह — जात्यभिधानादेव सिद्धे अतिदेशार्थं वचनम् । अतिदेशेषु चार्धं प्राप्यते इति स्मार्तो न्यायः । तेन स्त्रीणामप्यर्धप्राप्त्यर्थं वचनमिति । तथा च भार्गवः —

अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः ।
प्रायश्चित्तार्धमर्हन्ति स्त्रियो व्याधित एव च ॥

**येष्वाभिशस्त्यं तेषामेकाङ्गं छित्वाऽप्राणि*हिंसायाम् ॥ ६ ॥**

येषु हतेषु 'सवनगतं वाभिशस्तः'[3] इत्यादिना अभिशस्तत्वमुक्तं, तेषामेकाङ्गं छित्वा शूद्रवत्प्रायश्चित्तं कुर्यात् । अप्राणिहिंसायां, यदि छेदनेन तस्याङ्गस्य शक्तिर्निहन्यते † ॥

---

[1]आप. ध. १–२४–१.　[2]आप. ध. १–१–४.　[3]आप. ध. १–२४–६.

*'प्राण' इति मुम्बै पुस्तके.

†'शक्तिर्न हन्यते' 'शक्तिर्नश्यते' 'शक्तिर्न भज्यते' इति पाठान्तराणि.

**अनार्यत्वपैशुनप्रतिषिद्धाचारेष्वभक्ष्याभोज्यापेयप्राशने शूद्रायां च रेतस्सिक्त्वाऽयोनौ च दोषवच्च कर्माभिसन्धिपूर्वं कृत्वाऽनभिसन्धिपूर्वं वाब्लिङ्गाभिरप उपस्पृशेद्वारुणीभिर्वान्यैर्वा पवित्रैर्यथा कर्माभ्यासः ॥ ७ ॥**

आर्याणां भावः आर्यं, तद्यस्मिन्नाचारेस्ति तदार्यत्वं, मत्वर्थीयोच्प्रत्ययः। ततोन्यदनार्यत्वं असत्यभाषणादि। पैशुनं परदोषकथनं राजगामि। प्रतिषिद्धाचारः 'ष्ठीवनमैथुनयोः कर्माप्सु वर्जयेत्'[1] इत्यादेरनुष्ठानम्। अभक्ष्यं वृथाकृसरादि। अभोज्यं केशकीटाद्युपहतम्। अपेयं 'अनिर्दशाया गोः क्षीरम्' इत्यादि। एतेषां प्राशने। शूद्रायां च वेश्याप्रभृतौ रेतस्सिक्त्वा, अयोनौ च जलादौ रेतस्सिक्त्वा, दोषवच्च कर्म श्रौतमाभिचारिकं, अभिसन्धिपूर्वं बुद्धिपूर्वं कृत्वा, अनभिसन्धिपूर्वं वा परपीडाकरं कर्म कृत्वा अब्लिङ्गाभिः 'आपो हिष्ठा मयोभुवः'[2] इति तिसृभिः, 'हिरण्यवर्णाश्शुचयः पावकाः'[2] इति चतसृभिरप उपस्पृशेत्। तूष्णीं प्रथमं स्नात्वा पश्चादेतैर्मन्त्रैर्मार्जनं कुर्यात्। वारुणीभिर्वा 'इमं मे वरुण तत्त्वा यामि त्वन्नो अग्ने स त्वन्नो अग्ने'[3] इत्येताभिरन्यैर्वा पवित्रैः 'पवमानस्सुवर्जनः'[4] इत्येतेनानुवाकेन, शुद्धवतीभिः[5] तरत्समन्दीयेन[6] च। यथा कर्माभ्यासः कृतः, तावत्कृत्वाप उपस्पृशेत्। रहस्यंप्रायश्चित्तमेतदित्याहुः ॥

---

[1] आप. ध. १–३०–१९. [2] तै. सं. ५–६–१. [3] तै. सं. ४–२–११.
[4] तै. ब्रा. १–४–८. [5] ऋ. सं. ८–९५–७. [6] ऋ. सं. ९–५८–१.

**गर्दभेनावकीर्णी निर्ऋतिं पाकयज्ञेन यजेत॥८॥**

यो ब्रह्मचारी स्त्रियमुपेयात् सोवकीर्णी गर्दभेन निर्ऋतिं पाकयज्ञेन स्थालीपाकविधानेन यजेत। अत्र मनुः —

अवकीर्णी तु काणेन गर्दभेन चतुष्पथे।

पाकयज्ञविधानेन यजेत निर्ऋतिं निशि॥[1]

हारीतस्तु —'स्त्रीष्ववकीर्णी निर्ऋत्यै चतुष्पथे गर्दभं पशुमालभेत पाकयज्ञेन धर्मेण भूमौ पशुपुरोडाशश्रपणमप्स्ववदानैः प्रचर्याज्येन जुहोति. कामावकीर्णोस्म्यवकीर्णोस्मि कामकामाय स्वाहा, कामाभिद्रुग्धोस्म्यभिद्रुग्धोस्मि कामकामाय स्वाहा' इति॥

**तस्य शूद्रः प्राश्नीयात्॥ ९॥**

तस्य गर्दभस्य सर्पिष्मद्धविरुच्छिष्टं शूद्रः प्राश्नीयात्। 'तेन सर्पिष्मता ब्राह्मणम्'[2] इत्यस्यापवादः॥

**मिथ्याधीतप्रायश्चित्तम्॥ १०॥**

नियमातिक्रमेणाधीतं मिथ्याधीतं, तद्दोषनिर्हरणाय प्रायश्चित्तं वक्ष्यते॥

**संवत्सरमाचार्यहिते वर्तमानो वाचं यच्छेत्स्वाध्याय एवोत्सृजमानो वाचमाचार्य आचार्यदारे भिक्षाचर्ये च॥ ११॥**

---

[1]मनुस्मृ. ११–११८, [2]आप. गृ. ७–१५.

आचार्यस्य हिते वर्तमानो भूत्वा संवत्सरं वाचंयमस्स्यात् । वागुत्सर्गः स्वाध्याय एव, आचार्ये तं प्रति कार्यनिवेदने, एव-माचार्यदारे । भिक्षाचर्यं भिक्षाचरणं, तत्र भवति भिक्षां देही-ति । अस्मादेव ज्ञायते असमावृत्तविषयमेतदिति ॥

**एवमन्येष्वपि दोषवत्स्वपतनीयेषूत्तराणि यानि वक्ष्यामः ॥ १२ ॥**

यथा मिथ्याधीतस्येदं प्रायश्चित्तं, एवमुत्तराणि प्रायश्चित्ता-नि यानि वक्ष्यामः, तान्यन्येष्वपि । अपिशब्दान्मिथ्याधीतेपि । दोषवत्सु पतनीयव्यतिरिक्तेषु कर्मसु, येष्वाहत्य प्रायश्चित्तं नोक्तं तद्विषयाणि द्रष्टव्यानि ॥

**काममन्युभ्यां वा जुहुयात् कामोकार्षीन्मन्युर-कार्षीदिति ॥ १३॥**

स्वाहाकारान्ताभ्यां होमः, आज्यं द्रव्यम् ॥

**जपेद्वा ॥ १४ ॥**

अस्मिन् पक्षे न स्वाहाकारः । केचित्तु—कामाय स्वाहा, मन्यवे स्वाहेति होममिच्छन्ति । जपपक्षे तु सूत्रोपदिष्टौ मन्त्राविति । दोषाभ्यासानुरूपं च जपहोमयोरावृत्तिः ॥

**पर्वणि वा तिलभक्ष उपोष्य वा श्वोभूत उद-कमुपस्पृश्य सावित्रीं प्राणायामशस्सहस्र-कृत्व आवर्तयेदप्राणायामशो वा ॥ १५ ॥**

पर्वणि पौर्णमास्याममावास्यायां वा तिलानेवं भक्षयति नान्यदोदनादिकमिति तिलभक्षः । उदकमुपस्पृश्य स्नात्वा प्राणायामशः प्राणायामेन सावित्रीं सहस्रकृत्व आवर्तयेत् । एकस्मिन् प्राणायामे यावत्कृत्व आवर्तयितुं शक्यते तत्र तावत्कृत्व आवर्तयेत्, एवमासहस्रपूर्तेः प्राणायामावृत्तिः । अप्राणायामशो वा ॥

इति षड्विंशः खण्डः.

---

**श्रावण्यां पौर्णमास्यां तिलभक्ष उपोष्य वा श्वोभूते माहानदमुदकमुपस्पृश्य सावित्र्या समित्सहस्रमादध्याज्जपेद्वा ॥ १ ॥**

गिरिप्रभवा समुद्रगामिनी नदी महानदी, तत्र भवं माहानदम् । 'समित्सहस्रं यज्ञियवृक्षस्य आदध्यात्' इतिवचनात् न होमधर्मस्वाहाकारः । 'जुहोतिचोदनस्स्वाहाकारप्रदानः'[1] इत्युक्तत्वात् । जपेद्वा ॥

**इष्टियज्ञक्रतून्वा पवित्रार्थानाहरेत् ॥ २ ॥**

पवित्रार्थाश्शुद्ध्यर्थाः । मृगाराद्या इष्टयः, यज्ञक्रतवः सोमयागा अग्निष्टुदादयः । तान्येतानि प्रायश्चित्तानि, एनस्सु गुरुषु गुरूणि लघुषु लघूनि ॥

**अभोज्यं भुक्त्वा नैष्पुरीष्यम् ॥ ३ ॥**

---

[1] आप. प—३-४.

अभोज्यस्य मार्जारादिमांसस्य भक्षणे निष्पुरीषभावः कर्तव्यः। यावदुदरं निष्पुरीषं भवति तावदुपवस्तव्यम् ॥

तत्कियता कालेनावाप्यते? तदाह—

**तत्सप्तरात्रेणावाप्यते ॥ ४ ॥**

तन्नैष्पुरीष्यं सप्तरात्रेणावाप्यते, सप्तरात्रमुपवस्तव्यमित्यर्थः। सप्तरात्रमुपवसेदित्येव सिद्धे नैष्पुरीष्यमिति वचनात् येषां त्रिरात्रेणैव तदवाप्यते तेषां तावतैव शुद्धिः। तथा च गौतमः— 'अभोज्यभोजनेऽमेध्यप्राशने वा निष्पुरीषीभावः। त्रिरात्रावरमभोजनम्। सप्तरात्रं वा'[1] ॥

**हेमन्तशिशिरयोर्वोभयोस्सन्ध्योरुदकमुपस्पृशेत् ॥ ५ ॥**

उभयोस्सन्ध्योस्सायम्प्रातश्च उदकमुपस्पृशेत् भूमिगतास्वप्सु स्नानम्। उद्धृताभिर्वा शीताभिः ॥

**कृच्छ्रद्वादशरात्रं वा चरेत् ॥ ६ ॥**

द्वादशरात्रसाध्यो व्रतविशेषः कृच्छ्रद्वादशरात्रः ॥

तस्य विधिमाह —

**त्र्यहमनक्ताश्यदिवाशी ततस्त्र्यहं त्र्यहमयाचितव्रतस्त्र्यहं नाश्नाति किंचनेति कृच्छ्रद्वादशरात्रस्य विधिः ॥ ७ ॥**

आदितस्त्रिष्वहस्सु नक्तं नाश्नीयात्, दिवैव भुञ्जीत, ततस्त्र्यहमदिवाशी रात्रावेव भुञ्जीत, न दिवा। ततस्त्र्यहमयाचित-

---

[1] गौ. ध. २३–२३, २४, २५.

मेव भुञ्जीत । याच्ञाप्रतिषेधोऽयम् । तेन स्वद्रव्यस्याप्रतिषेधः । तथा च गौतमः — 'अथापरं त्र्यहं न कञ्चन याचेत'[1] इति ततस्त्र्यहं नाश्नाति किञ्चन न फलादिकमपि । एष कृच्छ्रद्वादशरात्रस्य विधिः । अत्र स्मृत्यन्तरवशाद्धविष्यमन्नं ब्रह्मचर्यं स्त्रीशूद्रादिभिरसम्भाषणं च द्रष्टव्यम् ॥

**एतमेवाऽभ्यसेत्संवत्सरꣳ स कृच्छ्रसंवत्सरः॥८**

एतमेव विधिं संवत्सरं निरन्तरमभ्यसेत् । एष कृच्छ्रसंवत्सरो वेदितव्यः । यः पूर्वमुक्तः 'कृच्छ्रसंवत्सरं चरेत्'[2] इति ॥

**अथापरम् । बहून्यप्यपतनीयानि कृत्वा त्रिभिरनश्नत्पारायणैः कृतप्रायश्चित्तो भवति॥**

अथापरं प्रायश्चित्तमुच्यते । अनश्नतैव निरन्तरं त्रीणि पारायणानि कर्तव्यानि आदित आरभ्या समाप्तेः वेदस्याध्ययनं पारायणम् । बहून्यपि । अपिशब्दात्किं पुनरेको द्वौ वा ॥

**अनार्याꣳ शयने बिभ्रद्ददद्वृद्धिं कषायपः ।**
**अब्राह्मण इव वन्दित्वा तृणेष्वासीत पृष्ठतप्॥**

अनार्या शूद्रा । तां शयने बिभ्रत् उपगच्छन् । ददद्वृद्धिं वृद्ध्यर्थं द्रव्यं ददत् । वृद्ध्याजीव इत्यर्थः । सुराव्यतिरिक्तं मद्यं कषायः । तस्य पाता कषायपः । पश्चाब्राह्मण इव सर्वान् वन्दी भूत्वा स्तौति स सर्वोऽपि तृणेषूदयादारभ्यासीत, यावदादित्यः पृष्ठं तपति पश्चाद्भागं तपति । आदित्ये तपति तदानुगुण्याचरणात्स्वयमेव पृष्ठतबित्युच्यते । अभ्यासेऽभ्यासः, यावता शुद्धिं मन्यते ॥

---

[1] गौ. ध. २६-४.  [2] आप. ध. १-२५-६.

यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मण-
स्सेवमानः ।
चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपह-
न्ति पापम् ॥ ११ ॥

कृष्णो वर्णश्शूद्रः । तमाज्ञाकरो भूत्वा वृत्त्यर्थं सेवमानः । शिष्टं स्पष्टं, गतं च । अन्य आह — शूद्रां मैथुनेन सेवमान इति । अस्मिन् पक्षे ऋतावुपगमने अपत्योत्पत्ताविदं द्रष्टव्यम् । मनुः — वृषळीफेनपीतस्य निश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥[1] इति ।

इति सप्तविंशः खण्डः.

इत्यापस्तम्बधर्मसूत्रवृत्तावुज्ज्वलायां नवमः पटलः.

---

यथा कथा च परपरिग्रहमभिमन्यते स्तेनो ह भवतीति कौत्सहारीतौ तथा काण्वपुष्कर-सादी ॥ १ ॥

यथा कथा च आपद्यनापदि वा भूयांसमल्पं वा परपरिग्रहं परस्वं अभिमन्यते ममेदमस्त्विति बुद्धौ कुरुते, सर्वथा स्तेन एव भवतीति कौत्सादयो मन्यन्ते ॥

सन्त्यपवादाः परिग्रहेष्विति वार्ष्यायणिः ॥२॥

वार्ष्यायणिस्तु मन्यते केषुचित्परिग्रहेषु स्तेयस्यापवादास्सन्तीति ॥

तानेवोदाहरति—

---

[1] मनुस्मृ. ३–१९.

**शम्योषा युग्यघासो न स्वामिनः प्रतिषेध-यन्ति ॥ ३ ॥**

शमी बीजकोशी, तस्यामुप्यन्ते दह्यन्ते कालवशेन पच्यन्त इति शम्योषाः, कोशीधान्यानि मुद्गमाषचणकादीनि। युगं वहतीति युग्यः शकटवाही बलीवर्दः, तस्य घासो भक्ष-स्तृणादिः युग्यघासः । एते आदीयमानाः स्वामिनो न प्रतिषेधयन्ति स्वामिनः प्रतिषेधं न कारयन्ति, एतेष्वादी-यमानेषु न प्रतिषेद्धुमर्हन्तीत्यर्थः । स्वयं ग्रहणेऽपि न स्तेय-दोष इति यावत् । अत्र स्मृत्यन्तरे विशेषः—

चणकव्रीहिगोधूमयवानां मुद्गमाषयोः ।
अनिषिद्धैर्गृहीतव्यो मुष्टिरेकोऽध्वनि स्थितैः ॥

मनुस्तु—

द्विजोऽध्वगः क्षीणवृत्तिः द्वाविक्षू द्वे च मूलके ।
आददानः परक्षेत्रान्न दण्डं दातुमर्हति ।[1] इति ॥

**अतिव्यवहारो व्यृद्धो भवति ॥ ४ ॥**

शम्योषादिष्वपि अतिव्यवहारः अपहारः व्यृद्धो दुष्टो भवति, अतिमात्रापहारे स्तेयदोषो भवतीत्यर्थः ॥

**सर्वत्रानुमतिपूर्वमिति हारीतः ॥ ५ ॥**

सर्वेषु द्रव्येषु सर्वास्ववस्थासु स्वाम्यनुमतिपूर्वकमेव ग्रहण-मिति हारीत आचार्यो मन्यते ॥

**न पतितमाचार्यं ज्ञातिं वा दर्शनार्थो गच्छेत् ॥**

'न पतितैस्संव्यवहारो विद्यते'[2] इत्युक्तेऽपि पुनरुच्यते आ-चार्यादिषु विशेषं वक्ष्यामीति ॥

---

[1] मनु. ८-३४१.  [2] आप. ध. १-२१-५.

**न चास्माद्भोगानुपयुञ्जीत ॥ ७ ॥**

अस्मात्पतितादाचार्यात्, ज्ञातेर्वा पित्रादेर्वा भोगान् भोगसाधनानि दायप्राप्तान्यपि नोपयुञ्जीत न गृह्णीयात् ॥

**यदृच्छासन्निपात उपसङ्गृह्य तूष्णीं व्यतिव्रजेत् ॥**

यदि पतितैराचार्यादिभिः यदृच्छया सङ्गतिस्स्यात्, तदाऽविधिनोपसङ्गृह्य तूष्णीं तैस्सह किञ्चिदप्यसम्भाष्य व्यतिव्रजेत्, न क्षणमपि सह तिष्ठेत् ॥

**माता पुत्रत्वस्य भूयांꣳसि कर्माण्यारभते । तस्याꣳ शुश्रूषा नित्या पतितायामपि ॥९**

पुत्रत्वस्य। स्वार्थिकस्त्वः, यथा 'देहत्वमेवान्यत्' इति। पुत्रस्य कृते माता भूयांसि दृष्टार्थानि गर्भधारणाऽशुचिनिर्हरणस्तन्यदानप्रदक्षिणनमस्कारादीनि कर्माणि करोति, तस्मात्तस्यां पतितायामपि शुश्रूषा अभ्यङ्गस्नापनादिका नित्यमेव कर्तव्या ॥

**न तु धर्मसन्निवाप*स्स्यात् ॥ १० ॥**

एकस्मिन् धर्मे सहान्वयः धर्मसन्निवापः। स पतितया मात्रा सह न कर्तव्यः। नामसुब्रह्मण्यायां मातुर्नामग्रहणं, वरुणप्रघासेषु 'यावन्तो यजमानस्याऽमात्याः सस्त्रीकाः तावन्त्येकातिरिक्तानि,' [1]इत्येवमादिकमुदाहरणम्। किम्पुनरेवमादिषु मातुरन्वयश्शुश्रूषा? ओमित्याह—अन्विता हि सा सम्मता मन्यते; निरस्ता तु विमता, वैश्वदेवार्थे तु पाके सा न भोजयितव्या। मृतायास्तु तस्यास्संस्कारादिकाः क्रियाः कर्तव्याः, नेति विप्रतिपन्नाः ॥

---

*ग-सन्निपात.

[1]आप. श्रौ. ८-५-४१.

**अधर्माहृतान्भोगाननुज्ञाय न वयं चाधर्मश्चेत्यभिव्याहृत्याधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्नक्षीराक्षारलवणं भुञ्जानो द्वादशवर्षाणि नागारं प्रविशेत् ॥**

ब्राह्मणस्वर्णहरणम् ।

चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ॥

पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति ॥[1] इत्येवमादिकमुदाहरणम् । ये अधर्माहृता भोगास्ताननुज्ञाय परित्यज्य 'न वयं चाधर्मश्च' इति प्रैषं ब्रूयात् । तस्यार्थः — वयं चाधर्मश्च सह न वर्तामह इति । अधोनाभीत्यादि गतम्[2] । नात्रार्धशाणीपक्षः भिक्षाचर्यं वा ॥

**ततस्सिद्धिः ॥ १२ ॥**

एतच्च द्वादशवार्षिकं, तस्यान्ते सिद्धिश्शुद्धिर्भवति ॥

**अथ सम्प्रयोगस्स्यादार्यैः ॥ १३ ॥**

प्रायश्चित्तोपदेशात्सिद्ध्युपदेशाच्च सिद्धेः पुनर्वचनं 'ज्ञानात्साम्यं तु गच्छति'[1] इत्यस्यापवादार्थम् ॥

**एतदेवान्येषामपि पतनीयानाम् ॥ १४ ॥**

उक्तव्यतिरिक्तानि यानि पतनीयानि पूर्वमुक्तानि तेषु यत्राहत्य प्रायश्चित्तमनुक्तं तेषामप्यनन्तरोक्तमेव प्रायश्चित्तं वेदितव्यम् । उक्तविषये विकल्प इत्यन्ये । तत्र ज्ञानाज्ञानकृतो विकल्पः ॥

[1] मनु, ११-१७६. [2] आप. ध. १-२४-११.

गुरुतल्पगामी तु सुषिराꣳ सूर्मिं प्रविश्योभयत आदीप्याभिदहेदात्मानम् ॥ १५ ॥

यस्तु गुरुतल्पगामी सोन्तःप्रवेशयोग्यां सुषिरां सूर्मिं कृत्वा प्रविशेत् । प्रविश्योभयोः पार्श्वयोः वह्निं दीपयेत् । आदीप्यात्मानमभिदहेत् । 'ज्वलितां वा सूर्मिं प्रविश्य समाप्नुयात्'[1] इत्यत्रैव कियानपि भेदः । अनन्तरस्य वैकल्पिकस्य निवृत्त्यर्थं वचनम् ॥

मिथ्यैतदिति हारीतः ॥ १६ ॥

हारीतस्तु ऋषिर्मन्यते एतदनन्तरोक्तं मरणान्तिकं प्रायश्चित्तं मिथ्या न कर्तव्यमिति ॥

कुत इत्याह –

यो ह्यात्मानं परं वाऽभिमन्यतेऽभिशस्त एव स भवति ॥ १७ ॥

हिशब्दो हेतौ । यस्माद्य आत्मानं परं वा अभिमन्यते मारयति सोऽभिशस्त एव भवति ब्रह्महैव भवति । न च पतनीयापनोदं चिकीर्षुरन्यत्पतनीयं कर्तुमर्हतीति*हेत्वभिधानादभिशस्तवचनाच्च अन्येषामपि मरणान्तिकानां ब्राह्मणविषये निवृत्तिः॥

किं तर्हि तस्य प्रायश्चित्तमित्याह –

एतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत् । नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते । कल्मषं तु निर्हण्यते ॥ १८ ॥

---

[1] आप. ध. १–२५–२.

*क. ग. इ——न च महापातकस्य ब्रह्महत्याप्रायश्चित्तं भवितुमर्हतीति.

'अधोनाभ्युपरिजान्वाच्छाद्य' इत्येतदादि यदनन्तरमुक्तं; एतेनैव विधिना । शिष्टं गतम्[1] ॥

**दारव्यतिक्रमी खराजिनं बहिर्लोम परिधाय दारव्यतिक्रमिणे भिक्षामिति सप्तागाराणि चरेत् । सा वृत्तिष्षण्मासान् ॥ १९ ॥**

यस्त्वन्तरेणैव निमित्तं कौमारान् दारान् परित्यजति स दारव्यतिक्रमी । खरस्य गार्दभस्याजिनं बहिर्लोम परिधाय वसित्वा 'दारव्यतिक्रमिणे भिक्षां दत्त' इति सप्तागाराणि भिक्षां चरेत् । 'कौमारदारव्यतिक्रमिणे भिक्षां दत्त' इति वासिष्ठे । सा वृत्तिष्षण्मासान्, ततस्सिद्धिः ॥

**स्त्रियास्तु भर्तृव्यतिक्रमे कृच्छ्रद्वादशरात्राभ्यासस्तावन्तं कालम् ॥ २० ॥**

भर्तृव्यतिक्रम इति छान्दसो रेफलोपः । व्यतिक्रमः परित्यागः । या तु स्त्री भर्तारं परित्यजति अन्तरेण निमित्तं, तस्याः कृच्छ्रद्वादशरात्राभ्यासः प्रायश्चित्तं तावन्तं कालं षण्मासानिति॥

**अथ भ्रूणहा श्वाजिनं खराजिनं वा बहिर्लोम परिधाय पुरुषशिरः प्रतीपानार्थमादाय ॥**

इत्यष्टाविंशः खण्डः.

---

**खट्वाङ्गं दण्डार्थे कर्मनामधेयं प्रब्रुवाणश्चङ्क्रम्येत को भ्रूणघ्ने भिक्षामिति । ग्रामे प्राण-**

[1] आप. ध. १–२४–२४, २५, २६.

**वृत्तिं प्रतिलभ्य शून्यागारं वृक्षमूलं वाभ्युपाश्रयेन्न हि म आर्यैस्सह सम्प्रयोगो विद्यते । एतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत् । नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते । कल्मषं तु निर्हण्यते ॥ १ ॥**

षडङ्गस्य वेदस्याध्येता, प्रयोगशास्त्रस्य सव्याख्यस्यार्थवित्, कर्मणामनुष्ठाताऽनुष्ठापयिता च ब्राह्मणो भ्रूणः । तथा च बोधायनः—'वेदानां किं चिदधीत्य ब्राह्मणः, एकां शाखामधीत्य श्रोत्रियः, अङ्गाध्याय्यनूचानः, कल्पाध्याय ऋषिकल्पः, सूत्रप्रवचनाध्यायी भ्रूणः'[1] इति । तं यो हत्वा भ्रूणहा । स शुनः खरस्य वाऽजिनं बहिर्लोम परिधाय पुरुषस्य यस्य कस्य चिन्मृतस्य शिरः प्रतीपानार्थं, प्रतिर्धात्वर्थवाची । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति बाहुलको दीर्घः । पानमेव प्रतीपानं, पानग्रहणमुपलक्षणं, भोजनमपि तत्रैव । खट्वाङ्गं दण्डार्थे । खट्वाया अङ्गं खट्वाङ्गं, ईषा, तद्दण्डार्थे दण्डकृत्ये आदाय 'भ्रूणहास्मि' इत्येवं कर्मनिबन्धनमात्मनो नामधेयं प्रब्रुवाणश्चङ्क्रम्येत इतस्ततश्चरेत् । कापालिकतन्त्रप्रसिद्धस्य वा खट्वाङ्गस्य ग्रहणम् । भिक्षाचरणकालेपि 'को भ्रूणघ्ने भिक्षां ददातु' इति चरेत्, चरित्वा ग्रामे प्राणवृत्तिं प्राणयात्रामात्रं प्रतिलभ्य शून्यागारं वृक्षमूलं वा निवासार्थमभ्युपश्रयेत् । न हि मे आर्यैस्सह सम्प्रयोगो विद्यते इत्येवं मन्यमानः । कियन्तं कालं चरितव्यमित्याह—एतेनैव विधिनेत्यादि । गतम् । 'श्रोत्रियं वा कर्मसमाप्तम्'[2] इत्यत्र यो ग्रन्थ-

[1] बौ. ध. १४ पत्रे. [2] आप. ध. १–२४–२४.

धार्यर्थजश्च न भवति, अनुज्ञापयिता च न भवति, तस्य ग्रह-णम् ॥

**यः प्रमत्तो हन्ति प्राप्तं दोषफलम् ॥ २ ॥**

'क्षत्रियं हत्वा'[1] इत्येवमादिके अनुक्रान्ते विषये यः प्रमत्तो हन्ति प्रमादेनाऽबुद्धिपूर्वकं हन्ति तस्यापि दोषफलं प्राप्तमेव, न तु प्रमादकृतमिति दोषाभावः ॥

**सह सङ्कल्पेन भूयः ॥ ३ ॥**

सङ्कल्पेन सह वधे कृते भूयः प्रभूततरं भवति । तेन प्रमाद-कृते लघु प्रायश्चित्तं, बुद्धिपूर्वे तु गुर्विति । यत्पुनः पूर्वमुक्तं 'दोषवच्च कर्माभिसन्धिपूर्वं कृत्वाऽनभिसन्धिपूर्वं वा'[2] इति तत्प्रायश्चित्ते विशेषाभावादिदमुक्तम् ॥

**एवमन्येष्वपि दोषवत्सु कर्मसु ॥ ४ ॥**

अन्येष्वपि हननव्यतिरिक्तेषु दोषवत्सु कर्मसु एवमेव द्रष्ट-व्यम् । अबुद्धिपूर्वेऽल्पदोषः, बुद्धिपूर्वे महानिति ॥

**तथा पुण्यक्रियासु ॥ ५ ॥**

पुण्यक्रियास्वपि एष एव न्यायः, अबुद्धिपूर्वे अल्पं फलं, बुद्धिपूर्वे महदिति । तद्यथा—ब्राह्मणस्वान्यपहृत्य चोरेषु धावत्सु यदृच्छया कश्चिच्छूर आगतस्तान् हन्यात्, स्वयमेव वा शूरं दृष्ट्वा चोरा अपहृतानि द्रव्याण्युत्सृज्य पलायेरन् तदा शूरस्याल्पं पुण्यफलम् । यदा तु बुद्धिपूर्वं स्वयमेव चोरेभ्यः प्रत्याहृत्य स्वानि स्वामिभ्यो ददाति, तदा महदिति । एवं स्वभार्याबुद्ध्या परदार-गमने अल्पं, अन्यत्र महदिति ॥

---

[1] आप. ध. १-२४-१०.　　[2] आप. ध. १-२६-७.

**परीक्षार्थोऽपि ब्राह्मण आयुधं नाददीत ॥ ६ ॥**

गुणदोषज्ञानं परीक्षा, तया अर्थः प्रयोजनं यस्य। एवम्भूतोऽपि ब्राह्मण आयुधं न गृह्णीयात् । किम्पुनर्हिंसार्थं इत्यपिशब्दस्यार्थः ॥

अस्य प्रतिप्रसवः—

**यो हिꣳसार्थमभिक्रान्तꣳ हन्ति मन्युरेव मन्युꣳ स्पृशति न तस्मिन् दोष इति पुराणे ॥७॥**

यस्तु हिंसार्थं मारणार्थं अभिक्रान्तमभिपतितं हन्ति न तस्मिन् दोषो विद्यते इति पुराणे श्रुतम् । दोषाभावे हेतुः—यस्मान्मन्युरेव मन्युं स्पृशति न पुरुषः पुरुषम्। अत्र वसिष्ठबोधायनौ—

स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम् ।
न तेन भ्रूणहा स स्यात् मन्युस्तं मन्युमृच्छति ॥[1] इति ॥

मनुस्तु—

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।
द्विजातीनां च वर्णानां विप्लवे कालकारिते ॥
आत्मनश्च परित्राणे दक्षिणानां च सङ्गरे ।
स्त्रीविप्राभ्यवपत्तौ च घ्नन् धर्मेण न दुष्यति ॥[2]

गौतमः—

'प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत'[3] इति ।

---

[1] व. ध. ३–१८. बो. १–१०–१३. [2] मनु. ८–३४८, ३४९.
[3] गौ. ध. ७–२५.

वसिष्ठः—

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।
क्षेत्रदारहरौ चैव षडेते आततायिनः॥
आततायिनमायान्तमपि वेदान्तपारगम्।
जिघांसन्तं जिघांसीयात् न तेन भ्रूणहा भवेत्॥[1] इति॥

पतितैरकृतप्रायश्चित्तैरुत्पादितानां पुत्राणामपि पातित्यमस्तीति प्रतिपादयितुं पूर्वपक्षमाह—

**अथाभिशस्तास्समवसाय चरेयुर्धार्म्यमिति साꣳशित्येतरेतरयाजका इतरेतराध्यापका मिथो विवाहमानाः॥ ८॥**

अथशब्दोर्थान्तरप्रस्तावं सूचयति। अभिशस्ताः पतिताः समवसाय, अवसानं गृहं, समित्येकीभावे, ग्रामाद्बहिरेकस्मिन् प्रदेशे गृहाणि कृत्वा चरेयुः। धार्म्यं धर्म्यं वक्ष्यमाणं वृत्तमिति। सांशित्य संशितां तीक्ष्णां बुद्धिं कृत्वा निश्चित्येत्यर्थः। इतरेतरं याजयन्तः, इतरेतरमध्यापयन्तः परस्परं विवाहसम्बन्धं कुर्वन्तश्चरेयुः वर्तेरन् इति॥

**पुत्रान्संनिष्पाद्य ब्रूयुर्विप्रव्रजतास्मदेवꣳ ह्यस्मत्स्वार्यास्संप्रत्यपत्स्यतेति॥ ९॥**

अथ ते पुत्रान् संनिष्पाद्य ब्रूयुः, हे पुत्राः अस्मदस्मत्तः विप्रव्रजत विविधं प्रकर्षेण स्नेहमुत्सृज्यार्यसमीपं गच्छत, एवं हि अस्मत्सु अस्मासु आर्यादिशब्दाः संप्रत्यपत्स्यत। 'आशंसा-

---

[1] व. ध. ३–१६, १७.

यां भूतवच्च' इति भविष्यति लुङ्, सकारात्परो यकारोपपाठश्छान्दसो वा । संप्रतिपत्तिं करिष्यन्ति आर्याणामप्येतदभिप्रेतं भविष्यति, यस्मादस्माभिरेव पतनीयं कृतं कर्मानुष्ठितं, न भवद्भिः । न च पतितेनोत्पादितस्य पातित्यम्, अन्यत्वात् ॥

एतदेवोपपादयति—

**अथापि न सेन्द्रियः पतति ॥१०॥**

न हि पतितो भवन् सहेन्द्रियेण पतति, पुरुष एव, नेन्द्रियं शुक्रमिति । अथापिशब्दौ अपिचेत्यस्यार्थे ॥

कथं न सेन्द्रियः पततीत्याह—

**तदेतेन वेदितव्यम् । अङ्गहीनोपि साङ्गं जनयति ॥११॥**

तदनन्तरोक्तमर्थरूपं एतेन वक्ष्यमाणेन निदर्शनेन वेदितव्यम् । चक्षुराद्यङ्गहीनोपि साङ्गं चक्षुरादिमन्तं जनयति । एवमधिकारविकलस्साधिकारं जनयति. स्त्रिया अपि कारणत्वात्, तस्याश्च दोषाभावात् ॥

दूषयति—

**मिथ्यैतदिति हारीतः ॥१२॥**

एतदनन्तरोक्तमर्थरूपं मिथ्या न युक्तमिति हारीतः मन्यते ॥

कुत इत्याह—

**दधिधानीसधर्मा स्त्री भवति ॥१३॥**

दधि धीयते यस्यां सा दधिधानी स्थाली, तया सधर्मा सदृशी स्त्री भवति ॥

ततः किम् ?—

**यो हि दधिधान्यामप्रयतं पय आतच्य मन्थति न तेन धर्मकृत्यं क्रियते । एवमशुचि शुक्लं यन्निर्वर्तते न तेन सह सम्प्रयोगो विद्यते ॥१४॥**

यो हि दधिधान्यां स्थाल्यां अप्रयतं श्वाद्युपहतं पय आतच्य तक्राद्यातञ्चनेन संस्कृत्य मन्थति, न तेन तदुत्पन्नेन घृतादिना धर्मकृत्यं यागादिकं क्रियते । एवं पतितसम्बन्धेन अशुचि शुक्लं स्त्रियां निषिक्तं शोणितेनाक्तं यन्निर्वर्तते येन रूपेण निष्पाद्यते, न तेन सह संप्रयोगो विद्यते शिष्टानाम् । अत्र 'अशुचि शुक्लम्' इत्येतत् 'अथापि न सेन्द्रियः पतति' इत्यस्य दूषणम् । न हि वाचनिकेर्थे युक्तयः क्रमन्ते । तथा च समानायामप्युत्पत्तौ पुत्र एव पतति न दुहिता । यथाह वसिष्ठः—'पतितेनोत्पन्नः पतितो भवति अन्यत्र स्त्रियाः सा हि परगामिनी तामरिक्थामुपेयात्' इति ॥

**अभीचारानुव्याहारावशुचिकरावपतनीयौ॥१५**

अभिचार एवाभीचारः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः । अभीचारश्श्येनयागादिः । अनुव्याहारश्शापः । तौ ब्राह्मणविषयेपि क्रियमाणौ अशुचिकरावेव । न तु पतनीयौ ॥

**पतनीयाविति हारीतः ॥ १६ ॥**

हारीतस्तु तावपि पतनीयाविति मन्यते ॥

**पतनीयवृत्तिस्त्वशुचिकराणां द्वादश मासान्द्वादशार्धमासान्द्वादश द्वादशाहान् द्वादश**

**सप्ताहान्द्वादश त्र्यहान्द्वादश द्व्यहान्द्वादशाहः सप्ताहं त्र्यहं द्व्यहमेकाहम् ॥ १७ ॥**

अशुचिकराणामपि कर्मणां येषामाहत्य प्रायश्चित्तं नोक्तं, तेषामपि पतनीयेषु कर्मसु या वृत्तिः प्रायश्चित्तं सैव प्रायश्चित्तिः। कियन्तं कालम्? द्वादशमासाद्येकाहान्तम् ॥

किमविशेषेण सर्वेष्वेवाशुचिकरेषु अयं कालविकल्पः? नेत्याह—

**इत्यशुचिकरनिर्वेषो यथा कर्माभ्यासः ॥१८॥**

इत्येषोऽशुचिकरनिर्वेषो यथा कर्माभ्यासस्तथा वेदितव्यः। बुद्धिपूर्वे सानुबन्धेऽभ्यासे च भूयांसं कालं, विपरीते विपर्यय इति ॥

इत्यापस्तम्ब धर्मसूत्रवृत्तौ उज्ज्वलायां
दशमः पटलः.

---

'न समावृत्ता वपेरन्'[1] 'स्नानकस्य काले'[2] इत्यादिषु प्रसक्तस्य स्नानस्य कालमाह—

**विद्यया स्नातीत्येके ॥ १ ॥**

वेदविद्या विद्या। तया सम्पन्नः स्नानं कुर्यात्, इत्येके मन्यन्ते। मनुरप्याह—

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥[3] इति ॥

---

[1]आप. ध. १-१०-७. [2]आप. ध. १-८-७. [3]मनु. ३-२.

**तथा व्रतेनाष्टाचत्वारिंशत्परीमाणेन ॥ २ ॥**

परिमाणमेव परीमाणं, छान्दसो दीर्घः । अष्टाचत्वारिंशद्ग्रहणं 'पादूनम् । अर्धोनम्'[1] इत्यादेरपि पूर्वोक्तस्योपलक्षणम् । अष्टाचत्वारिंशदादिपरिमाणेन व्रतेन* वा सम्पन्नः स्नायात्, असम्पन्नोपि विद्यया ॥

**विद्या व्रतेन चेत्येके ॥ ३ ॥**

विद्येति तृतीयैकवचनस्य लोपः 'सुपां सुलुक्' इत्यादिना । विद्यया व्रतेन चोभाभ्यां संपन्नस्स्नायादित्येके मन्यन्ते । एवं च 'वेदमधीत्य स्नास्यन्'[2] इत्यत्र वेदमधीत्येत्येतदुपलक्षणम् । अत्र याज्ञवल्क्यः—

वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ।
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्[3] ॥ इति ॥

**तेषु सर्वेषु स्नातकवद्वृत्तिः ॥ ४ ॥**

---

*घ–'अथ ब्रह्मचर्यविधिः' इत्यारभ्य प्रपञ्चितेन समिदाधानभिक्षाचरणगन्धादिवर्जनादिरूपेण । अस्ति च तेषु व्रतशब्दः । 'यथा व्रतेषु समर्थस्स्याद्यानि वक्ष्यामः' इति च । इह तु समुदायाभिप्रायमेकवचनम् । तेन वा व्रतेन स्नायात् । असम्पन्नोपि विद्यया । 'चत्वारि वेदव्रतानि' इत्येषां तु ग्रहणं अत्र नाशङ्कनीयम् । यथोक्तं विश्वरूपे । इत्यधिकः पाठः ॥

क. घ. झ–अत्र व्रतशब्देन अग्नीन्धनभैक्षचर्यादयो ब्रह्मचारिधर्मा उच्यन्ते । तेषु हि धर्मेषु कालपरिमाणस्य श्रुतत्वात् पारं नीत्वेति युज्यते । दृश्यते च तेषु व्रतशब्दः 'यथा व्रतेषु समर्थस्स्याद्यानि वक्ष्यामः' इति । न तु सावित्र्यादीनि वेदव्रतान्युच्यन्ते । तेषां तत्तत्प्रदेशाध्ययनशेषतया तदभावे अभावात्, 'वेदं व्रतानि वा' इति विकल्पानुपपत्तेः । अतः कालविशेषावच्छिन्नानि व्रतानि । वेदं उभयं वा पारं नीत्वेत्यर्थः । इति चाधिकः पाठः ॥

[1]आप. ध. १. २. १३–१४.  [2]आप. गृ. १२–१.  [3]या. १–५२.

विद्यास्नातको, व्रतस्नातक, उभयस्नातक, इति त्रयस्स्नातका उक्ताः । तेषु सर्वेषु स्नातकवत्, 'तदर्हति' इति वतिः । स्नातकार्हा वृत्तिः पूजा, 'यत्रास्मा अपचितिम्'[1] इत्यादिका कार्या । न तु व्रतस्नातके न्यूना, नाप्युभयस्नातकेऽधिकेति ॥

यद्यप्येवं, तथापि पूजयितुः फलविशेषोऽस्तीत्याह—

**समाधिविशेषाच्छ्रुतिविशेषाच्च पूजायां फलविशेषः ॥ ५ ॥**

कर्तव्येषु कर्मसु अवधानं समाधिः । श्रुतिः श्रुतम् ॥

**अथ स्नातकव्रतानि ॥ ६ ॥**

इत उत्तरं स्नातकव्रतान्यधिकृतानीति वेदितव्यानि । यद्यपि वक्ष्यमाणेषु कानिचित्साधारणान्यपि भवन्ति, तथापि भूम्ना स्नातकव्रतान्यधिक्रियन्ते ॥

**पूर्वेण ग्रामान्निष्क्रमणप्रवेशनानि शीलयेदुत्तरेण वा ॥ ७ ॥**

यदा ग्रामान्निष्क्रामति, ग्रामं वा प्रविशति तदा पूर्वेण द्वारेण उत्तरेण वा कुर्यात्, न द्वारान्तरेण । शीलयेदिति वचनात् यदृच्छया द्वारान्तरेण निष्क्रमणप्रवेशनयोरपि न प्रायश्चित्तम् ॥

**सन्ध्योश्च बहिर्ग्रामादासनं वाग्यतश्च ॥ ८ ॥**

अहोरात्रयोस्सन्धानं सन्धिः, तौ च द्वौ सायं प्रातश्च । 'सज्योतिष्याज्योतिषो दर्शनात् । उभे सन्ध्ये'[2] इति गौतमः । तयोस्सन्ध्योः ग्रामाद्बहिरासीत, वाग्यतश्च भवेत् । मनुरप्याह—

---

[1] आप. गृ. १३–२.

[2] गौ. ध. २–११.

पूर्वां सन्ध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् ।
पश्चिमां तु समासीत सम्यगार्क्षविभावनात्[1] ॥ इति ।

'तिष्ठेत्पूर्वामासीतोत्तराम्'[2] इति गौतमः । एते च स्मृती ब्रह्मचारिविषये । स्नातके आसनस्य वाङ्नियमस्य चात्र विधानात् । अन्ये तु—आसनग्रहणं स्थानस्योपलक्षणं, वाग्यमश्च लौकिक्या वाचो निवृत्तिः, न सावित्रीजपस्येति वर्णयन्ति ॥

आहिताग्निविषयस्यापवादः—

## विप्रतिषेधे श्रुतिलक्षणं बलीयः ॥९॥

विरोधो विप्रतिषेधः । अग्निहोत्रिणो बहिरासनमग्निहोत्रहोमश्च विरुध्यते, तथा च श्रूयते—'समुद्रो वा एष यदहोरात्रस्तस्यैते गाधे तीर्थे यत्सन्धी तस्मात्सन्धौ होतव्यम्' इति । तत्र श्रुतिलक्षणमग्निहोत्रमेव कर्तव्यं, न स्मार्तं बहिरासनम् । तस्य कल्प्यमूलत्वादितरस्य क्लृप्तमूलत्वादिति । जैमिनिरप्याह—'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्'[3] इति ॥

## सर्वान्रागान्वाससि वर्जयेत् ॥१०॥

कुसुम्भादयस्सर्वे रागा वाससि वर्जनीयाः । न केनचिद्रक्तं वासो बिभृयात् ॥

## कृष्णं च स्वाभाविकम् ॥११॥

यत्स्वभावतः कृष्णं कम्बलादि, तदपि न वसीत ॥

## अनूद्भासि वासो वसीत ॥ १२ ॥

उद्भासनशीलमुद्भासि उल्बणम्, ततोन्यदनूद्भासि । छान्दसो दीर्घः । एवम्भूतं वासो वसीत आच्छादयेत् ॥

---

[1] म. स्मृ. २–१०१. [2] गौ. ध. २-११. [3] मी. सू. १-३-३.

**अप्रतिकृष्टं च शक्तिविषये ॥ १३ ॥**

प्रतिकृष्टं निकृष्टं जीर्णं मलवत् स्थूलं च, तद्विपरीतमप्रतिकृष्टं, तादृशं वासो वसीत शक्तौ सत्याम् ॥

**दिवा च शिरसः प्रावरणं वर्जयेन्मूत्रपुरीषयोः कर्म परिहाप्य ॥ १४ ॥**

चकारः पूर्वापेक्षया समुच्चयार्थः । दिवा च शिरसः प्रावरणं पटादिना न कुर्यात् । किमविशेषेण? न, मूत्रपुरीषयोः कर्म क्रियां परिहाप्य वर्जयित्वा ॥

**शिरस्तु प्रावृत्य मूत्रपुरीषे कुर्याद्भूम्यां किञ्चिदन्तर्धाय ॥ १५ ॥**

दिवा रात्रौ च मूत्रपुरीषे कुर्वन् शिरः प्रावृत्य कुर्याद्भूम्यां किञ्चित्तृणादिकमन्तर्धाय, न साक्षाद्भूम्यामेव । इह कामचारे प्राप्ते दिवा च शिरसः प्रावरणं वर्जयेदित्युक्तं, तस्य पर्युदासः कृतः 'मूत्रपुरीषयोः कर्म परिहाप्य' इति । ततश्च मूत्रपुरीषकाले स एव कामचारस्स्थितः । अत आरभ्यते—शिरस्तु प्रावृत्येति । एवं तर्हि इदमेवास्तु, न पूर्वः पर्युदासः । सोऽप्यवश्यं कर्तव्यः; अन्यथा शिरस्तु प्रावृत्येत्यस्य रात्रौ चरितार्थत्वाद्दिवा प्रतिषेध एव स्यात् । गौतमस्तु रात्रौ सदैव प्रावरणमाह—'न प्रावृत्य शिरोऽहनि पर्यटेत् । प्रावृत्य तु रात्रौ । मूत्रोच्चारे च'[1] इति ॥

**छायायां मूत्रपुरीषयोः कर्म वर्जयेत् ॥ १६ ॥**

---

[1] गौ. ध. ९–३५...३७.

'न चोपजीव्यासु' इति स्मृत्यन्तरे दर्शनात् यस्यां पथिकादयो विश्राम्यन्ति सा गृह्यते, तेन छत्रच्छायादेरप्रतिषेधः, मेघादिच्छायायाश्चाप्रतिषेधः, अवर्जनीयत्वात् ॥

स्वां तु छायामवमेहेत् ॥ १७ ॥

छान्दसस्तुगभावः। द्वितीयाश्रुतेः प्रतिशब्दोऽध्याहार्यः। अवमेहनं मूत्रीकर्म अनुपजीव्यत्वान्नायं पूर्वस्य प्रतिषेधस्य विषयः इति प्रतिप्रसवोऽयं न भवति, तेन सति सम्भवे स्वामेव छायां प्रति अवमेढव्यम् ॥

न सोपानन्मूत्रपुरीषे कुर्यात्कृष्टे पथ्यप्सु च।
तथा ष्ठीवन*मैथुनयोः कर्माप्सु वर्जयेत्।
अग्निमादित्यमपो ब्राह्मणं गा देवताश्चाभि-
मुखो मूत्रपुरीषयोः कर्म वर्जयेत् ॥ १८ ॥

चत्वारि स्पष्टानि। ष्ठीवनं आस्यश्लेष्मादीनामुत्सर्गः। देवताः देवताप्रतिमाः ॥

अश्मानं लोष्टमार्द्रानोषधिवनस्पतीनूर्ध्वाना-
च्छिद्य मूत्रपुरीषयोश्शुन्धने वर्जयेत् ॥ १९ ॥

फलपाकावसाना ओषधयः। पुष्पैर्विना ये फलन्ति ते वनस्पतयः। आर्द्रानिति वचनाच्छुष्कैर्न दोषः। ऊर्ध्वानिति वचनात् वातादिनिमित्तेन भग्नेषु न दोषः। एतैरश्मादिभिर्मूत्रपुरीषयोश्शोधनं न कुर्यात् ॥

---

* ष्ठेवन इति पा, व्याख्यानेपि.

अग्निमपो ब्राह्मणं गा देवता द्वारं प्रतिवातं च शक्तिविषये नाभिप्रसारयीत ॥ २० ॥

अग्न्यादीन् प्रति पादौ न प्रसारयेत् ॥

अथाप्युदाहरन्ति ॥ २१ ॥

इति त्रिंशः खण्डः.

---

प्राङ्मुखोन्नानि भुञ्जीत उच्चरेद्दक्षिणामुखः ।
उदङ्मुखो मूत्रं कुर्यात्प्रत्यक्पादावनेजनमिति॥ १ ॥

उच्चारः पुरीषकर्म । पादावनेजनं पादप्रक्षाळनम् । भोजनादिषु चतस्रो दिशो नियम्यन्ते । मनुरप्याह—

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः[1] ॥ इति ॥

याज्ञवल्क्योपि—

दिवा सन्ध्यासु कण्ठस्थब्रह्मसूत्री उदङ्मुखः ।
कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः[2] ॥ इति ॥

आराच्चावसथान्मूत्रपुरीषे कुर्याद्दक्षिणां दिशं दक्षिणापरां वा ॥ २ ॥

आवसथो गृहं, तस्य दूरतो मूत्रपुरीषे कुर्यात् दक्षिणां दिशं, द्वितीयानिर्देशादभिनिष्क्रम्येति गम्यते । दक्षिणापरा नैरृती ॥

---

[1] मनु. २–५२.

[2] याज्ञ. १–१६.

**अस्तमिते च बहिर्ग्रामादावसथाद्वा मूत्रपुरीषयोः कर्म वर्जयेत् ॥ ३ ॥**

अस्तमिते आदित्ये बहिर्ग्रामान्मूत्रपुरीषे न कुर्यात्, अथान्तर्ग्रामेपि गृहस्य दूरतो न कुर्यात् । दृष्टार्थोयं प्रतिषेधः, चोरव्याघ्रादिशङ्कया । निर्भये देशे नास्ति दोषः ॥

**देवताभिधानं चाप्रयतः ॥ ४ ॥**

अप्रयतस्सन् देवतानाममग्न्यादीनामभिधानं वर्जयेत् । अपिधानमित्यपपाठः, एष एवार्थः ॥

**परुषं चोभयोर्देवतानाꣳ राज्ञश्च ॥ ५ ॥**

देवतानां राज्ञश्च उभयोः, राश्यपेक्षं द्विवचनम् । परुषं निन्दां वर्जयेत् ॥

**ब्राह्मणस्य गोरिति पदोपस्पर्शनं वर्जयेत् ॥ ६ ॥**

ब्राह्मणं गां च पादेन नोपस्पृशेत् । इतिशब्दः प्रकारे, तेन विद्यावयोवृद्धानामब्राह्मणानामपि वर्जनम् ॥

**हस्तेन चाकारणात् ॥ ७ ॥**

कारणमभ्यङ्गकण्डूयनादि । तेन विना हस्तेनाप्युपस्पर्शनं वर्जयेत् पूर्वोक्तानाम् ॥

**गोर्दक्षिणानां कुमार्याश्च परीवादान्वर्जयेत् ॥ ८ ॥**

गोः अदक्षिणाया अपि, दक्षिणानां गवामपि हिरण्यादीनां कुमार्याः कन्यकायाश्च दोषान् सतोपि न कथयेत् । अध्यात्मप्रकरणे योगाङ्गतया परीवादः प्रतिषिद्धः, अनन्तरं च वक्ष्यति

'क्रोधादींश्च भूतदाहीयान् दोषान् वर्जयेत्'[1] इति। इदं तु वचनं गवादिषु प्रायश्चित्तातिरेकार्थम्॥

**स्पृहतीं च गां नाचक्षीत॥ ९॥**

स्पृहतीं सस्यधान्यादिकं भक्षयन्तीं गां स्वामिने न ब्रूयात्॥

**सꣳसृष्टां च वत्सेनानिमित्ते॥ १०॥**

या गौर्वत्सेन संसृज्यते, तामपि न ब्रूयात्। अनिमित्ते इति वचनात् 'यस्य हविषे वत्सा अपाकृता धयेयुः'[2] इत्यादिके निमित्ते सति वक्तुर्नास्ति दोषः॥

**नाधेनुमधेनुरिति ब्रूयात्। धेनुभव्येत्येव ब्रूयात्॥ ११॥**

या च गौर्धेनुः पयस्विनी न भवति, तामप्यधेनुरिति न ब्रूयात्। किं तर्हि? धेनुभव्येत्येव ब्रूयात्, भविष्यन्ती धेनुः धेनुभव्या। 'धेनोर्भव्यायामुम्वक्तव्यम्' इति मुम्न भवति, ल्यबन्तत्वेनाव्ययत्वात्। वक्तव्यत्वे च सति शब्दनियमोयम्, न पुनरधेनुदर्शन एवं वक्तव्यम्॥

**न भद्रं भद्रमिति ब्रूयात्। पुण्यं प्रशास्तमित्येव ब्रूयात्॥ १२॥**

यद्भद्रं तद्भद्रमिति न ब्रूयात्, किं तु पुण्यं प्रशास्तमित्यन्यतरेण शब्देन ब्रूयात्। प्रशास्तं प्रशस्तं, छान्दसो दीर्घः॥

**वत्सतन्तीं च नोपरि गच्छेत्॥ १३॥**

वत्सानां बन्धनरज्जुर्वत्सतन्ती, तस्या उपरि न गच्छेत् तां न लङ्घयेत्। वत्सग्रहणं गोजातेरुपलक्षणम्॥

---

[1] ३१-२३. [2] आप. श्रौ. ९-१-२३.

**प्रेङ्खावन्तरेण च नातीयात् ॥ १४ ॥**

प्रेङ्खौ दोलास्तम्भौ, तोरणस्तम्भावित्यन्ये। तावन्तरेण नातीयात् तयोर्मध्ये न गच्छेत् ॥

**नासौ मे सपत्न इति ब्रूयात् । यद्यसौ मे सपत्न इति ब्रूयाद्द्विषन्तं भ्रातृव्यं जनयेत् ॥ ॥ १५ ॥**

असौ देवदत्तो मे सपत्न इति न ब्रूयात् सदसि। किं कारणं? यद्यसौ मे सपत्न इति ब्रूयात् द्विषन्तं, क्रियाशब्दोयम्, विद्विषाणं भ्रातृव्यं सपत्नं जनयेत्। एवं ह्युक्ते स मन्यते, नाकस्मादयं ब्रूते नूनमस्य मयि द्वेषो वर्तते इति। ततश्च तत्प्रतीकारार्थं यतमानः सपत्न एव जायत इति ॥

**नेन्द्रधनुरिति परस्मै प्रब्रूयात् ॥ १६ ॥**

इन्द्रधनुराकाशे पश्यन् परस्मै न तेन शब्देन प्रब्रूयात्। यद्यवश्यं वक्तव्यं, मणिधनुः इत्येव ब्रूयात्। गौतमीये दर्शनात्[1] ॥

**न पततस्संचक्षीत ॥ १७ ॥**

पततः पक्षिणस्संघीभूयस्थितान् न संचक्षीत न गणयेदियन्त इति। अपर आह—पुण्यक्षयेण स्वर्गात्पततः सुकृतिनः परस्मै न संचक्षीत ज्योतींषि पतन्तीति न कथयेदिति ॥

**उद्यन्तमस्तंयन्तं चादित्यं दर्शने वर्जयेत्॥ १८**

उदयसमये अस्तमयसमये चादित्यं न पश्येत्। मनुस्तु—

---

[1] गौ. ध. ९-२२.

नेक्षेतोद्यन्तमादित्यं नास्तंयन्तं कदा चन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्[1] ॥ इति ॥

**दिवादित्यस्सत्त्वानि गोपायति नक्तं चन्द्रमाः । तस्मादमावास्यायां निशायाꣳ स्वाधीय आत्मनो गुप्तिमिच्छेत्प्रायत्यब्रह्मचर्यकाले चर्यया च ॥ १९ ॥**

दिवा अहन्यादित्यः सत्त्वानि गोपायति प्राणिनो रक्षति आलोकदानेन । नक्तं रात्रौ चन्द्रमाः । तस्मादमावास्यायां निशायां रात्रौ स्वाधीयः । वकारश्छान्दसः, 'अन्तिकबाढयोर्नेद-साधौ' । बाढतरं भृशतरं आत्मनो गुप्तिं रक्षणमिच्छेत् । केन प्रकारेण? प्रायत्यब्रह्मचर्याभ्यां कालेचर्यया च । अयं तावदर्था-नुरूपः पाठः । अधीयमानस्तु प्रमादश्छान्दसो वा । प्रयतस्य भावः प्रायत्यं, नित्यात्प्रायत्यात् अधिकेन प्रायत्येन स्नानादिजेन ब्रह्मचर्येण मैथुनत्यागेन काले कृतया चर्यया च देवतार्चनजपा-दिकया ॥

कस्मात्पुनरस्यां रात्रौ न चन्द्रमा गोपायतीत्याह—

**सह ह्येताꣳ रात्रिꣳ सूर्याचन्द्रमसौ वसतः॥२०**

एतां रात्रिं, अत्यन्तसंयोगे द्वितीया । सर्वामेव रात्रिं सूर्या-चन्द्रमसौ सह वसतः । न च सूर्येण सह वसतश्चन्द्रमसः प्रकाशोस्ति ॥

**न कुसृत्या ग्रामं प्रविशेत् । यदि प्रविशेन्नमो**

---

[1] मनु. ४–३७.

**रुद्राय वास्तोष्पतय इत्येतामृचं जपेदन्यां वा रौद्रीम् ॥२१॥**

कुसृतिः कुमार्गः । तया ग्रामं न प्रविशेत् । यदि गत्यन्तराभावात्प्रविशेत् ततो 'नमो रुद्राय'[1] इत्यादिकामृचं जपेत्, अन्यां वा रौद्रीम्, 'इमां रुद्राय तवसे'[2] इत्येतदादिकाम् । अत्र वाजसनेयिनां गृह्ये—'वनं प्रवेक्ष्यन्ननुमन्त्रयते नमो रुद्राय वनसदे स्वस्ति मा संपारयेति । पन्थानमारोक्ष्यन्ननुमन्त्रयते नमो रुद्राय पथिषदे स्वस्ति मा सम्पारयेति । अपः प्रवेक्ष्यन्ननुमन्त्रयते नमो रुद्रायाप्सुषदे स्वस्ति मा सम्पारयेति । तस्माद्यत्किंचन कर्म कुर्वन् स्यात्तत्सर्वं नमो रुद्रायेत्येव कुर्यात् सर्वो ह्येष रुद्रः इति श्रुतेः' इति । भरद्वाजगृह्येप्यत्रविषये कियानेव विशेषः ॥

**नाब्राह्मणायोच्छिष्टं प्रयच्छेत् । यदि प्रयच्छेद्दन्तान्स्कुप्त्वा तस्मिन्नवधाय प्रयच्छेत् ॥२२॥**

अब्राह्मणश्शूद्रः । 'न शूद्रायोच्छिष्टमनुच्छिष्टं वा दद्यात्'[3] इति वासिष्ठे दर्शनात् । तस्मादुच्छिष्टं न प्रयच्छेदित्यनाश्रितविषयम् । यदि प्रयच्छेत् इदमाश्रितविषयम् । दन्तान् नखेन स्कुप्त्वा अवलिख्य तन्मलं तस्मिन्नुच्छिष्टे अवधाय निधाय प्रयच्छेत् । स्कुभ्नातेः क्त्वाप्रत्यये छान्दसं भकारस्य चर्त्वं, स्कुनातेर्वा पकार उपजनः ॥

**क्रोधादींश्च भूतदाहीयान्दोषान्वर्जयेत् ॥२३॥**

---

[1] तै. ब्रा. ३-७-९. [2] तै. सं. ४-५-१०. [3] वासि. १८-१४.

क्रोधादयो भूतदाहीयाः अध्यात्मपटले व्याख्याताः[1] । तद्वचनं योगिविषयमिति अयोगिनोपि स्नातकस्य क्रोधादिनिवृत्त्यर्थमिदं वचनम् । इदमेव तर्ह्युभयार्थमस्तु योग्यर्थमयोग्यर्थं चेति । एवं सिद्धे तद्वचनं क्रोधादिवर्जनस्य योगाङ्गत्वप्रतिपादनार्थम्; तेनाक्रोधाद्यननुष्ठाने योगसिद्धिरेव न भवति, न पुनस्स्नातकव्रतलोपप्रायश्चित्तमिति ॥

इत्येकत्रिंशः खण्डः.

---

**प्रवचनयुक्तो वर्षाशरदं मैथुनं वर्जयेत् ॥१॥**

प्रवचनमध्यापनं; तेन युक्तो वर्षासु शरदि च मैथुनं वर्जयेत् ऋतावपि ॥

**मिथुनीभूय च न तया सह सर्वाꣳ रात्रिꣳ शयीत ॥ २ ॥**

मिथुनीभूय मैथुनं कृत्वा तया सह भार्यया सह तां रात्रिं सर्वां न शयीत ॥

**शयानश्चाध्यापनं वर्जयेत् ॥ ३ ॥**

दिवा नक्तं च शयानस्याध्यापनप्रतिषेधः । स्वयं तु धारणार्थमधीयानस्य न दोषः ॥

**न च तस्याꣳ शय्यायामध्यापयेद्यस्याꣳ शयीत ॥ ४ ॥**

यस्यां शय्यायां भार्यया सह रात्रौ शयीत तस्यां शय्यायामासीनोपि नाध्यापयेत् ॥

---

[1] २३–५.

**अनाविस्स्रगनुलेपणः स्यात् ॥ ५ ॥**

आविर्भूते प्रकाशिते स्रगनुलेपने यस्य एवंभूतो न स्यात्, णत्वं पूर्ववत् ॥

**सदा निशायां दारं प्रत्यलङ्कुर्वीत ॥ ६ ॥**

दारं प्रतीति वचनादुपगमनार्थमलङ्करणम् । तेन भार्याया अशक्त्यादिना उपगमनायोग्यत्वे नायं नियमः ॥

**सशिरा वमज्जनमप्सु वर्जयेत् ॥ ७ ॥**

वमज्जनमवमज्जनम् । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः । सशिरा वर्जयेत् सह शिरसा स्नानं न कुर्यादिति । अवगाहनविधयस्सर्वे स्नातकव्यतिरिक्ते चरितार्थाः, नैमित्तिकाश्च । स्नातकस्य नित्यस्नानमवगाहनरूपं न भवतीत्याचार्यस्य पक्षः ॥

**अस्तमिते च स्नानम् ॥ ८ ॥**

अस्तमिते चादित्ये सर्वप्रकारं स्नानं वर्जयेत् ॥

**पालाशमासनं पादुके दन्तप्रक्षाळनमिति च वर्जयेत् ॥ ९ ॥**

पालाशमासनादि वर्जयेत् । दन्तप्रक्षाळनं दन्तकाष्ठं, इति शब्दः प्रकारे । तेनान्यदपि गृहोपकरणं पालाशं वर्जयेत् ॥

**स्तुतिं च गुरोस्समक्षं यथा सुस्नातमिति ॥ १० ॥**

सुस्नातमित्यादिकां च स्तुतिं गुरोस्सन्निधौ वर्जयेत् ॥

**आ निशाया जागरणम् ॥ ११ ॥**

निशा रात्रेर्मध्यमो भागः, आ तस्माज्जागृयात् न स्वप्यात् ॥

**अनध्यायो निशायामन्यत्र धर्मोपदेशाच्छिष्येभ्यः ॥ १२ ॥**

निशायामनध्यायः अध्ययनमध्यापनं च न कुर्यात् । शिष्येभ्यस्तु धर्मोपदेशोनुज्ञायते ॥

**मनसा वा स्वयम् ॥ १३ ॥**

निशायामनध्ययनस्य प्रतिप्रसवः । मनसा वा स्वयं चिन्तयेदिति ॥

**ऊर्ध्वमर्धरात्रादध्यापनम् ॥ १४ ॥**

अयमपि प्रतिप्रसवः । निशायामपि षोडश्या नाडिकाया आरभ्य अध्यापनं भवतीति ॥

**नापररात्रमुत्थायानध्याय इति संविशेत्॥१५॥**

रात्रेस्तृतीयो भागोपररात्रः । ऊर्ध्वमर्धरात्रादुत्थायाध्यापयन्नपररात्रं न संविशेत् न शयीत । यद्यपि तस्मिन्नष्टम्यादिरनध्यायः प्राप्तो भवति, किम्पुनस्स्वाध्याये । तथा च मनुः—

न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्[1] ॥ इति ॥

**काममप*श्शयीत ॥ १६ ॥**

अनेन स्तम्भाद्यपाश्रयेण आसीनस्य स्वापोनुज्ञायते । श्रित्र् सेवायाम्, तत्र रेफलोपश्छान्दसः, तथा शकारस्य द्विर्वचनम् ॥

**मनसा वाधीयीत ॥ १७ ॥**

अयमप्यूर्ध्वमर्धरात्रादुत्थायाध्यापयतोनध्यायप्राप्तावेवोच्यते मनसा वा प्राप्तं प्रदेशमधीयीत स्वयं चिन्तयेत् , उपाश्रित्य वा स्वप्यादिति ॥

---

[1] मनु. ४-९९.

*क-मुप.

**क्षुद्रान्क्षुद्रचरितांश्च देशान्न सेवेत ॥ १८ ॥**

क्षुद्रान् अल्पकान् पुरुषान्न सेवेत, क्षुद्रैर्निषादादिभिरधिष्ठितांश्च देशान्न सेवेत ॥

**सभास्समाजांश्च ॥ १९ ॥**

सभास्समाजाश्च व्याख्याताः । तान्न सेवेत ॥

**समाजं चेद्गच्छेत्प्रदक्षिणीकृत्यापेऽयात् ॥२०॥**

यद्यर्थात्समाजान् गच्छेत् ततः प्रदक्षिणीकृत्यापेयात् अपगच्छेत् ॥

**नगरप्रवेशनानि च वर्जयेत् ॥ २१ ॥**

बहुवचननिर्देशाद्बहुकृत्वो नगरं न प्रवेष्टव्यम् । यदा कदाचिद्यादृच्छिके प्रवेशने न प्रायश्चित्तम् ॥

**प्रश्नं च न विब्रूयात् ॥ २२ ॥**

विविच्य वचनं विवचनं निर्णयः, पृष्टमर्थं न विविच्य ब्रूयात् इत्थमिदमिति । दुर्निरूपार्थविषयमिदम् ॥

**अथाप्युदाहरन्ति ॥ २३ ॥**

अपि चास्मिन्नर्थे श्लोकमुदाहरन्ति ॥

**मूलं तूलं वृहति दुर्विवक्तुः प्रजां पशूनायतनꣳ हिनस्ति । धर्मप्रह्लादन कुमालनाय रुदन्न मृत्युर्व्युवाच प्रश्नमिति ॥ २४ ॥**

दुर्निरूपमर्थं सहसा निर्णीय यो दुर्विवक्ति अन्यथा वर्णयति

तस्य दुर्विवक्तुस्तदेव दुर्वचनं मूलं तूलं च वृहति। मूलं पित्रादयः, तूलमागामिनी सम्पत्, तदुभयमपि वृहत्युत्पाटयति । दन्त्योष्ठ्यो वकारः। किमेतावदेव? न। प्रजां पुत्रादिकां, पशून् गवादिकान्, आयतनं गृहादिकं च हिनस्ति, अतो दुर्विवचनसम्भवात्प्रश्नमात्रमेव न विब्रूयात् इति । अत्रेतिहासः—कस्य चिदृषेः धर्मप्रह्लादः कुमालनश्चेति द्वौ शिष्यावास्ताम् । तौ कदाचिदरण्यान्महान्तौ समिद्भारावाहृत्य श्रमादद्दष्टिपूत एवाचार्यगृहे प्राक्षिपताम्। तयोरेकेनाचार्यस्य पुत्रः शिशुराक्रान्तो मृतः। ततश्शिष्यावाहूयाचार्यः पप्रच्छ केनायं मारित इति । तावुभावपि न मयेत्यूचतुः। ततः पतितस्य परित्यागं अदुष्टस्य परिग्रहं कर्तुमशक्नुवन् ऋषिर्मृत्युमाहूय पप्रच्छ केनायं व्यापादित इति। ततो धर्मसङ्कटे पतिते मृत्यू रुदन्नेव प्रश्नं व्युवाच विविच्य कथितवान्। कथम्? हे धर्मप्रह्लादन कुमालनाय। षष्ठ्यर्थे चतुर्थी। कुमालनस्य नेदं पतनीयमिति । धर्मप्रह्लाद त्वयेदं कृतमिति वक्तव्ये इतरस्य नास्तीत्युक्तम्, तथापीतरस्यास्तीत्यर्थाद्गम्यत इति रुदन्व्युवाचेति। हशब्द ऐतिह्यद्योतनार्थः प्रह्लादशब्दे हकारात्परो रेफश्छान्दसः॥

**गार्दभं यानमारोहणे विषमारोहणाऽवरोहणानि च वर्जयेत्॥ २५॥**

गर्दभयुक्तं यानं शकटादि आरोहणे वर्जयेत् नारोहेत्, तथा विषमेषु निम्नोन्नतेषु आरोहणमवरोहणं च वर्जयेत्। उन्नतेष्वारोहणं निम्नेष्ववरोहणम्॥

**बाहुभ्यां च नदीतरम्॥ २६॥**

तरणं तरः। बाहुभ्यां नद्यास्तरणं वर्जयेत्। बाहुभ्यामितिवचनात् प्लवादिना न दोषः॥

नावं च सांशयिकीम्॥ २७॥

भिद्यते न वेति संशयमापन्ना सांशयिकी जीर्णा, तां नावं वर्जयेत्। नावामिति षष्ठ्यन्तपाठे नावाम्मध्ये सांशयिकीं नावं वर्जयेदिति॥

तृणच्छेदनलोष्टविमर्दनष्ठीवनानि चाकारणात्॥ २८॥

तृणच्छेदनादीनि नाकारणात्कुर्यात्। ष्ठीवनस्य कारणं प्रतिश्यायादिः, इतरत्र मृग्यम्॥

यच्चान्यत्परिचक्षते यच्चान्यत्परिचक्षते॥ २९॥

यच्चान्यदेवं युक्तं आचार्याः परिचक्षते वर्जयन्ति, तदप्यक्षक्रीडादि वर्जयेत्, द्विरुक्तिः प्रश्नसमाप्त्यर्था॥

इति हरदत्तमिश्रविरचितायां धर्मव्याख्यायामुज्ज्वलायां द्वात्रिंशः खण्डः.

एकादशः पटलस्समाप्तः.

प्रथमः प्रश्नश्च.

ओम्.



**पाणिग्रहणादधि गृहमेधिनोर्व्रतम् ॥ १ ॥**

पूर्वस्मिन्प्रश्ने आद्ययोः पटलयोः प्रायेण ब्रह्मचारिणो धर्मा उक्ताः, उत्तरेष्वष्टसु सर्वाश्रमाणाम्, एकादशे समावृत्तस्य। इदानीं पाणिग्रहणादारभ्य कर्तव्यानि कर्माण्युच्यन्ते—पाणिर्यस्मिन्नहनि गृह्यते तत्पाणिग्रहणम्। अधिशब्द ऊर्ध्वार्थे वर्तते। तस्मादूर्ध्वं गृहमेधिनोः ग्रहस्थाश्रमवतोर्यद्व्रतं कर्तव्यम्, जातावेकवचनम्। तदुच्यते। 'पाणिग्रहणादधि' इति वचनं 'भार्यादिरग्निर्दायादिर्वा'[1] इति शास्त्रान्तरोक्तो विकल्पो मा भूदिति। गृहमेधिनोरिति द्विवचनं अन्यतरमरणे मा भूदिति। वैश्वदेवं तु विधुरा अपि कुर्वन्ति॥

**कालयोर्भोजनम् ॥ २ ॥**

कालयोरुभयोरपि भोजनं कर्तव्यम्। सायम्प्रातश्च नान्तरेति परिसङ्ख्येयम्, भोजनस्य रागप्राप्तत्वात्। मानवे च स्पष्टमेतत्—

सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम्।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः[2] ॥ इति।

अन्ये तु नियमं मन्यन्ते—शक्तौ सत्यां कालयोरवश्यं भोक्तव्यं प्राणाग्निहोत्रस्यालोपायेति। तथा च बोधायनः—

ब्रह्मचारी गृहस्थो वा योऽनश्नंस्तु तपश्चरेत्।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः[3] ॥ इति

अन्यत्र प्रायश्चित्तात्। प्रायश्चित्ते तु तदेव विधानमिति॥

**अतृप्तिश्चान्नस्य ॥ ३ ॥**

---

[1] गौ. ध. ५-७. [2] मनुकोशे मुद्रिते नास्ति. [3] बो. ध. २-७-९.

सुहितार्थयोगे करणे षष्ठी भवति, 'पूरणगुणसुहितार्थ' इति ज्ञापनात् । अन्नेन तृप्तिं न गच्छेयाताम् । यावत्तृप्तिर्न भोक्तव्यम् ॥

**पर्वसु चोभयोरुपवासः ॥ ४ ॥**

पक्षसन्धिः पर्व । इह तु तत्सुक्तमहर्गृह्यते । तेषु पर्वसूभयोर्दम्पत्योरुपवासः कर्तव्यः । उपवासो भोजनलोपः ॥

अविशेषादुभयोरपि कालयोः प्राप्तावाह—

**औपवस्तमेव कालान्तरे भोजनम् ॥ ५ ॥**

यत्कालान्तरे एकस्मिन् काले भोजनं तदप्यौपवस्तमेव उपवास एव । 'औपवस्तं तूपवास' इति निघण्टुः । तदपि दिवा न रात्रौ, श्रौते तथा दर्शनात्, 'न तस्य सायमश्नीयात्' इति । तदिह 'एवमतऊर्ध्वम्'[1] इत्यादि गृह्ये यदुक्तं तत्रत्य उपवासो व्याख्यातः ॥

**तृप्तिश्चान्नस्य ॥ ६ ॥**

पर्वसु सकृद्भुञ्जानौ यावत्तृप्ति भुञ्जीयाताम् ॥

**यच्चैनयोः प्रियꣳ स्यात्तदेतस्मिन्नहनि भुञ्जीयाताम् ॥ ७ ॥**

एतस्मिन्नहनीति न वक्तव्यं प्रकृतत्वात् । यथा 'तृप्तिश्चान्नस्य' इति पर्वसु भवति एवमिदमपि भविष्यति । किञ्च—पर्वस्विति बहुवचनान्तस्य प्रकृतस्य एकस्मिन्नहनीति एकवचनान्तेन प्रत्यवमर्शो नातीव समञ्जसम् । तस्माद्व्यवहितमपि पाणिग्रहणमहः प्रत्यवमृश्यते । एतदर्थमपि गृह्ये 'एतदहर्विजानीयाद्यदहर्भार्या-

---

[1]आप. गृ. ७–१७.

मावहत '[1] इत्युक्तम् । एतस्मिन् पाणिग्रहणेऽहनि यदेनयोर्दम्पत्योः प्रियं तद्भुञ्जीयाताम्, न नु 'नात्मार्थमभिरूपमन्नं पाचयेत् '[2] इति निषेधस्याऽयं विषय इति । प्रतिसंवत्सरं चैतत्कर्तव्यम्, यथा चैत्रे मासि स्वातौ कृतविवाहस्य परस्मिन्नपि संवत्सरे तस्मिन्मासे एवं हि 'तदेवाहः' इति भवति । प्रतिमासं तु नक्षत्रागमेपि चैत्रादिभेदान्न तदेवेति प्रतिपत्तिः । तस्मात्प्रतिसंवत्सरमिदं विवाहनक्षत्रे कर्तव्यम् । यथा राज्ञामभिषेकनक्षत्रं एवं गृहमेधिनोर्विवाहनक्षत्रमिति ॥

अधश्च शयीयाताम् ॥ ८ ॥

एतस्मिन्नेवाहनि स्थण्डिलशायिनौ स्याताम् ॥

मैथुनवर्जनं च ॥ ९ ॥

मैथुनवर्जनं चैतस्मिन्नहनि कर्तव्यम् ॥

श्वो भूते स्थालीपाकः ॥ १० ॥

स्थालीपाकश्चापरेद्युः कर्तव्यः ॥

तस्योपचारः पार्वणेन व्याख्यातः ॥ ११ ॥

तस्य स्थालीपाकस्य उपचारः प्रयोगप्रकारः पार्वणेन व्याख्यातः । एतदेव ज्ञापयति न सामयाचारिकेषु पार्वणातिदेशः प्रवर्तत इति । केचित्तु सर्वमेवैतत्पर्वविषयं मन्यन्ते । तेषामुक्तो दोषः । 'पार्वणेन व्याख्यातः' इति चानुपपन्नम्, न हि स एव तेन व्याख्यातो भवति । 'श्वो भूते स्थालीपाकः '[3] इति वचनं

---

[1]आप. गृ. ८–७. [2]आप. ध. २–८–४.

व्यर्थम्, 'उपोषिताभ्यां पर्वसु कार्यः'[1] इति पूर्वमेव विहितत्वात्। एतदर्हाविजानीयादिति चास्य प्रयोजनं तत्पक्षे चिन्त्यम् ॥

**नित्यं लोक उपदिशन्ति ॥ १२ ॥**

लोके शिष्टाचारे सिद्धमेतत्कर्म नित्यं प्रतिवत्सरं कर्तव्यमिति शिष्टा उपदिशन्ति । अपर आह—वक्ष्यमाणं कर्म शिष्टाचारसिद्धं नित्यं सार्वत्रिकं शिष्टा उपदिशन्ति ॥

**यत्र क्व चाग्निमुपसमाधास्यंस्स्यात्तत्र प्राचीरुदीचीश्च तिस्रस्तिस्रो रेखा लिखित्वाऽद्भिरवोक्ष्याग्निमुपसमिन्ध्यात् ॥ १३ ॥**

होमप्रसङ्गादिदमुच्यते । यत्र क्व च गार्ह्ये सामयाचारिके वा कर्मणि गृहेऽरण्ये वाऽग्निमुपसमाधास्यंस्स्यात् प्रतिष्टापयिष्यंस्स्यात् तत्र पूर्वं प्राचीः प्रागग्रास्तिस्रो रेखा लिखेत्तत उदीचीः उदगग्रास्तिस्रो रेखा लिखित्वाद्भिरवोक्षेत् । अवोक्ष्याग्निं श्रोत्रियागारादाहृतं प्रतिष्ठाप्योपसमिन्ध्यात् उपसमिन्धीत काष्ठैरग्निं ज्वलयेत्। तत्र 'पुरस्तादुदग्वोपक्रमः । तथापवर्गः'[2] इति परिभाषितम् । उपदेशक्रमाच्च प्राच्यः पूर्वं लेखा लेखनीयाः ततश्चोदीच्यः ।

प्राचीः पूर्वं दक्षिणान्तमुदगारम्भमालिखेत् ।
तथोदीचीः पुरस्संस्थं पश्चिमारम्भमालिखेत् ॥
अन्ये तु प्राचीर्दक्षिणारम्भमालिखन्ति ॥

**उत्सिच्यैतदुदकमुत्तरेण पूर्वेण वाऽन्यदुपदध्यात् ॥ १४ ॥**

[1]आप. गृ. ७-१७.　　[2]आप. गृ. १-५, ६.

एतदवोक्षणशेषोदकमग्नेरुत्तरतः पूर्वतो वा उत्सिञ्चेत् । उत्सिच्यान्यदुदकं पात्रस्थमुपदध्यात्तत्रैव ॥

**नित्यमुदधानान्यद्भिररिक्तानि स्युर्गृहमेधिनोर्व्रतम् ॥ १५ ॥**

गृहे यावन्त्युदधानानि उदपात्राणि घटकरकादीनि तानि सदा अद्भिररिक्तानि स्युः । एतदपि गृहमेधिनोर्व्रतम् । पुनर्गृहमेधिनोरिति द्विवचनं अस्मिन् कर्मणि स्वयं कर्तृत्वमेव यथा स्यात् प्रयोजककर्तृत्वं मा भूदिति । अन्य आह—पुनः 'गृहमेधिनोः' इति वचनात्पूर्वसूत्रं ब्रह्मचारिविषयेपि 'सावित्र्या समित्सहस्रम्'[1] इत्यादौ भवति । पाके तु स्त्रिया न भवति, 'उपसमाधास्यन्' इति लिङ्गस्य विवक्षितत्वात्, 'आर्याः प्रयताः'[2] इत्यत्र तु भवतीति ॥

**अहन्यसंवेशनम् ॥ १६ ॥**

संवेशनं मैथुनं, तदहनि न कर्तव्यम् ॥

**ऋतौ च सन्निपाते दारेणानुव्रतम् ॥ १७ ॥**

रजोदर्शनादारभ्य षोडशाहोरात्राः ऋतुः । तत्र सन्निपातस्सम्प्रयोगो दारेण सह कर्तव्यः । छान्दसमेकवचनम्, नित्यं बहुवचनान्तो हि दारशब्दः । अनुव्रतं, शाश्वतो नियमो व्रतं, तदनुरोधेन । तत्र मनुः—

ऋतुस्स्वाभाविकस्त्रीणां रात्रयष्षोडश स्मृताः ।
चतुर्भिरितरैस्सार्धमहोभिस्सद्विगर्हितैः ॥

---

[1]आप. ध. १-२७-१. [2]आप. ध. २-३-१.

तासामाद्याश्चतस्रस्तु निन्द्या एकादशी च या ।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः ॥
अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः[1] ॥ इति ।

याज्ञवल्क्यस्तु—

एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत्[2] । इति ॥

आचार्यस्तु—चतुर्थीप्रभृति गमनमाह — 'चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां प्रजानिःश्रेयसमृतुगमन इत्युपदिशन्ति'[3] इति । तदिह षोडशसु रात्रिषु आदितस्तिस्रस्सर्वथा वर्ज्याः । चतुर्थ्येकादशी त्रयोदशी चाचार्येणानुज्ञाताः मनुना निषिद्धाः । इतरासु दशसु रात्रिषु युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु । तत्र चोत्तरामुत्तरामिति वचनात् षोडश्यां रात्रौ मघादियोगाभावे गच्छतः पुत्रः सर्वत उत्कृष्टो भवति । चतुर्थ्यामवमः; मध्ये कल्प्यम् । एवं पञ्चदश्यामुत्कृष्टा दुहिता, पञ्चम्यामवमा, मध्ये कल्प्यम् । षोडशस्वेव गमनं गर्भहेतुः, तत्रापि प्रथमम् । एवं स्थिते नियमविधिरयं, योग्यत्वे सति ऋताववश्यं सन्निपतेत्, असन्निपतन् पुत्रोत्पत्तिं निरुन्धानः प्रत्यवेयादिति । तथा च दोषस्मृतिः—

ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति ।
तस्या रजसि तन्मासं पितरस्तस्य शेरते ॥ इति ।

पुत्रगुणार्थितया पूर्वां पूर्वां वर्जयतो न दोषः । अन्ये तु परिसङ्ख्यानं मन्यन्ते, ऋतावेव सन्निपतेन्नान्यत्रेति । तेषामृतावनियमादग-

---

[1] मनु. ३-४६, ४७, ४-१२८.　[2] याज्ञ. १–८०　[3] आप. गृ. ९-१.

मनेपि दोषाभावाद्दोषस्मरणमनुपपन्नं स्यात् । सर्वथापि विधिर्न भवति, रागप्राप्तत्वात्सन्निपातस्य ॥

**अन्तराळेपि दार एव ॥ १८ ॥**

अन्तराळं मध्यं ऋत्वोरन्तराळे मध्येपि सन्निपातस्स्यात् दार एव सकामे सति । यद्यप्यात्मनो जितेन्द्रियतया न तादृशं पारवश्यं; तथापि भार्यायामेवेच्छन्त्यां तद्रक्षणार्थमवश्यं सन्निपतेदिति । वक्ष्यति च 'अप्रमत्ता रक्षथ तन्तुमेतम्'[1] इति । 'अनुव्रतम्' इत्यनुवृत्तेः प्रतिषिद्धेषु दिनेषु न भवति ॥

**ब्राह्मणवचनाच्च संवेशनम् ॥ १९ ॥**

यदिदमनन्तरोक्तं संवेशनं तत्र ब्राह्मणवचनं प्रमाणं 'कामभाविजनितोस्सम्भवाम'[2] इति ॥

**स्त्रीवाससैव सन्निपातः स्यात् ॥ २० ॥**

एवकारो भिन्नक्रमः । स्त्र्युपभोगार्थं वासः स्त्रीवासः तेन सन्निपात एव स्यात्; न तेन सुप्रक्षाळितेनापि ब्रह्मयज्ञादिकृत्यमिति ॥

**यावत्सन्निपातं चैव सहशय्या ॥ २१ ॥**

यावत्सन्निपातमेव दम्पत्योस्सहशयनम् ॥

**ततो नाना ॥ २२ ॥**

ततः पृथक् शयीयाताम् ॥

**उदकोपस्पर्शनम् ॥ २३ ॥**

ततो द्वयोरपि उदकोपस्पर्शनं स्नानं कर्तव्यम् । इदमृतुकाले ॥

इति प्रथमः खण्डः.

---

[1] आप. ध. २-१३-६.

[2] तै. सं. २-५-१.

**अपि वा लेपात्प्रक्षाळ्याचम्य प्रोक्षणमङ्गानाम् ॥ १ ॥**

यदि वा रेतसो रजसश्च ये लेपास्तानद्भिः मृदा च प्रक्षाळ्य आचम्याङ्गानां शिरःप्रभृतीनां प्रोक्षणं कर्तव्यम्, इदमनृतुकाले ॥

**सर्ववर्णानाꣳ स्वधर्मानुष्ठाने परमपरिमितं सुखम् ॥ २ ॥**

सर्वेषामेव वर्णानां ब्राह्मणादीनां चतुर्णां ये स्वधर्मा वर्णप्रयुक्ता आश्रमप्रयुक्ता उभयप्रयुक्ता वा तेषामवैगुण्येनान्तादनुष्ठाने सति परमुत्कृष्टमपरिमितमक्षयं स्वर्गाख्यं सुखं भवति ॥

तेन न केवलमेतावदेव । किं तर्हि ?—

**ततः परिवृत्तौ कर्मफलशेषेण जातिꣳ रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते ॥ तच्चक्रवदुभयोर्लोकयोस्सुख एव वर्तते ॥ ३ ॥**

ततस्सुखानुभवानन्तरं परिवृत्तिरिहलोके जन्म भवति । तस्यां च कर्मणो यः फलशेषो भोक्तव्यः तेन जातिं ब्राह्मणादिकां, विशिष्टे वा कुले जन्म, रूपं कान्तिमद्वर्णं हेमादितुल्यं, बलं प्रतिपक्षनिग्रहक्षमं, मेधां ग्रन्थग्रहणशक्तिं, प्रज्ञामर्थग्रहणशक्तिं, द्रव्याणि स्वर्णादीनि, धर्मानुष्ठानम् । इति करणाद्यच्चान्यदेवं युक्तं तत्सर्वं प्रतिपद्यते । सर्वत्र धर्मशेषो हेतुः । कर्माणि भुज्यमानानि सावशेषाणि भुज्यन्ते, ऐहिकस्य शरीरग्रहणादे-

रपि कर्मफलत्वात् । 'धर्मानुष्ठानं प्रतिपद्यते' इत्युक्तम् । यदा चैवम् 'तदा सर्ववर्णानां स्वधर्मानुष्ठाने' इत्यादि 'प्रतिपद्यते' इत्यन्तं पुनर्भवतीत्यनुक्तसिद्धम् । तस्माच्चक्रवदुभयोर्लोकयोः इह चामुष्मिंश्च सुख एव वर्तते । न जातुचिद्दुःखे; सुखानुबन्धेनैवावृत्तिर्भवतीत्यर्थः ॥

शरीरोत्पत्तिसंस्कारा अप्यवश्यापेक्षा इति दर्शयितुं दृष्टान्तमाह—

**यथौषधिवनस्पतीनां बीजस्य क्षेत्रकर्मविशेषे फलपरिवृद्धिरेवम् ॥ ४ ॥**

चलोपोऽत्र द्रष्टव्यः । यथा चौषधीनां व्रीह्यादीनां वनस्पतीनामाम्रादीनां बीजस्य क्षेत्रविशेषे कर्मविशेषे संस्कारविशेषे च, क्षेत्रस्य वा कृष्यादौ कर्मविशेषे, फलपरिवृद्धिर्भवति । त एव व्रीहय ऊषर उप्ता न प्ररोहन्ति कृष्यादिपरिकर्मिते तु क्षेत्रे उप्तास्स्तम्बकरयो भवन्ति । एवं पुरुषेपि गर्भाधानादिसंस्कारसम्पन्ने द्रष्टव्यम् ॥

**एतेन दोषफलपरिवृद्धिरुक्ता ॥ ५ ॥**

एतेनैव न्यायेन दुष्टकर्मफलपरिवृद्धिरप्युक्ता वेदितव्या । तत्रोहेन पठितव्यं 'सर्ववर्णानाम्' इत्यादि विपरीतम् ; 'सर्ववर्णानां स्वधर्माननुष्ठाने परमपरिमितं दुःखम् । ततः कर्मफलशेषेण दुष्टान् जात्यादिकान् द्रव्यान्तानधर्मानुष्ठानमिति तच्चक्रवदुभयोर्लोकयोर्दुःख एव वर्तते । यथौषधिवनस्पतीनां बीजस्य क्षेत्रकर्मविशेषाभावे फलहानिरेवम्' इति ॥

दोषफलपरिवृद्धावुदाहरणमाह—

स्तेनोऽभिशस्तो ब्राह्मणो राजन्यो वैश्यो वा परस्मिन्लोकेऽपरिमिते निरये वृत्ते जायते चाण्डालो ब्राह्मणः पौल्कसो राजन्यो वैणो वैश्यः ॥ ६ ॥

स्तेनः स्वर्णचोरः । अभिशस्तो ब्रह्महा । स्तेनोऽभिशस्तो वा ब्राह्मणादिरमुष्मिन्लोके अपरिमिते निरये दोषफलमनुभूय तस्मिन्वृत्ते परिक्षीणे ब्राह्मणश्चाण्डालो जायते, राजन्यः पौल्कसः । शूद्रात् क्षत्रियायां जातः पुल्कसः स एव पौल्कसः, प्रज्ञादित्वादण् । वैश्यो वैणो जायते; वेणुनर्तको वैणः ॥

एतेनान्ये दोषफलैः कर्मभिः परिध्वंसा दोषफलासु योनिषु जायन्ते वर्णपरिध्वंसायां यथा* ॥ ७ ॥

वर्णपरिध्वंसा वर्णेभ्यः प्रच्यवनं, तस्यां वर्णपरिध्वंसायां† यथा ब्राह्मणादयश्चण्डालाद्या जायन्ते, एतेन प्रकारेण स्तेनाभिशस्ताभ्यां अन्येपि दोषफलैः कर्मभिर्दोषफलासु सूकरादिषु योनिषु जायन्ते.परिध्वंसाः स्वजातिभ्रष्टास्सन्त इत्यर्थः । ते‡तथावगन्तव्या इति ॥

चण्डालोपस्पर्शने सम्भाषायां दर्शने च दोषस्तत्र प्रायश्चित्तम् ॥ ८ ॥

---

*झ–'यथा' इत्युत्तरसूत्रे पठ्यते.　　‡मु–...इत्यर्थात्ते.

†झ–यस्यां वर्णपरिध्वंसो वर्णे......सायां वृत्तौ सत्यां यथा.

चण्डालोपस्पर्शने दोषो भवति । तथा सम्भाषायां दर्शने च । उपसमस्तमपि चण्डालग्रहणमभिसम्बद्ध्यते । तत्र सर्वत्र प्रायश्चित्तं वक्ष्यते ॥

**अवगाहनमपामुपस्पर्शने संभाषायां ब्राह्मणसंभाषा दर्शने ज्योतिषां दर्शनम् ॥ ९ ॥**

उपस्पर्शने सत्यपामेवावगाहनं प्रायश्चित्तम् । ऋजुनी उत्तरे । स्वकर्मप्रशंसाप्रकरणे प्रायश्चित्ताभिधानं स्वकर्मप्रच्युतानां निन्दार्थम् । एवं नाम निन्दितश्चण्डालः, यस्य दर्शने प्रायश्चित्तं; स वा एष जायते स्वकर्मप्रच्युतो ब्राह्मणः ॥

इति द्वितीयः खण्डः.

इति श्रीहरदत्तमिश्रविरचितायामापस्तम्बधर्मसूत्रवृत्तौ उज्ज्वलायां द्वितीयप्रश्ने प्रथमः पटलः.

---

**आर्याः प्रयता वैश्वदेवेन्नसंस्कर्तारस्स्युः ॥१॥**

आर्यास्त्रैवर्णिकाः, 'आर्याधिष्ठिता वा शूद्राः'[1] इत्युत्तरत्र दर्शनात् । प्रयताः स्नानादिना शुद्धाः वैश्वदेवे गृहमेधिनोभोजनार्थे पाके, 'गृहमेधिनो यदशनीयस्य'[2] इति दर्शनात् । अन्नसंस्कर्तारस्स्युः, अन्नं च भक्ष्यभोज्यपेयादिकम् । तत्संस्कुर्युः । न स्वयं, नापि स्त्रियः ॥

**भाषां कासं क्षवथुमित्यभिमुखोन्नं वर्जयेत् ॥२॥**

---

[1] आप. ध. २-३-४.
[2] आप. ध. २-३-१२.

भाषा शब्दोच्चारणम् । कासः कण्ठे घुरघुराशब्दः । क्षवथुः क्षुतम् । एतत्त्रयमन्नाभिमुखो न कुर्यात् । 'संस्कर्तारस्स्युः' इति बहुवचने प्रकृते वर्जयेदित्येकवचनं प्रत्येकमुपदेशात् ॥

केशानङ्गं वासश्चालभ्याप उपस्पृशेत् ॥ ३ ॥

केशादीनात्मीयानन्यदीयान्वालभ्य स्पृष्ट्वा अप उपस्पृशेत् । नेदं स्नानम् । किं तर्हि? स्पर्शमात्रम् । केशालम्भे पूर्वमप्युपस्पर्शनं विहितम्, इदं तु वचनम्—तत्रोक्तं वैकल्पिकं शकृदाद्युपस्पर्शनं मा भूदिति ॥

आर्याधिष्ठिता वा शूद्राः सꣳस्कर्तारस्स्युः ॥४

त्रैवर्णिकैरधिष्ठिताश्शूद्राश्च संस्कर्तारस्स्युः । प्रकरणादन्नस्येति गम्यते ॥

तेषाꣳ स एवाचमनकल्पः ॥ ५ ॥

तेषां शूद्राणामन्नसंस्कारे अधिकृतानां स एवाचमनकल्पो वेदितव्यः, यस्यान्नं पचति । यदि ब्राह्मणस्य, हृदयङ्गमाभिरद्भिः । अथ क्षत्रियस्य, कण्ठगाभिः । यदि वैश्यस्य, तालुगाभिः । इन्द्रियोपस्पर्शनं च भवति ॥

अधिकमहरहः केशश्मश्रुलोमनखवापनम् ॥

शूद्राः पचन्तः प्रत्यहं केशादि वापयेयुः । इदमेषामधिकमार्येभ्यः ॥

उदकोपस्पर्शनं च सह वाससा ॥ ७ ॥

सहैव च वाससा स्नानं कुर्युः । आर्याणां तु परिहितं वासो निधाय कौपीनाच्छादनमात्रेणापि स्नानं भवति । शूद्राणामपि पाकादन्यत्र । तथाच मनुः—

न वासोभिस्सहाजस्रं नाविज्ञाते जलाशये[1] ॥ इति ॥

**अपि वाष्टमीष्वेव पर्वसु वा वपेरन् ॥ ८ ॥**

यदि वाष्टमीष्वेव वपेरन् केशादीन्, पर्वस्वेव वा, न प्रत्यहम् । वपेरन्नित्यन्तर्भावितण्यर्थः, वापयेयुरित्यर्थः, तथाच —'लोमनखवापनम्' इति पूर्वं णिच्प्रयुक्तः ॥

**परोक्षमन्नꣳ सꣳस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत् । तद्देवपवित्रमित्याचक्षते ॥ ९ ॥**

यदि शूद्राः परोक्षमन्नं संस्कुर्युरार्यैरधिष्ठिताः, तदा तत्परोक्षमन्नं संस्कृतमाहृतं स्वयमग्नावधिश्रयेत् । अधिश्रित्याद्भिः प्रोक्षेत् । तदेवंभूतमन्नं देवपवित्रमित्याचक्षते, देवानामपि तत्पवित्रम्, किं पुनर्मनुष्याणामिति ॥

**सिद्धेऽन्ने तिष्ठन्भूतमिति स्वामिने प्रब्रूयात् ॥**

सिद्धे पक्केऽन्ने तिष्ठन् पाचकोऽधिष्ठितो वा भूतमिति ब्रूयात् । कस्मै, यस्य तदन्नं तस्मै स्वामिने । भूतं निष्पन्नमित्यर्थः ॥

**तत्सुभूतं विराडन्नं तन्मा क्षायीति प्रतिवचनः॥**

'तत्सुभूतम्' इत्यादिप्रतिवचनो मन्त्रः । तदन्नं सुभूतं सुष्ठु निष्पन्नं विराट् विराजनसा[2]धनमन्नम् । तच्च मा क्षायि क्षीणं मा भूदित्यर्थः ॥

**गृहमेधिनो यदशनीयस्य होमा बलयश्च स्वर्गपुष्टिसंयुक्ताः ॥ १२ ॥**

---

[1] मनु. ४-१२९.

[2] ड—जः सा.

गृहमेधिनो यदशनीयं पक्वमपक्वं वा उपस्थितं तस्यैकदेशेन होमा बलयश्च वक्ष्यमाणाः कर्तव्याः । स्वर्गः पुष्टिश्च तेषां फलमिति ॥

**तेषां मन्त्राणामुपयोगे द्वादशाहमधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जनं च ॥ १३ ॥**

तेषां होमानां बलीनां च ये मन्त्राः तेषामुपयोगे । उपयोगो नियमपूर्वकं विद्याग्रहणम् । तथा च बोधायनः—'तेषां ग्रहणे द्वादशरात्रम्'[1] इत्यादि । तत्र द्वादशरात्रमधश्शय्या स्थण्डिलशायित्वं ब्रह्मचर्यं मैथुनवर्जनं क्षारलवणवर्जनं च भवति । उपयोक्तुरेव व्रतम्, अध्ययनाङ्गत्वात् । अन्ये तु पत्न्या अपीच्छन्ति ; उपयोगः प्रथमः प्रयोगः, तत्र च पत्न्या अपि सहाधिकार इति वदन्तः ॥

**उत्तमस्यैकरात्रमुपवासः ॥ १४ ॥**

उत्तमस्य 'उत्तमेन वैहायसम्'[2] इति वक्ष्यमाणस्य 'ये भूताः प्रचरन्ति' इत्यस्या एकरात्रमुपवासः कर्तव्यः ॥

**बलीनां तस्य तस्य देशे सँस्कारो हस्तेन परिमृज्यावोक्ष्य न्युप्य पश्चात्परिषेचनम् ॥**

बलीनां मध्ये तस्यतस्य बलेर्देशः संस्कारः कर्तव्यः । कः पुनरसौ? हस्तेन परिमार्जनमवोक्षणं च । तं कृत्वा बलिं निवपति । न्युप्य पश्चात्परिषेचनं कर्तव्यम् । उपदेशक्रमादेव

[1] बोध—गृह्यसूत्रकोशे ३७ पत्रे २२ पङ्क्तौ. [2] आप. ध, २-४-८.

सिद्धे पश्चाद्ग्रहणं मध्ये गन्धमाल्यादिदानार्थमित्याहुः। 'तस्यतस्य' इतिवचनं सत्यपि सम्भवे सकृदेव मार्जनमवोक्षणं च मा भूत्, एकस्मिन् देशे समवेतानामपि पृथक्पृथक् यथा स्यादिति ॥

**औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेन जुहुयात् ॥ १६ ॥**

यत्र पच्यते स पचनाग्निः। औपासनवतामौपासने, विधुरादेः पचन इति व्यवस्थितो विकल्पः। अन्ये तुल्यविकल्पं मन्यन्ते। षड्भिराद्यैः—'अग्नये स्वाहा, सोमाय स्वाहा, विश्वेभ्यो देवेभ्यस्स्वाहा, ध्रुवाय भौमाय स्वाहा, ध्रुवक्षितये स्वाहा, अच्युतक्षितये स्वाहा' इत्येतैः। एते हि मन्त्राः मन्त्रपाठे पठिताः प्राग्विवाहमन्त्रेभ्यः विशिष्टनियमसापेक्षग्रहत्वात् तैस्सह गृह्यन्ते। केचित्—सौविष्टकृतमपि सप्तमं जुह्वति 'अग्नये स्विष्टकृते स्वाहा' इति औषधहविष्केषु सर्वत्र तस्य प्रवृत्तिरिति वदन्तः। अन्ये तु—सोमाय स्वाहा, इति न पठन्ति, सौविष्टकृतं षष्ठं पठन्ति*। हस्तग्रहणं दर्व्यादिनिवृत्त्यर्थम् ॥

**उभयतः परिषेचनं यथा पुरस्तात् ॥ १७ ॥**

उभयतः पुरस्तादुपरिष्टाच्च परिषेचनं कर्तव्यम्। कथम्? यथा पुरस्तात्, उक्तं गृह्ये 'अदितेनुमन्यस्व'[1] इत्यादिः 'अन्वमंस्थाः प्रासावीरिति मन्त्रसन्नामः'[1] इति च। सामयाचारिकेषु

*ङ—अन्ये तु—'ध्रुवाय भौमाय' इति न पठन्ति, सौविष्टकृतं षष्ठं पठन्ति इत्यधिकः पाठः.

[1]आप. गृ. २–३,८.

पार्वणातिदेशो न प्रवर्तत इति ज्ञापितत्वात् अप्राप्तविधिरयम्। अन्ये तु—परिसङ्ख्यां मन्यन्ते, परिषेचनमेव वैश्वदेवे नान्यत्तन्त्रमिति ॥

**एवं बलीनां देशे देशे समवेतानाँ सकृत्सकृदन्ते परिषेचनम् ॥ १८ ॥**

यथा षण्णामाहुतीनां परिषेचनं तन्त्रम्, विभवात् एवं बलयोपि ये एकस्मिन् देशे समवेताः 'उत्तरैः ब्रह्मसदने'[1] इत्यादयः तेषां यदन्ते परिषेचनं प्राप्तं 'पश्चात्परिषेचनम्' इत्यनेन विहितं तत्सर्वान्ते सकृत्कर्तव्यम्, न प्रत्येकं पृथगिति। असत्यस्मिन्सूत्रे पूर्वत्र 'तस्य तस्य' इति वचनात् यथा परिमार्जनमवोक्षणं च प्रत्येकं पृथग्भवति तथा परिषेचनमपि स्यात्। अत्र च उपदेशादेव ये एकदेशस्था बलयः तेषामेव सकृत्परिषेचनं, न याद्दच्छिके समवाये। तेन यद्यप्यगारस्योत्तरपूर्वदेशः शय्यादेशः, तथापि कामलिङ्गस्य पृथक् परिषेचनं भवति ॥

**सति सूपसँस्पृष्टेन कार्याः ॥ १९ ॥**

सति सूपे तत्संसृष्टा बलयः कार्याः। अन्ये तु—अन्यैरपि व्यञ्जनैस्संसर्गमिच्छन्ति ; तथा च बोधायनः—'काममितरेष्वायतनेषु'[2] इति। एष हि व्यञ्जनानां संस्कारः। सूत्रस्यापि—व्यञ्जनैस्सुष्ठूपसंसृष्टेनान्नेन बलयः कार्याः सति सम्भव इत्यर्थः इति ॥

---

[1] आप. ध. २-४-४.

[2] बो—गृह्यसूत्रकोशे ३३ पत्रान्तिमपङ्क्तौ.

**अपरेणाग्निꣳ सप्तमाष्टमाभ्यामुदगपवर्गम्॥२०**

अग्नेः पश्चात् सप्तमाष्टमाभ्यां ‘धर्माय स्वाहा, अधर्माय स्वाहा’ इत्येताभ्यां बलिहरणं कर्तव्यम्। उदगपवर्गं, न प्रागपवर्गम्॥

**उदधानसन्निधौ नवमेन॥२१॥**

उदकं यत्र धीयते तदुदधानं मणिकाख्यम्। तस्य सन्निधौ नवमेन ‘अद्भ्यः स्वाहा’ इत्येतेन॥

**मध्येगारस्य दशमैकादशाभ्यां प्रागपवर्गम्॥**

‘ओषधिवनस्पतिभ्यः स्वाहा, रक्षोदेवजनेभ्यः स्वाहा’ इत्येताभ्याम्। अगारस्य मध्ये प्रागपवर्गं कर्तव्यम्॥

**उत्तरपूर्वदेशेऽगारस्योत्तरैश्चतुर्भिः॥२३॥**

अगारस्य य उत्तरपूर्वो देशः तत्र उत्तरैश्चतुर्भिः ‘गृह्याभ्यः स्वाहा, अवसानेभ्यः स्वाहा, अवसानपतिभ्यः स्वाहा, सर्वभूतेभ्यः स्वाहा’ इत्येतैः प्रागपवर्गमित्येव॥

इति तृतीयः खण्डः.

---

**शय्यादेशे कामलिङ्गेन॥१॥**

शय्यादेशे ‘कामाय स्वाहा’ इत्यनेन॥

**देहल्यामन्तरिक्षलिङ्गेन॥२॥**

देहली द्वारस्याधस्तादारु, तस्याधोवेदिकेत्यन्ये। अन्तर्द्वारस्य च ग्रहणम्। तत्रान्तरिक्षलिङ्गेन ‘अन्तरिक्षाय स्वाहा’ इत्यनेन॥

**उत्तरेणापिधान्याम् ॥ ३ ॥**

येनापिधीयते द्वारं साऽपिधानी कवाटम् । तदर्गळमित्यन्ये । तत्रोत्तरेण मन्त्रेण 'यदेजति जगति यच्च चेष्टति नाम्नो भागो यन्नाम्ने स्वाहा, इत्यनेन ॥

**उत्तरैर्ब्रह्मसदने ॥ ४ ॥**

अगारस्येत्यनुवृत्तेस्तस्य यो ब्रह्मसदनाख्यो देशः वास्तुविद्यायां प्रसिद्धो मध्येगारस्य, तत्रोत्तरैर्दशभिः 'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा, दिवे स्वाहा, सूर्याय स्वाहा, चन्द्रमसे स्वाहा, नक्षत्रेभ्यस्स्वाहा, इन्द्राय स्वाहा, बृहस्पतये स्वाहा, प्रजापतये स्वाहा, ब्रह्मणे स्वाहा,' इत्येतैः । प्रागपवर्गमित्येव । अपर आह— 'मध्येगारस्य'[1] इत्यत्र तस्य देशस्योपयुक्तत्वात् ब्रह्मा यत्र सीदति गार्ह्येषु कर्मसु अग्नेर्दक्षिणतः ब्रह्मसदनं तत्रेति ॥

**दक्षिणतः पितृलिङ्गेन प्राचीनावीत्यवाचीनपाणिः कुर्यात् ॥ ५ ॥**

अनन्तराणां बलीनां दक्षिणतः पितृलिङ्गेन 'स्वधा पितृभ्यः' इत्यनेन बलिं कुर्यात्, प्राचीनावीत्यवाचीनपाणिश्च भूत्वा दक्षिणं पाणिमुत्तानं कृत्वा अङ्गुष्ठतर्जन्योरन्तरालेन ॥

**रौद्र उत्तरो यथा देवताभ्यः ॥ ६ ॥**

पितृबलेरुत्तरतो रौद्रबलिः कर्तव्यः, यथा देवताभ्यस्तथा । 'प्राचीनावीत्यवाचीनपाणिः' इति नानुवर्तत इत्यर्थः । 'नमो-रुद्राय पशुपतये स्वाहा' इति मन्त्रः । अत्र यद्यपि पशुपतिलिङ्ग-

---

[1] आप. ध. २-३-२२.

मप्यस्ति, तथापि रुद्रस्यैव विशेषणमिति रौद्र इति व्यपदेशोनानुपपन्नः। देवतास्मरणमपि रुद्रायेत्येव कुर्वन्ति। रुद्राय पशुपतय इत्यन्ये। केचित्तु—उत्तरो मन्त्रो रौद्रो न पशुपतिदेवत्यः इति व्याचक्षते। तेषां देशः प्राग्वा उदग्वा पित्र्यात्॥

## तयोर्नाना परिषेचनं धर्मभेदात्॥ ७॥

तयोरनन्तरोक्तयोर्बल्योरेकस्मिन् देशे समवेतयोरपि नाना पृथक्परिषेचनं कर्तव्यम्। कुतः? धर्मभेदात्। पित्र्यस्याप्रदक्षिणं परिषेचनं, इतरस्य दैवतत्वात् प्रदक्षिणमिति॥

## नक्तमेवोत्तमेन वैहायसम्॥ ८॥

उत्तमेन.

'ये भूताः प्रचरन्ति नक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः।

तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा' इत्यनेन वैहायसं बलिं दद्यात्। तच्च नक्तमेव। 'वैहायसम्' इतिवचनात् आकाश एव बलिः उत्क्षेप्यः। न छदिःपरिष्कृते देशे। तथा च बोधायनः—'अथाकाशे उत्क्षिपति ये भूताः'[1] इति। अपर आह—एव कारो भिन्नक्रमः, नक्तमुत्तमेनैव बलिरिति। तत्र बल्यन्तराणां रात्रौ निवृत्तिः। अन्ये तूहेन दिवापि बलिं हरन्ति 'दिवा बलिमिच्छन्तः' इति, आश्वलायनके तथा दर्शनात् 'दिवा चारिभ्य इति दिवा। नक्तं चारिभ्य इति नक्तम्'[2] इति॥

(विश्वेभ्यश्चैव देवेभ्यो बलिमाकाश उत्क्षिपेत्।

---

[1]बो. ध-गृह्यसूत्रकोशे ३६ पत्रे २ पङ्क्तौ. [2]अश्वला. गृ. १-२-८, ९.

दिवाचरेभ्यो भूतेभ्यो नक्तं चारिभ्य एव च[1]) इति ॥

**य एतानव्यग्रो यथोपदेशं कुरुते नित्यः स्वर्गः पुष्टिश्च ॥ ९ ॥**

य एताननन्तरोक्तान् बलीन् होमांश्च अव्यग्रः समाहितमना भूत्वा यथोपदेशमुपदेशानतिक्रमेण कुरुते, य इति वचनात्तस्येति गम्यते, तस्य नित्यः स्वर्गः, पुष्टिश्च नित्या। 'स्वर्गपुष्टिसंयुक्ताः'[2] इति यत्पूर्वमुक्तं तस्यार्थवादताशङ्का मा भूदिति पुनर्वचनम्। पुष्टिस्वर्गौ नित्यावेव भवतः, न प्रबलैरपि कर्मान्तरैर्बाधनमिति ॥

**अग्रं च देयम् ॥ १० ॥**

बलिहरणानन्तरमग्रं च देयं भिक्षवे ॥

**अतिथीनेवाग्रे भोजयेत् ॥ ११ ॥**

अतिथीन्वक्ष्यति[3]। तानेवाग्रे भोजयेत्, न स्वयं सह भुञ्जीत पूर्वं वा। एवमतिथिव्यतिरिक्तानन्यानपि भोजयितव्यान् पश्चादेव भोजयेत् ॥

**बालान्वृद्धान्रोगसंबद्धान् स्त्रीश्चान्तर्वत्नीः॥१२॥**

ये च गृहवर्तिनो बालादयः तानप्यग्रे भोजयेत्। 'अन्तर्वत्नीः' इत्येव सिद्धे स्त्रीग्रहणं स्वस्रादीनामपि ग्रहणार्थं; अन्तर्वत्नीग्रहणं सर्वपूर्वार्थम् ॥

**काले स्वामिनावन्नार्थिनं न प्रत्याचक्षीयाताम्॥**

---

[1] कोशान्तरेषु न दृश्यतेयं पाठः.　[2] आप. ध. २-३-१२.

[3] आप. ध. २-६-५.

काले वैश्वदेवान्ते अन्नार्थिनमुपस्थितं स्वामिनौ गृहपती न प्रत्याचक्षीयाताम्, अवश्यं किञ्चित्तस्मै देयमिति ॥

अभावे किं कर्तव्यम् । तत्राह—

**अभावे भूमिरुदकं तृणानि कल्याणी वागिति। एतानि वै सतोऽगारे न क्षीयन्ते कदा च नेति ॥ १४ ॥**

भूमिरुपवेशनयोग्या । उदकं पादप्रक्षाळनादियोग्यम् । तृणानि शयनासनयोग्यानि । कल्याणी वाक् 'स्वागतमायुष्मतेहास्यताम्, इत्यादिका । एतानि भूम्यादीनि तावत् सतः सत्पुरुषस्य निर्धनस्यापि गृहे कदापि न क्षीयन्ते । वै शब्दः प्रसिद्धौ । एतैरुपचारः कर्तव्यः । इति शब्दप्रयोगादेवं धर्मज्ञा उपदिशन्तीति ॥

**एवंवृत्तावनन्तलोकौ भवतः ॥ १५ ॥**

यौ गृहमेधिनौ विवाहादारभ्यान्तादेवंवृत्तौ भवतः तयोरनन्ता लोका भवन्ति । ज्योतिष्टोमादिभ्योऽपि हि कतिपयदिनसाध्येभ्यो दुष्करमेतदान्ताद्वृत्तम् ॥

**ब्राह्मणायानधीयानायासनमुदकमन्नमिति देयम् । न प्रत्युत्तिष्ठेत् ॥ १६ ॥**

यद्यनधीयानो ब्राह्मणोऽतिथिधर्मेणागच्छेत् तदा तस्मै आसनादिकं देयम्, प्रत्युत्थानन्तु न कर्तव्यम् । अस्मादेव ज्ञायते अधीयाने प्रत्युत्थेयमिति ॥

**अभिवादनायैवोत्तिष्ठेदभिवाद्यश्चेत् ॥ १७ ॥**

यदि पुनरसावनधीयानोपि 'दशवर्षं पौरसख्यम्[1]' इत्यादिना अभिवाद्यो भवति तदा अभिवादनायैवोत्तिष्ठेत् ॥

**राजन्यवैश्यौ च ॥ १८ ॥**

राजन्यवैश्यावधीयानावपि न प्रत्युत्तिष्ठेत् ब्राह्मणः । आसनादिकन्तु देयमिति ॥

**शूद्रमभ्यागतं कर्मणि नियुञ्ज्यात् । अथास्मै दद्यात् ॥ १९ ॥**

यदि शूद्रो द्विजातिं प्रत्यतिथिरागच्छति तदा तमुदकाहरणादौ कर्मणि नियुञ्ज्यात् नियुञ्जीत । अथ तस्मिन् कृते तस्मै भोजनं दद्यात् ॥

**दासा वा राजकुलादाहृत्यातिथिवच्छूद्रं पूजयेयुः ॥ २० ॥**

अथ वा ये अस्य गृहमेधिनो दासास्ते राजकुलादाहृत्य तं शूद्रमतिथिवत्पूजयेयुः । अत एव ज्ञायते 'शूद्राणामतिथीनां पूजार्थं व्रीह्यादिकं ग्रामेग्रामे राज्ञा स्थाप्यम्' इति ॥

**नित्यमुत्तरं वासः कार्यम् ॥ २१ ॥**

'उपासने गुरूणाम्'[2] इत्यादिना केषु चित्कालेषु यज्ञोपवीतं विहितं, इह तु प्रकरणाद्गृहस्थस्य नित्यमुत्तरं वासो धार्यमित्युच्यते ॥

---

[1] आप. ध. १-१४-१३.　[2] आप. ध. १-१५-१.

**अपि वा सूत्रमेवोपवीतार्थे ॥ २२ ॥**

अपि वा सूत्रमेव सर्वेषामुपवीतकृत्ये भवति, न वास एव। तत्र मनुः—

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्[1] । इति।

बोधायनस्तु—' कौशं सूत्रं वा त्रिस्त्रिवृद्यज्ञोपवीतम् '[2] इति ॥

**यत्र भुज्यते तत्समूह्य निर्हृत्यावोक्ष्य तं देशममत्रेभ्यो लेपांत्संकृष्याद्भिस्सꣳसृज्योत्तरतश्शुचौ देशे रुद्राय निनयेत् । एवं वास्तु शिवं भवति ॥ २३ ॥**

यत्र स्थाने भुज्यते तत्रत्यमुच्छिष्टादिकं समूह्य राशीकृत्य निर्हरेत्, अन्यतो निर्हृत्य तं देशमवोक्षेत्। ततोमत्रेभ्यो येषु पाकः कृतस्तान्यमत्राणि तेभ्योन्नलेपान्व्यञ्जनलेपांश्च संकृष्य काष्ठादिनापकृष्याद्भिस्संसृजेत् । संसृज्य गृहस्योत्तरतश्शुचौ देशे ' रुद्रायेदमस्तु ' इति निनयेत्। एवं कृते वास्तु शिवं समृद्धं भवति ॥

**ब्राह्मण आचार्यः स्मर्यते तु ॥ २४ ॥**

तु शब्दोवधारणार्थो भिन्नक्रमश्च । ब्राह्मण एव सर्वेषामाचार्यः स्मर्यते सर्वशास्त्रेषु। इहापि वक्ष्यति ' स्वकर्मब्राह्मणस्य '[3] इत्यादि। अनुवादोयमापदि कल्पान्तरं वक्तुम् ॥

तदाह—

**आपदि ब्राह्मणेन राजन्ये वैश्ये वाध्ययनम् ॥**

---

[1] मनु, २-४४. [2] बो. ध. १–८–५. [3] आप. ध. २-१०-४.

कर्तव्यमित्यध्याहार्यम् । ब्राह्मणस्याध्यापयितुरलाभ आपत् । तत्र ब्राह्मणेन राजन्ये वैश्ये वाध्ययनं कर्तव्यम्, न त्वनधीयानेन स्थातव्यम् । ब्राह्मणेनेति वचनाद्राजन्यवैश्ययोर्नायमनुकल्पः ॥

**अनुगमनं च पश्चात् ॥ २६ ॥**

अनुगमनं च पश्चात्पृष्ठतः कर्तव्यं यावदध्ययनम् । पश्चाद्ग्रहणं लज्जादिना कियत्यपि पार्श्वगतिर्मा भूदिति । सर्वशुश्रूषाप्रसङ्गे नियमः ब्राह्मणस्यानुगमनमेव शुश्रूषेति । तथा च गौतमः— 'अनुगमनं शुश्रूषा '[1] इति ॥

**तत ऊर्ध्वं ब्राह्मण एवाग्रे गतौ स्यात् ॥ २७ ॥**

ततोऽध्ययनादूर्ध्वं समाप्तेऽध्ययने ब्राह्मण एवाग्रतो गच्छेत् ॥

इति चतुर्थः खण्डः.

---

**सर्वविद्यानामप्युपनिषदामुपाकृत्यानध्ययनं तदहः ॥ १ ॥**

कर्मणि षष्ठी । सर्वविद्या अङ्गविद्या अप्युपनिषदः उपाकृत्याध्येतुमारभ्य तदहरनध्ययनं तस्मिन्नहन्यध्ययनं न कर्तव्यम् । उपनिषद्ग्रहणं प्राधान्यख्यापनार्थम्, ' ब्राह्मणा आयाता वसिष्ठोऽप्यायातः ' इतिवत् ॥

**अधीत्य चाविप्रक्रमणं सद्यः ॥ २ ॥**

'वेदमधीत्य स्नास्यन् '[2] इत्यवसरे आचार्यसकाशात्सद्यो

---

[1] गौ. ध. ७-२.　　[2] आप. गृ. १२-१.

विप्रक्रमणं न कर्तव्यम्, नापगन्तव्यम् । प्रायेण तु मकारात्पर-मिकारमधीयते । तत्राप्येष एवार्थः । इकारस्तु छान्दसोपपाठो वा ॥

**यदि त्वरेत गुरोस्समीक्षायाᳵ स्वाध्यायमधीत्य कामं गच्छेत् । एवमुभयोश्शिवं भवति ॥**

यदि कार्यवशाद्गन्तुं त्वरेत तदा गुरोराचार्यस्य समीक्षायां सन्दर्शने संभये स्वाध्यायं प्रश्नावरमधीत्य यथाकामं गच्छेत् । एवं कृते उभयोश्शिष्याचार्ययोश्शिवं भवति ॥

**समावृत्तं चेदाचार्योऽभ्यागच्छेत्तमभिमुखोऽभ्यागम्य तस्योपसङ्गृह्य न बीभत्समान उदकमुपस्पृशेत्पुरस्कृत्योपस्थाप्य यथोपदेशं पूजयेत् ॥ ४ ॥**

समावृत्तं चेच्छिष्यं कृतदारमाचार्योऽभ्यागच्छेत् अतिथिधर्मेण, तमभिमुखोऽभ्यागम्य तस्योपसङ्गृह्य कर्मणि षष्ठी, तमुपसङ्गृह्य । यद्यपि तस्य चण्डालादिस्पर्शस्संभाव्येत, तथापि न बीभत्समान उदकमुपस्पृशेत्, न स्नायात् । उपसङ्ग्रहणे* वा धूलिधूसरौ पादौ स्पृष्ट्वा न बीभत्समान उदकमुपस्पृशेत् । ततस्तं पुरस्कृत्य गृहप्रवेशे अग्रे कृत्वा पूजासाधनान्युपस्थाप्य यथोपदेशं गृह्योक्तेन मार्गेण मधुपर्केण पूजयेत् । पूजाविधानं गृह्योक्तस्यानुवादः आसनादिषु विशेषं वक्तुम् ॥

तमाह—

---

*ख–उपसंग्रहणकाले.

**आसने शयने भक्ष्ये भोज्ये वाससि वा सन्निहिते निहीनतरवृत्तिस्स्यात् ॥ ५ ॥**

सन्निहिते आचार्ये तस्मिन्नेव गृहे अपवरकादिकं प्रविष्टे आसनादिषु निहीनतरवृत्तिस्स्यात् । तरब्निर्देशान्नीचे आसने गुणतोऽपि निकृष्टे आसीत । एवं शयनादिष्वपि द्रष्टव्यम् ॥

**तिष्ठन्सव्येन पाणिनानुगृह्याचार्यमाचमयेत् ॥**

तिष्ठन्निति प्रह्व उच्यते स्थानयोगात्, न हि साक्षात्तिष्ठन्नाचमयितुं प्रभवति । सव्येन पाणिना करकादिकमनुगृह्याधस्ताद्गृहीत्वा इतरेण द्वारमवमृज्ये*त्यर्थसिद्धत्वादनुक्तम् । एवं कृत्वाचार्यमाचमयेत्स्वयमेव शिष्यः । एवं हि सम्मतो भवति । आचार्ये प्रकृते पुनरप्याचार्यग्रहणमातिथ्यादन्यत्राप्याचार्यमाचमयन्नेवमेवाचमयेदिति ॥

**अन्यं वा समुदेतम् ॥ ७ ॥**

वाशब्दस्समुच्चये । अन्यमप्येवमाचमयेत्, स चेत्समुदेतः कुलशीलविद्यावृत्तवयोभिरुपेतो भवति ॥

**स्थानासनचङ्क्रमणस्मिते†ष्वनुचिकीर्षन् ॥ ८ ॥**

व्यवहितमपि स्यादित्यपेक्षते । चिकीर्षया करणं लक्ष्यते । स्थानादिष्वाचार्यस्य पश्चाद्भावी स्यात्, न पूर्वभावी न युगपद्भावी ॥

**सन्निहिते मूत्रपुरीषवातकर्मोच्चैर्भाषाहासष्ठीवनदन्तस्खलन‡निशृङ्खणभ्रुक्षेपणतालननिष्ट्यानीति ॥ ९ ॥**

*ट—मुपस्पृज्ये, मवनम्ये, मपमृद्य. †ख. घ—स्थिते. ‡ख. घ. ज—स्कवन.

वातकर्मापानवायोरुत्सर्गः। उच्चैर्भाषा महता स्वनेन भाषणम्। केनापि हासो हसनम्। ष्ठीवनं श्लेष्मादिनिरसनम्। दन्तस्खलनं दन्तमलापकर्षणम्, परस्परसङ्घट्टनमित्यन्ये। निशृङ्खणं नासिकामलस्य निस्सरणम्। भ्रुक्षेपणं भ्रूविक्षेपणम्। छान्दसो ह्रस्वः। तालनं हस्तयोरास्फालनम्। निष्टचमङ्गुलिस्फोटनम्। इति शब्दादन्यदपि स्वैरासनादिकम्। वर्जयेदित्यपेक्षते, एतानि मूत्रकर्मादीनि आचार्यस्य सन्निधौ न कुर्यादिति॥

दारे प्रजायां चोपस्पर्शनभाषा विस्रम्भपूर्वाः परिवर्जयेत्॥ १०॥

उपस्पर्शनमालिङ्गनावघ्राणादि। भाषास्सम्भाषाश्चाटुप्रभृतयः। एतान्यप्याचार्ये सन्निहिते दारप्रजाविषयेपि विस्रम्भं न कुर्यात्। ज्वरादिपरीक्षायां न दोषः॥

वाक्येन वाक्यस्य प्रतिघातमाचार्यस्य वर्जयेत्॥ ११॥

आचार्यवाक्यस्य समीचीनस्येतरस्य वा आत्मीयेन वाक्येन तादृशेन प्रतिघातं न कुर्यात्॥

श्रेयसां च॥ १२॥

अन्येषामपि प्रशस्ततराणां वाक्यं वाक्येन न प्रतिहन्यात्॥

सर्वभूतपरीवादाक्रोशांश्च॥ १३॥

सर्वेषामेव भूतानां तिरश्चामपि परीवादान् दोषवादानाक्रोशानश्लीलवादांश्च वर्जयेत्। परीवादस्य पुनर्वचनमतिशयेन वर्जनार्थम्॥

## विद्यया च विद्यानाम् ॥ १४ ॥

विद्यया च विद्यानां परीवादाक्रोशान्वर्जयेत् । ऋग्वेद एव श्रोत्रसुखः, अन्ये श्रवणकटुका इति परीवादः । तैत्तिरीयकमुच्छिष्टशाखा याज्ञवल्क्यादीनि ब्राह्मणानीदानीन्तनानि* इत्यादय आक्रोशाः ॥

## यया विद्यया न विरोचेत पुनराचार्यमुपेत्य नियमेन साधयेत् ॥ १५ ॥

यया विद्ययाऽधीतया श्रुतया वा न विरोचेत न यशस्वी स्यात्, तामित्यर्थाद्गम्यते । तां विद्यां पुनस्साधयेत् यथा सम्यक्सिद्धा भवति तथा कुर्यात् । कथम्? आचार्यं तमेवान्यं वोपेत्य उपसाद्य नियमेनापूर्वाधिगमे विद्यार्थस्य यो नियम उक्तस्तेन शुश्रूषादिना ॥

अस्मिन्विषयेऽध्यापयितुर्नियमः—

## उपाकरणाद्योत्सर्जनादध्यापयितुर्नियमः । लोमसंहरणं मांसं श्राद्धं मैथुनमिति च वर्जयेत् ॥ १६ ॥

लोमसंहरणं लोमवापनम् । इदमनाहिताग्निविषयं, आहिताग्नेस्तु 'अत्यल्पशो लोमानि वापयत इति वाजसनेयिकम्'[1] ॥ इति ॥

## ऋत्वे वा जायाम् ॥ १७ ॥

---

*ठ—...ज्ञवल्क्यादीनां

[1] आप. श्रौ. ४-१-५.

ऋतुकाले वा जायामुपेयात् । ऋत्व इति रूपसिद्धिरेषा—स्त्रीणां ऋतुदिनानि षोडश, तत्र भवः काल ऋत्वः 'भवेच्छन्दसि' इति यत्प्रत्यये 'ऋत्व्यवास्त्व्य' इति सूत्रेण यणादेशो निपातितः, तत्र यलोपश्छान्दसः । चातुर्मास्येषु प्रयुक्तं 'ऋत्वे वा जायाम् । नोपर्यास्ते'[1] इत्यादि यथा ॥

**यथागमं शिष्येभ्यो विद्यासंप्रदाने नियमेषु च युक्तस्स्यात् । एवं वर्तमानः पूर्वापरान्सम्बन्धानात्मानं च क्षेमे युनक्ति ॥ १८ ॥**

यथा येन प्रकारेणागमः अर्थपाठयोस्तथैव शिष्येभ्यो निर्मत्सरेण विद्या संप्रदेया । एवंभूते विद्यासंप्रदाने युक्तः अवहितः स्यात् । ये च गृहस्थस्य नियमा अध्यापने अन्यत्र च, तेष्वपि युक्तस्स्यात् । एवं युक्तो वर्तमानः पूर्वापरान् पूर्वान् पितृपितामहप्रपितामहान् परांश्च पुत्रपौत्रनप्तॄन् संबन्धान्, कर्मणि घञ् । संबन्धिनश्च पुरुषानात्मानं च क्षेमे युनक्ति अभये स्थाने नाकपृष्ठे स्थापयति ॥

**मनसा वाचा प्राणेन चक्षुषा श्रोत्रेण त्वक्छिश्नोदरारम्भणानास्त्रावान्परीवृञ्जानोऽमृतत्वाय कल्पते ॥ १९ ॥**

यैः पुरुष आस्राव्यते बहिराकृष्यते ते आस्रावाः शब्दादयो विषयाः । ते विशिष्यन्ते—त्वक्छिश्नोदरारम्भणाः । आरभ्यन्ते

---

[1] आप. श्रौ. ८-४-६, ७.

आलभ्यन्त इत्यारम्भणाः । तत्र त्वगालम्भनाः स्रक्चन्दनादयः । शिश्नालम्भनं स्त्र्युपभोगः । उदरालम्भना भक्षभोज्यादयः । उपलक्षणं त्वगादिग्रहणम् । एवंभूतानास्त्रावान्मनआदिभिः पञ्चभिरिन्द्रियैः परीवृञ्जानस्सर्वतो वर्जयन्नमृतत्वाय मोक्षाय कल्पते । तत्र वागिति रसनेन्द्रियमाह, प्राण इति घ्राणम् ॥

इति पञ्चमः खण्डः.

इत्यापस्तम्बधर्मसूत्रवृत्तावुज्ज्वलायां द्वितीयप्रश्ने द्वितीयः पटलः.

---

**जात्याचारसꣳशये धर्मार्थमागतमग्निमुपसमाधाय जातिमाचारं च पृच्छेत् ॥ १ ॥**

अविज्ञातपूर्वो यो धर्मार्थमध्ययनार्थमागच्छेत् उपसीदेत् उपसन्नोस्मि भगवन्मैत्रेण चक्षुषा पश्य शिवेन मनसाऽनुगृहाण, प्रसीद मामध्यापयेति । तं जात्याचारसंशये सत्यग्निमुपसमाधाय 'यत्र क्व चाग्निम्'[1] इत्यादि 'अन्यदुपदध्यात्'[1] इत्यन्तं कृत्वा तत्सन्निधौ जातिमाचारञ्च पृच्छेत्, किंगोत्रोसि सौम्य, किमाचारश्चासि इति ॥

**साधुतां चेत्प्रतिजानीतेऽग्निरुपद्रष्टा वायुरुपश्रोतादित्योनुख्याता साधुतां प्रतिजानीते साध्वस्मा अस्तु वितथ एष एनस इत्युक्त्वा शास्तुं प्रतिपद्येत ॥ २ ॥**

---

[1]आप. ध. २-१-१३, १४.

स चेत्साधुतां प्रतिजानीते साधुजन्मास्मि, अमुष्य पुत्रोऽमुष्य पौत्रोमुष्य नप्ता, साध्वाचारश्चास्मि पित्रैवोपानायिषि, शिक्षिताचारश्चास्मि, सम्यक्चावर्तिषि, विधिबलेन तु बाल्य एव सर्वे दिष्टां गतिं गताः, एतस्मात्केवलमनधीतवेद इति। ततः 'अग्निरूपद्रष्टा' इत्यादिकं मन्त्रमुक्त्वा शास्तुं शासितुमध्यापयितुं धर्मांश्चोपदेष्टुं प्रतिपद्येत उपक्रमेत ॥

**अग्निरिव ज्वलन्नतिथिरभ्यागच्छति ॥ ३ ॥**

पञ्चयज्ञान्ते 'अतिथीनेवाग्रे भोजयेत्'[1] इत्युक्तम्। तत्प्रकारं वक्तुं तस्यावश्यकर्तव्यतामनेनाह—अतिथिर्गृहानभ्यागच्छन्नग्निरिव ज्वलन्नभ्यागच्छति। तस्मादसौ भोजनादिभिरवश्यं तर्पयितव्यः। निराशस्तु गतो गृहान् दहेदिति ॥

इदानीमतिथिलक्षणं वक्तुं तदुपयोगि श्रोत्रियलक्षणमाह—

**धर्मेण वेदानामेकैकां शाखामधीत्य श्रोत्रियो भवति ॥ ४ ॥**

विद्यार्थस्य यो नियमस्स धर्मः, तेन वेदानां यां कां चन शाखामधीत्य श्रोत्रियो भवति। पुरुषस्य हि प्रतिवेदमेकैका शाखा भवति। या पूर्वैः परिगृहीता अध्ययनानुष्ठानाभ्यां, सा प्रतिवेदं स्वशाखा। तामधीत्य श्रोत्रियो भवति। न तु प्रतिवेदमेकैकां शाखामधीत्य श्रोत्रियो भवति; लोकविरोधात्। लोके हि यां कां चन शाखामधीयानः श्रोत्रियः प्रसिद्धः ॥

अतिथिलक्षणमाह—

[1] आप. ध. २-४-११.

**स्वधर्मयुक्तं कुटुम्बिनमभ्यागच्छति धर्मपुरस्कारो नान्यप्रयोजनस्सोतिथिर्भवति ॥५॥**

आदितो यच्छब्दो द्रष्टव्यः, अन्ते स इति दर्शनात्। मध्ये च श्रोत्रियलक्षणोपदेशात्; तदुपजीवनेन सूत्रं योज्यम्। यः श्रोत्रियः स्वधर्मयुक्तं स्वधर्मनिरतं कुटुम्बिनं भार्यया सह वसन्तं गृहस्थम्। आश्रमान्तरनिरासार्थमिदमुक्तम्। न हि ते पचमाना भवन्ति, भिक्षवो हि ते। अभ्यागच्छति उद्दिश्यागच्छति। धर्मपुरस्कारः आचार्यार्थं भिक्षणं धर्मः, तं पुरस्करोतीति धर्मपुरस्कारः। कर्मण्यण्। धर्मप्रयोजनो नान्यप्रयोजनः। य एवंभूत एवंभूतमुद्दिश्य आगच्छति न यदृच्छया, सोतिथिरिति। बोधायनस्तु—'श्रान्तो दृष्टपूर्वः केवलमन्नार्थी नान्यप्रयोजनो यस्सोतिथिर्भवति'[1] अपि वा सर्ववर्णानामन्यतमः काले यथोपपन्नः सर्वेषामतिथीनां श्रेष्ठतमोतिथिर्भवति ॥

**तस्य पूजायाᳲ शान्तिस्स्वर्गः पुष्टिश्च ॥ ६ ॥**

तस्यातिथेः पूजायां कृतायां शान्तिरुपद्रवाणामिह भवति। प्रेत्य च स्वर्गलाभः ॥

**तमभिमुखोभ्यागम्य यथावयस्समेत्य तस्यासनमाहारयेत् ॥ ७ ॥**

तमतिथिमभिमुखोभ्यागच्छेत्। अभ्यागम्य यथावयः वयसोनुरूपं प्रत्युत्थानाभिवादनादिना समेयात्संगच्छेत्। समेत्य च तस्यासनमाहारयेत् शिष्यादिभिः, अभावे स्वयमेवाहरेत् ॥

**शक्तिविषये नाबहुपादमासनं भवतीत्येके ॥८॥**

शक्तौ सत्यामबहुपादमासनं न देयं, किन्तु बहुपादमेव पीठादिकमित्येके मन्यन्ते । स्वयं त्वबहुपादमप्यनुमन्यते ॥

**तस्य पादौ प्रक्षाळयेत् । शूद्रमिथुनावित्येके ॥ ९ ॥**

द्वौ शूद्रौ तस्य पादौ प्रक्षाळयेतामित्येके मन्यन्ते । दासवत इदम् ॥

अत्र विशेषः—

**अन्यतरोभिषेचने स्यात् ॥ १० ॥**

अभिषेचनं करकादिना जलावसेकः । तमेकः कुर्यात्, एकः प्रक्षाळनम् ॥

**तस्योदकमाहारयेन्मृन्मयेनेत्येके ॥ ११ ॥**

मृन्मयेन पात्रेण तस्योदकमाहर्तव्यमित्येके मन्यन्ते । स्वयन्तु तैजसेन ॥

**नोदकमाहारयेदसमावृत्तः ॥ १२ ॥**

यदा असमावृत्तो ब्रह्मचारी आचार्यप्रेषितस्स्वयमेव वातिथिरभ्यागच्छति तदा नासावुदकमाहारयेत्, नासावुदकाहरणस्य प्रयोजकः । नास्मा उदकमाहर्तव्यमिति ॥

**अध्ययनासांवृत्तिश्चात्राधिका ॥ १३ ॥**

अत्रासमावृत्तेऽतिथौ अध्ययनसंवृत्तिश्चाधिका इतरस्मादतिथेः । अध्ययनस्य सह*निष्पादनं अध्ययनसंवृत्तिः । यः प्रदेशः तस्यागच्छति स तेन सह कियन्तं कालं वक्तव्य इति । प्रसिद्धे तु पाठे पूर्वपदान्तस्य, समोकारस्य च छान्दसो दीर्घः ॥

---

*घ. ङ—समनिष्पादनम्.

**सान्त्वयित्वा तर्पयेद्रसैर्भक्ष्यैरद्भिरवरार्ध्येनेति ॥**

ततः पादप्रक्षालनस्य समध्ययनस्य वानन्तरमतिथिं प्रियवचनेन सान्त्वयेत् । सान्त्वयित्वा गव्यादिभिः रसैः फलादिभिश्च भक्ष्यैः, अद्भिरन्ततोऽद्भिरपि तावत्तर्पयेत् तृप्तं कुर्यात् । अवरार्ध्येनेति जघन्यकल्पतां सूचयति । अन्नेन इत्यर्थः । इति शब्दादेवमादिभिरन्यैरपि ॥

**आवसथं दद्यादुपरिशय्यामुपस्तरणमुपधानꣳ सावस्तरणमभ्यञ्जनं चेति ॥ १५ ॥**

आवसथो विश्रमस्थानम् । उपरिशय्या खट्वा । उपस्तरणं तूलिका । उपधानमुपबर्हणम्, अवस्तरणमुपरिपटः, तत्सहितमुपधानमुपस्तरणञ्च । अभ्यञ्जनं पादयोस्तैलं घृतं वा । एतत्सर्वं दद्याद्भोजनात्प्रागूर्ध्वं वा अपेक्षिते काले । इतिशब्दादन्यदप्यपेक्षितम् ॥

**अन्नसꣳस्कर्तारमाहूय व्रीहीन्यवान्वा तदर्थान्निर्वपेत् ॥ १६ ॥**

यः पचति तमन्नसंस्कर्तारमाहूय तदर्थानतिथ्यर्थान् व्रीहीन् यवान् वा निर्वपेत् पृथक्कृत्य दद्यात् अमुष्मै पचेति । व्रीहियवग्रहणमुपलक्षणम् ॥

इदं भुक्तवत्सु सर्वेष्वतिथावुपस्थिते द्रष्टव्यम् । भोजनकाले त्वाह—

**उद्धृतान्यन्नान्यवेक्षेत इदं भूया३ इदा३मिति ॥**

यावन्तो भोक्तारस्तावद्भागान्नान्युद्धृत्य पृथक्पात्रेषु कुर्यात् ।

सोयं संविभागः । तं कृत्वा नान्यन्नान्यवेक्षेत, किमिदं भूयः प्रभूतमिदं वेति । विचारे प्लुतः । 'पूर्वन्तु भाषायाम्' इत्येतन्नापेक्षितम् । छान्दस एवायं प्लुतप्रयोग इति ॥

भूय उद्धरेत्येव ब्रूयात् ॥ १८ ॥

एवमवेक्ष्यानित्यर्थं भूय उद्धरेत्येव ब्रूयात् ॥

द्विषन् द्विषतो वा नान्नमश्नीयाद्दोषेण वा मीमांसमानस्य मीमांसितस्य वा ॥ १९ ॥

यं स्वयमतिथिः द्विषन् भवति, यो वा आत्मानं द्वेष्टि, यो वात्मानं दोषेण मीमांसते आत्मनि स्तेयादिदोषं संभावयति, यो वा दोषेण मीमांसितः यत्र लौकिका दोषं संभावयन्ति, तस्यास्य सर्वस्यान्नं नाश्नीयात् ॥

तत्र हेतुः—

पाप्मानं हि स तस्य भक्षयतीति विज्ञायते॥२०

य एवंविधस्यान्नमश्नाति, स तस्य पाप्मानमेव भक्षयतीति विज्ञायते ॥

इति षष्ठः खण्डः.

---

स एष प्राजापत्यः कुटुम्बिनो यज्ञो नित्यप्रततः ॥ १ ॥

स एषोभिहितः मनुष्ययज्ञः प्राजापत्यः प्रजापतिना दृष्टः, तद्देवत्यो वा । कुटुम्बिनो नित्यप्रततो यज्ञः, नाग्निष्टोमादिवत्कादाचित्कः ॥

तस्याग्नीन् संपादयति—

**योऽतिथीनामग्निस्स आहवनीयो यः कुटुम्बे स गार्हपत्यो यस्मिन् पच्यते सोऽन्वाहार्यपचनः ॥ २ ॥**

योतिथीनां जाठरोग्निः स आहवनीयः, तत्र हि हूयते । यः कुटुम्बे गृहेग्निरौपासनः स गार्हपत्यः, नित्यधार्यत्वात् । यस्मिन् पच्यते भ्राष्ट्राग्नौ सोन्वाहार्यपचनः दक्षिणाग्निः, तत्र ह्यन्वाहार्यं पच्यते ॥

**ऊर्जं पुष्टिं प्रजां पशूनिष्टापूर्तमिति गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥ ३ ॥**

योतिथेः पूर्वमश्नाति स गृहाणां कुलस्य सम्बन्धि ऊर्गादिकमश्नाति भक्षयति विनाशयति । ऊर्गन्नम् । इष्टमग्निहोत्रादि । पूर्तं स्मार्तं कर्म खातादि । अन्ये प्रसिद्धाः ॥

**पय उपसेचनमन्नमग्निष्टोमसम्मितꣳ सर्पिषोक्थ्यसम्मितं मधुनातिरात्रसम्मितं माꣳसेन द्वादशाहसम्मितमुदकेन प्रजावृद्धिरायुषश्च ॥ ४ ॥**

पय उपसेचनं यस्य तदन्नमग्निष्टोमतुल्यम् । सर्पिषा उपसिक्तमन्नमिति प्रकरणाद्गम्यते तदुक्थ्यतुल्यम् । मधुना उपसिक्तमन्नमतिरात्रतुल्यम् । मांसेन सह दत्तमन्नं द्वादशाहतुल्यम् । उदकेन दत्तेन प्रजावृद्धिर्भवति, आयुषश्च । उपसमस्तमपि वृद्धिरिति संबद्ध्यते ॥

प्रिया अप्रियाश्चातिथयस्स्वर्गं लोकं गमयन्तीति विज्ञायते ॥ ५ ॥

अप्रिया उदासीनाः द्विषतो निषिद्धत्वात् ॥

स यत्प्रातर्मध्यंदिने सायमिति ददाति सवनान्येव तानि भवन्ति ॥ ६ ॥

त्रिषु कालेषु दीयमानान्यन्नानि अस्य यज्ञस्य प्रातस्सवनादीनि त्रीणि भवन्ति । तस्मात्सर्वेषु कालेषु दातव्यमिति ॥

यदनुतिष्ठत्युदवस्यत्येव तत् ॥ ७ ॥

यत् गन्तुमुत्तिष्ठन्तमतिथिमनूत्तिष्ठति तदुदवस्यत्येव उदवसानीया सास्य यज्ञस्येति । प्रायेण उच्छब्दं न पठन्ति, केवलमनुशब्दमेव पठन्ति, तत्राप्यर्थस्स एव ॥

यत्सान्त्वयति सा दक्षिणा प्रशꣳसा ॥ ८ ॥

यत्सान्त्वयति प्रशंसति सा प्रशंसा दक्षिणा ॥

यत्सꣳसाधयति ते विष्णुक्रमाः ॥ ९ ॥

संसाधनमनुव्रजनम् ॥

यदुपावर्तते सोवभृथः ॥ १० ॥

उपावर्तनं अनुव्रज्य प्रत्यागमनम् ॥

इति हि ब्राह्मणम् ॥ ११ ॥

अस्य सर्वैस्संबन्धः ॥

राजानं चेदतिथिरभ्यागच्छेच्छ्रेयसीमस्मै पूजामात्मनः कारयेत् ॥ १२ ॥

राजाऽभिषिक्तः क्षत्रियः। सोतिथयेभ्यागतायात्मनोपि सकाशाच्छ्रेयसीं पूजां कारयेत्पुरोहितेन ॥

**आहिताग्निं चेदतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयात्। व्रात्य क्वावात्सीरिति। व्रात्योदकमिति। व्रात्य तर्पयꣳस्त्विति॥१३॥**

यद्याहिताग्निमुद्दिश्यातिथिरभ्यागच्छेत्तत एनमतिथिं स्वयमेवाभिमुख उपसर्पेत्। अत्र स्वयमिति वचनादनाहिताग्निः अन्येन शिष्यादिना कारयन्नपि न दुष्यति। तमभ्युपेत्य ब्रूयात्। व्रात्य क्वावात्सीरिति कुशलप्रश्नः। व्रते साधुः व्रत्यः स एव व्रात्यः इति पूजाविधानम्। क्व पूर्वस्यां रात्रावुषितवानसीति। व्रात्योदकमिति उदकदानम्। व्रात्य तर्पयंस्त्विति रसादिभिस्तर्पयति। अनुस्वारसकारौ छान्दसौ। क्रियाभेदात् प्रतिमन्त्रमितिशब्दः। एतत्सर्वेषु कालेषु कर्तव्यम् ॥

**पुराग्निहोत्रस्य होमादुपाꣳशु जपेत्। व्रात्य यथा ते मनस्तथास्त्विति। व्रात्य यथा ते वशस्तथास्त्विति। व्रात्य यथा ते प्रियं तथास्त्विति। व्रात्य यथा ते निकामस्तथास्त्विति॥१४॥**

स यदि होमकालात्प्रागेवासीत तदा पुरा होमादपरेणाग्निं दर्भेषु सादयित्वा 'व्रात्य यथा ते मनः' इत्यादिकान्मन्त्रानुपांशु जपेत् ब्रूयात्। तत्र प्रतिमन्त्रमितिशब्दप्रयोगादर्थभेदाच्चतुर्णां

विकल्पः । समुच्चय इत्यन्ये । अत्र चाध्वर्युर्यजमानो वा यो होता स जपेत्ततो जुहुयात् ॥

**यस्योद्धृतेष्वहुतेष्वग्निष्वतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयात् । व्रात्यातिसृज होष्यामि । इत्यतिसृष्टेन होतव्यम् । अनतिसृष्टश्चेज्जुहुयाद्दोषं ब्राह्मणमाह ॥ १५ ॥**

उद्धृतेष्विति बहुवचनं सभ्यावसथ्यापेक्षया । यस्य नु त्रयोग्नयः तस्याहुतेष्वित्यनेन सामानाधिकरण्याद्धोमोपि त्रिष्वपि भवति । तेनाहवनीयहोमादनन्तरमतिथावागते त्रिषु होमो न कृत इति वक्ष्यमाणो विधिर्भवत्येव । कः पुनरसौ ? स्वयमेनमभ्युदेत्य ब्रूयात् 'व्रात्यातिसृज' अनुजानीहि होष्यामीति । ततो जुहुधीत्यतिसृजेत् । अतिसृष्टेन होतव्यम् । यदि पुनरनातिसृष्टोऽननुज्ञातो जुहुयात्तस्य दोषं ब्राह्मणवाक्यमाह । तदिदं सर्वमाथर्वणे पठितं प्रत्येतव्यम् । अत्र पक्षे स्वयं होमो नियतः ॥

**एकरात्रिं चेदतिथीन्वासयेत्पार्थिवान्लोकानभिजयति द्वितीययान्तरिक्ष्याꣳस्तृतीयया दिव्याꣳश्चतुर्थ्या परावतो लोकानपरिमिताभिरपरिमितान्लोकानभिजयतीति विज्ञायते ॥ १६ ॥**

य एकरात्रिमतिथीन्वासयति स पृथिव्यां भवान् लोकानभिजयति । द्वितीयया रात्र्या अन्तरिक्ष्यान् । तृतीयया दिव्यान् । चतुर्थ्या परावतः सुखस्य परा मात्रा येषु लोकेषु, तानभिजयति ।

अपरिमिताभी रात्रिभिरपरिमितान् लोकानभिजयतीति, विज्ञायते ब्राह्मणं भवति ॥

**असमुदेतश्चेदतिथिर्ब्रुवाण आगच्छेदासनमुदकमन्नꣳ श्रोत्रियाय ददामीत्येव दद्यात्। एवमस्य समृद्धं भवति ॥ १७ ॥**

विद्यादिरहितः असमुदेतः। स चेदतिथिरिति ब्रुवाण आगच्छेत् तदा तस्मै आसनादिकं श्रोत्रियाय ददामीत्येवं मनसि कृत्वा दद्यात्। एवं ददतोस्य तद्दानं समृद्धं भवति, श्रोत्रियायैव दत्तं भवति ॥

इति सप्तमः खण्डः.

इत्यापस्तम्बधर्मसूत्रवृत्तावुज्ज्वलायां द्वितीयप्रश्ने तृतीयः पटलः.

---

**येन कृतावसथस्स्यादतिथिर्न तं प्रत्युत्तिष्ठेत्प्रत्यवरोहेद्वा पुरस्ताच्चेदभिवादितः ॥ १ ॥**

येन गृहस्थेनातिथिः कृतावसथस्स्यात्, कृतावासः दत्तावासस्स्यात्, 'द्वितीययान्तरिक्ष्यान्'[1] इत्यादिवचनाद्द्वितीयादिष्वहस्सु तं प्रति न प्रत्युत्तिष्ठेत्, नाप्यासनात्प्रत्यवरोहेत्, स चेत्तस्मिन्नहनि पूर्वमेवाभिवादितः। अनभिवादिते तु अभिवादनाय प्रत्युत्तिष्ठेत् प्रत्यवरोहेच्च ॥

**शेषभोज्यतिथीनाꣳ स्यात् ॥ २ ॥**

---

[1] अ. प. ध. २-७-१६.

'अतिथीनेवाग्रे भोजयेत्'[1] इत्येव सिद्धे वचनमिदं प्रमादाद्यदन्नं न दत्तं अतिथये, तन्न भुञ्जीतेत्येवमर्थम् ॥

**न रसान्गृहे भुञ्जीतानवशेषमतिथिभ्यः ॥ ३ ॥**

आगामिभ्योतिथिभ्यो यथा न किञ्चिद्गृहेवशिष्यते तथा गव्यादयो रसा न भोज्या इति, सद्यः संपादयितुमशक्यत्वाद्रसानाम् ॥

**नात्मार्थमभिरूपमन्नं पाचयेत् ॥ ४ ॥**

आत्मानमुद्दिश्याभिरूपमन्नं स्वाद्वपूपादि न पाचयेत् ॥

**गोमधुपर्कार्हो वेदाध्यायः ॥ ५ ॥**

साङ्गस्य वेदस्याध्येता वेदाध्यायः । सोतिथिर्मधुपर्कमर्हति, गां च दक्षिणाम् ॥

**आचार्य ऋत्विक्स्नातको राजा वा धर्मयुक्तः ॥**

अवेदाध्याया अप्याचार्यादयो गोमधुपर्कार्हाः । अत एव ज्ञायते एकदेशाध्यायिनावप्यृत्विगाचार्यौ भवत इति । धर्मयुक्त इति राज्ञो विशेषणम् । वाशब्दस्समुच्चये ॥

**आचार्यायर्त्विजे श्वशुराय राज्ञे इति परिसंवत्सरादुपतिष्ठद्भ्यो गौर्मधुपर्कश्च ॥ ७ ॥**

एतद्गृह्ये व्याख्यातम्[2] । गौरत्र दक्षिणाधिका विधीयते ॥

कोसौ मधुपर्क इत्यत आह—

**दधि मधुसꣳसृष्टं मधुपर्कः पयो वा मधुसꣳसृष्टम् ॥ ८ ॥**

---

[1] आ. प. ध. २-४-११. [2] आप. गृ. ३-९.

गृह्योक्तस्यानुवादोयमुत्तरविवक्षया ॥

**अभाव उदकम् ॥ ९ ॥**

दधिपयसोरभावे उदकमपि देयम् । मधुसंसृष्टमित्येके । नेत्यन्ये, पूर्वत्र पुनर्मधुसंसृष्टग्रहणात्* ॥

'वेदाध्यायः'† इत्यत्र विवक्षितं वेदमाह–

**षडङ्गो वेदः ॥ १० ॥**

षड्भिरङ्गैर्युक्तो वेदो गृह्यते ॥

कानि तान्यङ्गानीत्यत आह–

**छन्दःकल्पो व्याकरणं ज्योतिषं निरुक्तं शीक्षा छन्दोविचितिरिति ॥ ११ ॥**

छन्दो वेदः, तत्कल्पयतीति प्रतिशाखं शाखान्तराधीतेन न्यायप्राप्तेन चाङ्गकलापेनोपेतस्य कर्मणः प्रयोगकल्पनयोपस्कुरुत इति छन्दःकल्पः, कल्पसूत्राणि । व्याकरणमर्थविशेषमाश्रित्य पदमन्वाचक्षाणं पदपदार्थप्रतिपादनेन वेदस्योपकारकं विद्यास्थानम् । सूर्यादीनि ज्योतींष्यधिकृत्य प्रवृत्तं शास्त्रं ज्योतिषम् । आदिवृद्ध्यभावे यत्नः कार्यः । तदप्यध्ययनोपयोगिनमनुष्ठानोपयोगिनं च कालविशेषं प्रतिपादयदुपकारकम् । निरुक्तमपि व्याकरणस्यैव कार्त्स्न्यम् । शीक्षा वर्णानां स्थानप्रयत्नादिकमध्ययनकाले कर्मणि च मन्त्राणामुच्चारणप्रकारं शिक्षयतीति । पृषोदरादित्वाद्दीर्घः । गायत्र्यादीनि छन्दांसि यया विचीयन्ते विवि-

---

*घ. ञ. 'उदकमपि मधुसंसृष्टमिति' इत्यधिकः पाठः.

†आप. ध. २–८–५.

च्य ज्ञायन्ते सा छन्दोविचितिः। एतान्यङ्गानि । अङ्गसंस्तवादङ्गत्वम्—

मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते ।
निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे ॥
शीक्षा घ्राणन्तु वेदस्य हस्तौ कल्पान् प्रचक्षते ॥ इति।

उपकारकत्वाच्च । उक्त उपकारः॥

अत्र चोदयति—

**शब्दार्थारम्भणानान्तु कर्मणाꣳ समाम्नायसमाप्तौ* वेदशब्दः । तत्र सङ्ख्या विप्रतिषिद्धा ॥ १२ ॥**

शब्दार्थतया यान्यारभ्यन्ते न प्रत्यक्षादिप्रमाणगोचरतया, तानि शब्दार्थारम्भणानि कर्माणि वैदिकानि अग्निहोत्रादीनि, तेषां समाम्नाय उपदेशः, तस्य समाप्तौ स यावता ग्रन्थजातेन समाप्तः अनुष्ठानपर्यन्तो भवति तत्र वेदशब्दो वर्तते, वेदयति धर्मं विदन्त्यनेनेति वा धर्ममिति । न च मन्त्रब्राह्मणमात्रेणानुष्ठानपर्यन्त उपदेशो भवति, किन्तु कल्पसूत्रैरपि सहितः । ततश्च तेषामपि वेदस्वरूप एवानुप्रवेशात् पञ्चैवाङ्गानि । तत्र षट् सङ्ख्या विप्रतिषिद्धेति ॥

परिहरति—

**अङ्गानां तु प्रधानैरव्यपदेश इति न्यायवित्समयः ॥ १३ ॥**

---

*घ. समाप्तो.

अङ्गान्येव कल्पसूत्राणि, न वेदस्वरूपाणि, पौरुषेयत्वस्मरणात्। कतिपयान्येव हि तेषु ब्राह्मणवाक्यानि, भूयिष्ठानि स्ववाक्यानि। अङ्गानाञ्च तेषां प्रधानवाचिभिश्शब्दैः, छन्दः, वेदः, ब्राह्मणम्, इत्यादिभिः व्यपदेशो न न्याय्य इति न्यायविदां सिद्धान्तः। ताविमौ पूर्वपक्षसिद्धान्तौ कल्पसूत्राधिकरणे स्पष्टतरं द्रष्टव्यौ। यत्तूक्तं न मन्त्रब्राह्मणमात्रेण पूर्ण उपदेश इति, न ह्येष स्थाणोरपराधो यदेनमन्धो न पश्यतीति, पुरुषापराधस्स भवति। इदन्तु भवानाचष्टां: कल्पसूत्रकाराणामियं प्रयोगकल्पना कुतस्त्येति। न्यायोपबृंहिताभ्यां मन्त्रब्राह्मणाभ्यामिति वक्तव्यम्। नान्या गतिः। एवं सति भवानपि यततां नादृशस्स्यामिति। ततो मन्त्रब्राह्मणाभ्यामेव पूर्णमवभोत्स्यत* इति॥

**अतिथिं निराकृत्य यत्र गते भोजने स्मरेत्ततो विरम्योपोष्य ॥ १४ ॥**

इत्यष्टमः खण्डः.

---

**श्वोभूते यथामनसं तर्पयित्वा संसाधयेत् ॥ १ ॥**

अतिथिमभ्यागतं केन चित्कारणेन निराकृत्य भोजने प्रवृत्तो यत्र गते यदवस्थां प्राप्ते भोजने स्मरेत् धिङ्मयासौ निराकृत इति, तत्रैव भोजनाद्विरम्य तस्मिन्नहन्युपोष्य अपरेद्युस्तमान्विष्य यथामनसं यथेच्छं तर्पयित्वा संसाधयेत् गच्छन्तमनुव्रजेत्॥

---

*घ. ट—पूर्णस्सेत्स्यतीति.

आ कुत इत्यत आह—

**यानवन्तमा यानात् ॥ २ ॥**

स चेदतिथिर्यानवान् भवति तमा तदारोहणादनुव्रजेत् ॥

**यावन्नानुजानीयादितरः ॥ ३ ॥**

इतरो यानरहितः । स यावन्नानुजानीयात् गच्छेति तावदनुव्रजेत् ॥

**अप्रतीभायाः सीम्नो निवर्तेत ॥ ४ ॥**

यदि तस्यान्यपरतया अनुज्ञायां प्रतिभा बुद्धिर्न जायते तदा सीम्नि प्राप्तायां ततो निवर्तेत । प्रतेर्दीर्घश्छान्दसः । संसाधयेत् इत्यादि सर्वातिथिसाधारणम्; न निराकृतमात्रविषयम् ॥

**सर्वान् वैश्वदेवे भागिनः कुर्वीता श्वचण्डालेभ्यः ॥ ५ ॥**

वैश्वदेवान्ते भोजनार्थमुपस्थितान् सर्वानेव वैश्वदेवे भागिनः कुर्वीत । आ श्वचण्डालेभ्यः । अभिविधावाकारः । तेभ्योपि किञ्चिद्देयम् । तथा च मनुः—

शुनां च पतितानां च श्वपचां पापरोगिणाम् ।
वायसानां क्रिमीणां च शनकैर्निक्षिपेद्भुवि[1] ॥ इति ॥

**नानर्हद्भ्यो दद्यादित्येके ॥ ६ ॥**

अनर्हद्भ्यश्चण्डालादिभ्यः न दद्यादित्येके मन्यन्ते । तत्र दाने अभ्युदयः, अदाने न प्रत्यवायः ॥

---

[1] मनु. ३-९२.

**उपेतः स्त्रीणामनुपेतस्य चोच्छिष्टं वर्जयेत्॥७॥**

उपेतः कृतोपनयनोऽसमावृत्तः, स स्त्रीणामनुपेतस्य च उच्छिष्टं न भुञ्जीत। एवं सति समावृत्तस्योच्छिष्टं भुञ्जानस्य न दोषस्स्यात्। एवं तर्ह्युपेतः आन्तात्कृतदारोकृतदारो वा स्त्रीणामनुपेतस्य चोच्छिष्टं वर्जयेत्। एवमप्युपेतस्य यस्य कस्य चिदपि यदुच्छिष्टं तद्भोजने न दोषः स्यात्। 'पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम्'[1] इत्येतन्नियमार्थं भविष्यति, पितुरेव भ्रातुरेवेति। यद्येवं, सूत्रमेवेदमनर्थकम्, तस्मादेव नियमादन्यत्राप्रसङ्गात्। इदं तर्हि प्रयोजनं—यदा पिताऽनुपेतः, पुत्रस्तु प्रायश्चित्तं कृत्वा कृतोपनयनः, तदा तं प्रति पितुरनुपेतस्योच्छिष्टं प्रतिषिध्यते। एवं ज्येष्ठोपि द्रष्टव्यः। एतदपि नास्ति प्रयोजनं, उक्तं हि— 'धर्मविप्रतिपत्तावभोज्यम्'[2] इति, 'तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत्'[3] इति च। तथा स्त्रीणामित्येतत्किमर्थं? मातुरुच्छिष्टप्रतिषेधार्थम्। कथं प्रसङ्गः? 'मातरि पितर्याचार्यवच्छुश्रूषा'[4] इति वचनात् 'यदुच्छिष्टं प्राश्नाति। हविरुच्छिष्टमेव तत्'[5] इत्याचार्योच्छिष्टस्य हविष्ट्वेन संस्तवाच्च। नैतदपि सारम्, 'पितुर्ज्येष्ठस्य च'[1] इत्यत्र पितुर्ग्रहणादेव तस्या अप्रसक्तेः। तस्मात्केषु चिज्जनपदेषु भार्यया अनुपनीतेन च सह भोजनमाचरन्ति, यथाह बोधायनः—'यानि दक्षिणतस्तानि व्याख्यास्यामः। यथैतदनुपनीतेन सह भोजनं स्त्रिया सह भोजनम्'[6] इति; तस्य दुराचारत्वमनेन प्रतिपाद्यते॥

**सर्वाण्युदकपूर्वाणि दानानि ॥ ८ ॥**

---

[1] आप. ध. १-४-११.  [2] आप. ध. १–४–१२.  [3] आप. ध. १-१-३३.
[4] आप. ध. १-१४-६.  [5] आप. ध. १–४–१, २.  [6] बो. ध. १-२-२, ३.

सर्वाणीति वचनाद्भिक्षाप्युदकपूर्वकमेव देया ॥

**यथाश्रुति विहारे ॥ ९ ॥**

विहारे यज्ञकर्मणि यानि दक्षिणादीनि दानानि तानि यथाश्रुत्येव, नोदकपूर्वाणि ॥

**ये नित्या भाक्तिकास्तेषामनुपरोधेन संविभागो विहितः ॥ १० ॥**

ये नित्या भाक्तिका भक्तार्हाः कर्मकरादयः तेषामुपरोधो यथा न भवति तथा वैश्वदेवान्ते आगतेभ्यः संविभागः कर्तव्यः॥

**काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्न त्वेव दासकर्मकरम् ॥ ११ ॥**

दासो भूत्वा यः कर्म करोति स दासकर्मकरः, तमात्माद्युपरोधेपि नोपरुन्ध्यात्, किं पुनरागतार्थं तं नोपरुन्ध्यादिति ॥

**तथा चात्मनोनुपरोधं कुर्याद्यथा कर्मसु समर्थः स्यात् ॥ १२ ॥**

कर्मसु अग्निहोत्रादिषु आर्जनेषु च यथा स्वयं समर्थो न भवति तथात्मानं नोपरुन्ध्यात्कुटुम्बी ॥

**अथाप्युदाहरन्ति ।**

**अष्टौ ग्रासा मुनेर्भक्षः षोडशारण्यवासिनः ।**
**द्वात्रिꣳशतं गृहस्थस्यापरिमितं ब्रह्मचारिणः ॥**
**आहिताग्निरनड्वाꣳश्च ब्रह्मचारी च ते त्रयः ।**
**अश्नन्त एव सिद्ध्यन्ति नैषाꣳ सिद्धिरनश्नतामिति ॥ १३ ॥**

अथैतस्मिन्नात्मानं नोपरुन्ध्यादिति विषये श्लोकावुदाहरन्ति। मुनेस्सन्न्यासिनः अष्टौ ग्रासा भक्षः, आ*स्याविकारेण। अरण्यवासी वानप्रस्थस्तस्य षोडश । द्वात्रिंशतं, प्रथमार्थे द्वितीया। द्वात्रिंशद्ग्रासा गृहस्थस्य भक्षः। ब्रह्मचारिणस्तु विद्यार्थस्य नैष्ठिकस्य च ग्रासनियमो नास्ति। द्वितीयेन श्लोकेनाहिताग्निविषये 'कालयोर्भोजनं'[1] इत्यपि नियमो नास्तीति प्रतिपाद्यते। अनडुद्ग्रहणं दृष्टान्तार्थम् । ब्रह्मचारिग्रहणं दृष्टार्थम्†। सिद्ध्यन्ति स्वकार्यक्षमा भवन्ति ॥

इति नवमः खण्डः.

इत्यापस्तम्बधर्मसूत्रवृत्तावुज्ज्वलायां द्वितीयप्रश्ने चतुर्थः पटलः.

---

**भिक्षणे निमित्तमाचार्यो विवाहो यज्ञो मातापित्रोर्बुभूर्षार्हतश्च नियमविलोपः ॥ १ ॥**

भिक्षणं याचनम्। तत्राचार्यादयो निमित्तम् । बुभूर्षा भर्तुमिच्छा। अर्हतो विद्यादिमतोऽग्निहोत्रादौ नियमे योग्यार्थस्याभावेन लोपः ॥

**तत्र गुणांत्समीक्ष्य यथाशक्ति देयम् ॥ २ ॥**

तत्रैवंभूते भिक्षणे याचतः श्रुतवृत्तादिकान् समीक्ष्य शक्त्यनुरूपमवश्यं देयम्, अदाने प्रत्यवायात्। गौतमस्तु निमित्तान्तरमप्याह-'गुर्वर्थनिवेशौषधार्थवृत्तिक्षीणयक्ष्यमाणाध्ययनाध्वसंयोगवैश्वजितेषु द्रव्यसंविभागो बहिर्वेदि। भिक्षमाणेषु कृतान्नमितरेषु'[2]

---

*ङ—ग्रासप्रमाणमा. †ख, ठ—दृष्टार्थं. ङ, ट—[नास्तीदं वाक्यम्].

[1] आप. ध. २-१-२. [2] गौ. ध. ५-२१, २२.

इति । वैश्वजितो विश्वजिद्यागस्य कर्ता । स च सर्वस्वदक्षिणः ॥

**इन्द्रियप्रीत्यर्थस्य तु भिक्षणमनिमित्तम् । न तदाद्रियेत ॥ ३ ॥**

इन्द्रियद्वारा आत्मनः प्रीतिः इन्द्रियप्रीतिः, तामर्थयमानो यो भिक्षते स्रक्चन्दनादि तन्मूल्यं वा, तद्भिक्षणं नियमेन दानस्य निमित्तं न भवति । तस्मान्न तदाद्रियेत, अदानेपि न प्रत्यवायः। विवाहोपि द्वितीयो न निमित्तम् सत्यां प्रथमायां धर्मप्रजासंपन्नायाम् । तदर्थमिदं वचनम्, अन्यत्र प्राप्त्यभावात् ॥

**स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यꣳ सिलोञ्छः ॥**

'सर्ववर्णानाꣳ स्वधर्मानुष्ठाने'[1] इत्युक्तम् । तेऽमी स्वधर्मा उच्यन्ते । पुत्रादिभ्यो दीयते इति दायः, तमादत्त इति दायादः, तस्य भावो दायाद्यम् दायस्वीकारः। क्षेत्रादिषु पतितानि मञ्जरीभूतानि ततश्च्युतानि वा धान्यानि सिलशब्दस्यार्थः । तेषामुञ्छनमङ्गुळीभिर्नखैर्वा आदानं सिलोञ्छः । एतान्यध्ययनादीन्यष्टौ ब्राह्मणस्य स्वकर्म । तेषु यज्ञदानाध्ययनानि त्रीणि द्विजातिसामान्येन कर्तव्यतया नियम्यन्ते, इतराण्यर्थितया द्रव्यार्जने प्रवृत्तस्योपायान्तरनिवृत्त्यर्थान्युपदिश्यन्ते, अध्यापनादिभिरेव द्रव्यमार्जयेत् न चौर्यादिभिरिति ॥

**अन्यच्चापरिगृहीतम् ॥ ५ ॥**

---

[1] आप. ध. २-२-२.

यच्चान्यत्केनाप्यपरिगृहीतं आरण्यं मूलफलादि, तेनापि जीवेदिति प्रकरणाद्गम्यते । एतेन निधिर्व्याख्यातः ॥

**एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानीति परिहाप्य दण्डयुद्धाधिकानि ॥ ६ ॥**

एतान्येव क्षत्रियस्यापि स्वकर्म अध्यापनादीनि त्रीणि वर्जयित्वा । दण्डलब्धं युद्धलब्धं चाधिकम् ॥

**क्षत्रियवद्वैश्यस्य दण्डयुद्धवर्जं कृषिगोरक्ष्यवणिज्याधिकम् ॥ ७ ॥**

गोरक्ष्यं गवां रक्षणम् । भावे ण्यत्प्रत्ययः । वणिजां कर्म वणिज्यम्, क्रयविक्रयव्यवहारः कुसीदं च । 'दूतवणिग्भ्यां च' इति यप्रत्ययः ॥

**नाननूचानमृत्विजं वृणीते न पणमानम् ॥८॥**

साङ्गस्य वेदस्याध्येता प्रवक्ता चानूचानः । अतादृशमृत्विजं न वृणीते, नाध्येतावद्देयमिति परिभाषमाणम् ॥

**अयाज्योऽनधीयानः ॥ ९ ॥**

अनधीतवेदं न याजयेत् तदानीमपेक्षितं मन्त्रं यथाशक्ति वाचयन् ॥

क्षत्रियस्य युद्धं स्वकर्मेत्युक्तम्, तत्कथं कर्तव्यमित्यत आह—

**युद्धे तद्योगा यथोपायमुपदिशन्ति तथा प्रतिपत्तव्यम् ॥ १० ॥**

युद्धविषये तथा प्रतिपत्तव्यम् यथा तद्योगा उपायमुपदि-

शन्ति । तस्मिन् युद्धकर्मणि युद्धशास्त्रे वा येषामभियोगस्ते तद्योगाः ॥

**न्यस्तायुधप्रकीर्णकेशप्राञ्जलिपराङावृत्तानामार्या वधं परिचक्षते ॥ ११ ॥**

न्यस्तायुधस्त्यक्तायुधः । प्रकीर्णकेशः केशान्विनियन्तुमक्षमः । प्राञ्जलिः कृताञ्जलिः । पराङावृत्तः पराङ्मुखः । सर्व एते भीताः । तेषां युद्धे वधं सन्तो गर्हन्ते । परिगणनादन्येषां वधे न दोषः । तथा च गौतमः—'न दोषो हिंसायामाहवे'[1] इति । 'न्यस्तायुधः प्रकीर्णकेशः' इति विसर्जनीयं केचिद्वदन्ति, सोपपाठः । पराङावृत्त इति ङकारश्छान्दसः ॥

**शास्त्रैरधिगतानामिन्द्रियदौर्बल्याद्विप्रतिपन्नानाꣳ शास्ता निर्वेषमुपदिशेद्यथाकर्म यथोक्तम् ॥**

यथाशास्त्रं गर्भाधानादिभिस्संस्कारैस्संस्कृताश्शास्त्रैरधिगताः। तेषामिन्द्रियदौर्बल्यादजितेन्द्रियतया विप्रतिपन्नानां स्वकर्मतः च्युतानां निषिद्धेषु च प्रवृत्तानां शास्ता शासिता आचार्यादिः निर्वेषं प्रायश्चित्तमुपदिशेत् यथाकर्म कर्मानुरूपं, यथोक्तं धर्मशास्त्रेषु ॥

**तस्य चेच्छास्त्रमतिप्रवर्तेरन् राजानं गमयेत् ॥ १३ ॥**

अजितेन्द्रियतया विप्रतिपन्ना नराः तस्य चेच्छासितुश्शास्त्रं

[1] गौ. ध. १०-१७.

शासनं अतिप्रवर्तेरन् न तत्र तिष्ठेयुः स राजानं गमयेत् एवमसौ करोतीति ॥

राजा पुरोहितं धर्मार्थकुशलम् ॥ १४ ॥

स राजा धर्मशास्त्रेष्वर्थशास्त्रेषु च कुशलं पुरोहितं गमयेत्, विनीयतामसाविति ॥

स ब्राह्मणान्नियुञ्ज्यात् ॥ १५ ॥

स पुरोहितो ब्राह्मणाश्चेदतिक्रमकारिणः प्रापितास्तान्नियुञ्ज्यात् नियुञ्जीत अनुरूपेषु प्रायश्चित्तेषु ॥

अथ यदि ते तत्रापि न तिष्ठेयुः तदा किं कर्तव्यमित्यत आह—

बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत् ॥ १६ ॥

ततस्तान्नियमैर्बन्धनोपवासादिभिरुपशोषयेत् । बलविशेषेण बलानुरूपम् । वधदास्यवर्जम्, वधस्ताडनादि, वधं दास्यं च वर्जयित्वा सर्वमन्यद्बन्धनादिकं बलानुरूपं कारयेत्, यावत्ते मन्येरंश्चरेम प्रायश्चित्तमिति ॥

इति दशमः खण्डः.

---

एवं ब्राह्मणविषय उक्तम्, इतरेष्वाह—

इतरेषां वर्णानामा प्राणविप्रयोगात्समवेक्ष्य तेषां कर्माणि राजा दण्डं प्रणयेत् ॥ १ ॥

इतरेषां ब्राह्मणव्यतिरिक्तानां वर्णानां राजा पुरोहितेनोक्तं

दण्डं स्वयमेव प्रणयेत् तेषां कर्माणि समवेक्ष्य तदनुरूपमा प्राणविप्रयोगात् ।अभिविधावाकारः ॥

न च संदेहे दण्डं कुर्यात् ॥ २ ॥

अपराधसन्देहे राजा दण्डं न कुर्यात् ॥

किन्तु–

सुविचितं विचित्या देवप्रश्नेभ्यो राजा दण्डाय प्रतिपद्येत ॥ ३ ॥

आ देवप्रश्नेभ्यः साक्षिप्रश्नादिभिश्शपथान्तैस्सुविचितं यथा भवति तथा विचित्य निरूप्य राजा दण्डाय प्रतिपद्येत उपक्रमेत ॥

एवं कुर्वतः फलमाह–

एवंवृत्तो राजोभौ लोकावभिजयति ॥ ४ ॥

एवंभूतं वृत्तं यस्य स एवंवृत्तः । अत्र मनुः–

अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति प्रेत्य स्वर्गाच्च हीयते ॥[1] इति ॥

गच्छतां प्रतिगच्छतां च पथि समवाये केन कस्मै पन्था देय इत्यत आह–

राज्ञः पन्था ब्राह्मणेनासमेत्य ॥ ५ ॥

राजात्राभिषिक्तः । स यदि ब्राह्मणेन समेतो न भवति तदा तस्य पन्था दातव्यः क्षत्रियैरप्यनभिषिक्तैः किंपुनरितरैः । एतदर्थमेवेदं वचनम् । अन्यत्र 'वर्णज्यायसां च' इति वक्ष्यमाणेनैव सिद्धम् ॥

समेत्य तु ब्राह्मणस्यैव पन्थाः ॥ ६ ॥

आपदि शिष्यभूतब्राह्मणविषयमिदम्। शिष्यभूतेनापि ब्राह्मणेन समेत्य तस्यैव गुरुणापि राज्ञा पन्था देय इति ॥

यानस्य भाराभिनिहतस्यातुरस्य स्त्रिया इति सर्वैर्दातव्यः ॥ ७ ॥

यानं शकटादि। भाराभिनिहतो भाराक्रान्तः। आतुरो व्याधितः। स्त्री या काचिदपि। एतेभ्यस्सर्वैरेव वर्णैः पन्था दातव्यः। इति शब्दात् स्थविरबालकृशादिभ्यः ॥

वर्णज्यायसां चेतरैर्वर्णैः ॥ ८ ॥

वर्णेनोत्कृष्टा वर्णज्यायांसः, तेषां चेतरैरपकृष्टैर्वर्णैः बाह्यैश्च पन्था दातव्यः ॥

अशिष्टपतितमत्तोन्मत्तानामात्मस्वस्त्ययनार्थेन सर्वैरेव दातव्यः ॥ ९ ॥

अशिष्टो मूर्खः। अन्ये प्रसिद्धाः। एतेषां सर्वैरेव सजातीयैरुत्कृष्टैरपकृष्टैर्वर्णैर्बाह्यैश्च दातव्यः। आत्मस्वस्त्ययनमात्मत्राणम्, तेन प्रयोजनेन तदर्थम्, न त्वदृष्टार्थमित्यर्थः। अत्र कौटिल्येन देयस्य पथः प्रमाणमुक्तम्—

पञ्चारत्नी रथपथश्चत्वारो हस्तिपथः द्वौ क्षुद्रपशुमनुष्याणाम्। इति ॥

धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ ॥ १० ॥

धर्मचर्यया स्वधर्मानुष्ठानेन जघन्यो वर्णः शूद्रादिः पूर्वं पूर्वं वर्णं वैश्यादिं आपद्यते प्राप्नोति। जातिपरिवृत्तौ जन्मपरिवर्तने। शूद्रो वैश्यो जायते। तत्रापि स्वधर्मनिष्ठः क्षत्रियो जायते। तत्रापि स्वधर्मपरो ब्राह्मण इति। एवं क्षत्रियवैश्ययोरपि द्रष्टव्यम् ॥

**अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ॥ ११ ॥**

पूर्वेण गतम्। महापातकव्यतिरिक्ताधर्मानुष्ठानविषयमेतत्, महापातकेषु 'स्तेनोऽभिशस्त'[1] इत्यादिना नीचजातिप्राप्तेरुक्तत्वात् ॥

**धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत ॥ १२ ॥**

श्रौतेषु गार्ह्येषु स्मार्तेषु च श्रद्धा भक्तिश्च धर्मसंपत्तिः। प्रजासंपत्तिः पुत्रवत्त्वम्। एवंभूते दारे सति नान्यां; 'दारे' इति प्रकृते अन्यामिति स्त्रीलिङ्गनिर्देशात्तत्रार्थाद्भार्यामिति गम्यते। नान्यां भार्यां कुर्वीत नोद्वहेत् ॥

**अन्यतराभावे कार्या प्रागग्न्याधेयात् ॥ १३ ॥**

धर्मप्रजयोरन्यतरस्याभावे कार्या उद्वाह्या। तत्रापि प्रागग्न्याधेयात् नोर्ध्वमाधानात्। एतदर्थमेवेदं वचनम्। उभयसंपत्तौ न कार्येत्युक्ते अर्थादन्यतराभावे कार्येत्यस्यांशस्य प्राप्तत्वात्। यदा चान्यतराभावेपि कार्या तदा का शङ्का उभयाभावेपि कार्येति ॥

'प्रागग्न्याधेयात्' इत्यत्र हेतुः—

**आधाने हि सती कर्मभिस्संबध्यते येषामेतदङ्गम् ॥ १४ ॥**

[1] आप. ध—२–२–६.

हि यस्मादाधाने सती विद्यमाना सहान्विता कर्मभिस्सम्बध्यते अधिक्रियते। कैः? येषामग्निहोत्रादीनामेतदाधानमङ्गमुपकारकं तैः। अत्र सतीति वचनान्मृतायां तु प्रागूर्ध्वं चाधानात्सत्यामपि पुत्रसंपत्तौ धर्मसंपत्त्यर्थं दारग्रहणं भवत्येव। तथा च मनुः—

भार्यायै पूर्वमारिण्यै दत्त्वाग्नीनन्त्यकर्मणि।
पुनर्दारक्रियां कुर्यात्पुनराधानमेव च ॥[1] इति।

याज्ञवल्क्योपि—

दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः।
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥[2] इति।

न वाचनिकेर्थे युक्तयः क्रमन्ते। तेनैतन्न चोदनीयम्—यजमानः पूर्वमेवान्वारम्भणीयया संस्कृतः, न तस्यायं संस्कारः पुनरापादयितुं शक्यः, भार्या च पूर्वमसंस्कृता, न तस्या दर्शपूर्णमासादिष्वधिकारः स कथं तया यष्टुमर्हतीति। अन्वारम्भणीयाजन्यश्च संस्कारो यदि संयोगवदुभयनिष्ठः तदा भार्यानाशे नश्यतीति पुरुषस्य पुनस्संस्कारोपि* न नोपपन्नः। यानि चान्वारम्भणीयां नापेक्षन्ते स्मार्तानि गार्ह्याणि च तैरधिकारस्तस्या अप्यविरुद्धः। ननु च प्रागग्न्याधानात्कर्मभिस्संबध्यते गार्ह्यैस्स्मार्तैश्च, तत्किमुच्यते 'आधाने हि सती कर्मभिस्संबद्ध्यते' इति। सत्यम्। अस्मादेव हेतुनिर्देशादवसीयते प्रागाधानात्सत्यामपि धर्मसंपत्तौ प्रजासंपत्तौ च रागान्धस्य कदाचिद्दारग्रहणे नातीव

---

*क, ख—कोशयोः 'संस्कारोपि' इत्येतदनन्तरं 'नोपपन्नः। भूयस्त्वन्वारम्भणीयामपेक्षते। अन्वारम्भणीयासंस्कारः केवलं पुरुषनिष्ठः। अतः कृतान्वारम्भणीयाकस्य पुरुषस्योत्तरक्रियास्वधिकारः उपपन्नः। स्मार्तानि गार्ह्याणि चैतदधिकाराणीति तस्या अप्यविरुद्धः' इत्येव दृश्यते.

[1]मनु—५-१६८. [2]या. स्मृ—१, ८९.

दोष इति । अथ यस्याहिताग्नेर्भार्या सत्येव कर्मसु श्रद्दधाना शक्ता वा न भवति, पुत्राश्च मृता अनुत्पन्ना वा तस्य कथम्? यद्येषा युक्तिः 'धर्मप्रजासंपन्ने' इति 'कर्मभिस्संबद्ध्यते' इति च तदा कर्तव्यो विवाहः । न च प्रागग्न्याधेयादित्यस्य विरोधः; 'अन्यतराभावे कार्या' इत्यस्यैव स शेषः न पुनरुभयाभावे कार्येत्यस्य। भारद्वाजसूत्रे तु—यद्यप्यविशेषेण आहिताग्नेर्दारक्रियाऽभ्यनुज्ञाता प्रतीयते—'अथ यद्याहिताग्निः पुनर्दारं कुर्वीत यदग्नीन्नोत्सृजेल्लौकिकास्सम्पद्येरन् तस्य पुनरग्न्याधेयं कुर्वीतेत्याश्मरथ्यः । पुनराधानमित्यालेखनः । पुनरग्न्याधेयमेव कुर्वीतेत्यौडुलोमिः' इति, तस्याप्येतदेव विषयः ॥

**सगोत्राय दुहितरं न प्रयच्छेत् ॥ १५ ॥**

कन्यागोत्रमेव गोत्रं यस्य तस्मै कन्या न देया, हारीताय हारीता, वात्स्याय वात्स्यायनीत्यादि ॥

**मातुश्च योनिसंबन्धेभ्यः ॥ १६ ॥**

मातुर्योनिसंबन्धाः कन्याया मातुलादयः, चकारात्पितुरपि । एवं तेभ्योऽसगोत्रेभ्योऽपि कन्या न देया । अत्र मनुः—

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने[1] ॥ इति ।

व्यासस्तु—

ज्ञात्वा समुद्वहेत्कन्यां सवर्णां लक्षणान्विताम् ।
यवीयसीं भ्रातृमतीमसगोत्रां प्रयत्नतः ॥
मातुस्सगोत्रामप्येके नेच्छन्त्युद्वाहकर्मणि ।
जन्मनाम्नोरविज्ञाने उद्वहेदविशङ्कितः ॥

---

[1] मनु—३-५.

मातुस्सपिण्डा यत्नेन वर्जनीया द्विजातिभिः ॥ इति ।

गौतमः—'असमानप्रवरैर्विवाहः । ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च । मातृबन्धुभ्यः पञ्चमात् '[1] इति ।

शङ्खः—'दारानाहरेत्सदृशानसमानार्षेयानसंबन्धाना सप्तमपञ्चमान्पितृमातृबन्धुभ्यः ' इति ।

वसिष्ठः—'गृहस्थो वीतक्रोधहर्षो गुरुणानुज्ञातः स्नात्वाऽसमानार्षेयामस्पृष्टमैथुनामवरवयसीं सदृशीं भार्यां विन्देत पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः '[2] इति ।

हारीतः—'श्वित्री कुष्ठ्युदरी यक्ष्मामयाव्यप्यल्पायुरनार्षेयमब्रह्मसमानार्षेयमित्येतान्यपतितान्यपि कुलानि वर्जनीयानि भवन्ति । कुलानुरूपाः प्रजा भवन्तीत्यादितः षडयज्ञीयत्वादनार्षेयमवेदत्वादब्रह्म एककुलत्वात् समानार्षेयमिति तस्मात्सप्त पितृतः परीक्ष्य पञ्च मातृतोनग्निकां श्रेष्ठां भ्रातृमतीं भार्यां विन्देत ' इति ।

पैठीनसिः—'असमानार्षेयां कन्यां वरयेत् पञ्च मातृतः परिहरेत्सप्त पितृतस्त्रीन्मातृतः पञ्च पितृतो वा ' इति । याज्ञवल्क्यः—

अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ।
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।
पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥[3] इति ।

विष्णुः 'असगोत्रामसमानप्रवरां भार्यां विन्देत मातृतः पञ्चमात् पितृतस्सप्तमात् ' इति । नारदः—

आ सप्तमात्पञ्चमाच्च बन्धुभ्यः पितृमातृतः ।

---

[1] गौ. ध—४-२...५. [2] वा. ध—१८—१, २. [3] या. स्मृ—१—५२, ५३.

अविवाह्यास्सगोत्रास्स्युः समानप्रवरास्तथा ॥[1] इति ।

शातातपः—

परिणीय सगोत्रां तु समानप्रवरां तथा ।
कृत्वा तस्यास्समुत्सर्गमतिकृच्छ्रं विशोधनम् ॥
मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥ इति ।

मनुः—

पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च ।
मातुश्च भ्रातुराप्तां च गत्वा चान्द्रायणं चरेत् ॥
एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् ।
ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः ॥[2] इति ।

बोधायनः—समानगोत्रां चेदुपयच्छेन्मातृवदेनां बिभृयात् सगोत्रां गत्वा चान्द्रायणमुपदिशेत् । व्रते परिनिष्ठिते ब्राह्मणीं न त्यजेत् । तां मातृवद्भगिनीवत् । गर्भो न दुष्यति, काश्यप इति विज्ञायते । अथ सन्निपातेविवाहस्तदद्ध्याय वर्जयेत् बोधायनस्य हि तत्प्रमाणं कर्तव्यम् । मानव्यो हि प्रजा इति विज्ञायते ।

गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ॥
एक एव ऋषिर्यावत्प्रवरेष्वनु वर्तते ।
तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरोगणात् ॥[3] इति ।

सुमन्तुः—'पितृपत्न्यस्सर्वा मातरः तद्भ्रातरो मातुलाः तत्सुता मातुलसुतास्तद्भगिन्यो मातृभगिन्यस्तस्मात्ता नोपयन्तव्याः' इति ॥

---

[1] ना. स्मृ—१२-७. [2] मनु—११-१७२, १७३. [3] बो. प्रवरखण्डे.

कन्यादानप्रसङ्गाद्विवाहभेदानाह—

**ब्राह्मे विवाहे बन्धुशीलश्रुतारोग्याणि बुध्वा प्रजाऽ सहत्वकर्मभ्यः प्रतिपादयेच्छक्तिविषयेणालङ्कृत्य ॥ १७ ॥**

ब्रह्मणा दृष्टो ब्राह्मः। तस्मिन् विवाहे वरस्य बन्ध्वादीन्बुद्ध्वा परीक्ष्य प्रजां दुहितरं सहत्वकर्मभ्यस्सहकर्तव्यानि यानि कर्माणि तेभ्यस्तानि कर्तुं प्रतिपादयेत् दद्यात्। शक्तिविषयेण, विभक्तिप्रतिरूपोयं निपातः यथाशक्तीत्यर्थे द्रष्टव्यः। यथाशक्त्यलङ्कृत्य दद्यादिति। एष ब्राह्मो विवाहः। प्रजासहत्वकर्मभ्य इति पाठे प्रजार्थं सहत्वकर्मार्थञ्चेति ॥

**आर्षे दुहितृमते मिथुनौ गावौ देयौ ॥ १८ ॥**

ऋषिभिर्दृष्टे विवाहे मिथुनौ गावौ स्त्रीगवी पुंगवश्च दुहितृमते देयौ। एष आर्षः ॥

**दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेत् ॥ १९ ॥**

दैवैर्दृष्टे विवाहे यज्ञतन्त्रे वितते ऋत्विजे कर्म कुर्वते कन्यां दद्यादेष दैवो विवाहः ॥

**मिथः कामात्सांवर्तेते स गान्धर्वः ॥ २० ॥**

यत्र कन्यावरौ मिथो रहसि कामात्परस्परं संवर्तेते मिथुनी भवतः स गान्धर्वो विवाहः। समो दीर्घः पूर्ववत्। अत्र संयोगादुत्तरकालं विवाहसंस्कारः कर्तव्यः ॥

इत्येकादशः खण्डः.

**शक्तिविषयेण द्रव्याणि दत्वाऽऽवहेरंत्स आसुरः॥**

यत्र विवाहे कन्यावते यथाशक्ति द्रव्याणि दत्वा आवहेरन् कन्यां स आसुरः। 'वित्तेनानतिः स्त्रीमतामासुरः'[1] इति गौतमः। तेन कन्यायै गृहक्षेत्राभरणादिदानेन विवाहो नासुरः॥

**दुहितृमतः प्रोथयित्वावहेरन् स राक्षसः ॥२॥**

दुहितृमतः कन्यावतः पित्रादीन् प्रोथयित्वा प्रमथ्य यत्रावहेरन् स राक्षसो विवाहः। 'हत्वा भित्वा च शीर्षाणि रुदन्तीं रुदद्भ्यो हरेत्स राक्षसः'[2] इत्याश्वलायनः। अत्रापि विवाहसंस्कारः कर्तव्यः— द्वौ चापरौ विवाहौ शास्त्रान्तरेषूक्तौ। तत्र आश्वलायनः—'सह धर्मं चरत इति प्राजापत्यः। सुप्तां प्रमत्तां वा हरेत्स पैशाचः'[2] इति। नाविह पृथगुक्तौ, ब्राह्मराक्षसयोरन्तर्भावादिति॥

**तेषां त्रय आद्याः प्रशस्ताः पूर्वः पूर्वः श्रेयान्॥३॥**

तेषां विवाहानां मध्ये आद्यास्त्रयो ब्राह्मार्षदैवाः प्रशस्ताः, तत्रापि पूर्वः पूर्वोऽतिशयेन प्रशस्त इति॥

**यथायुक्तो विवाहस्तथा युक्ता प्रजा भवति॥४॥**

प्रशस्ते विवाहे जाता प्रजा प्रशस्ता भवति। निन्दिते निन्दिता। तत्र मनुः—

ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः।
ब्रह्मवर्चसिनः पुत्रा जायन्ते शिष्टसम्मताः॥
रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः।
पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः॥

---

[1] गौ. ध—४-११ [2] आश्व. गृ. १-६-१.

इतरेषु तु जायन्ते नृशंसानृतवादिनः ।
तनया दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥[1] इति ।

प्राजापत्येन सह ब्राह्माद्याश्चत्वारो विवाहा ब्राह्मणस्य, गान्धर्वराक्षसौ क्षत्रियस्य, आसुरस्तु वैश्यशूद्रयोः, पैशाचो न कस्यचिदिति ॥

**पाणिसमूढं ब्राह्मणस्य नाप्रोक्षितमभितिष्ठेत् ॥ ५ ॥**

ब्राह्मणस्य पाणिना समूढं उपलिप्तं संमृष्टं वा भूमिप्रदेशमप्रोक्षितं नाभितिष्ठेत्, किन्तु प्रोक्ष्यैवाधितिष्ठेत् ॥

**अग्निं ब्राह्मणं चान्तरेण नातिक्रामेत् ॥ ६ ॥**

अग्नेर्ब्राह्मणस्य च मध्ये न गच्छेत् ॥

**ब्राह्मणांश्च ॥ ७ ॥**

अन्तरेण नातिक्रामेदित्येव, ब्राह्मणानां च मध्ये न गच्छेत् ॥

**अनुज्ञाप्य वातिक्रामेत् ॥ ८ ॥**

स्पष्टम् ॥

**अग्निमपश्च न युगपद्धारयीत ॥ ९ ॥**

अग्निमुदकञ्च न युगपद्धारयेत् ॥

**नानाग्नीनां च सन्निवापं वर्जयेत् ॥ १० ॥**

पृथगवस्थितानामग्नीनामेकत्र समावपनं न कुर्यात् । अग्नावग्निं न प्रक्षिपेदित्यन्ये ॥

**प्रतिमुखमग्निमाह्रियमाणं नाप्रतिष्ठितं भूमौ**

[1] मनु. ३-३९...४१.

**प्रदक्षिणीकुर्यात् ॥ ११ ॥**

यदास्य गच्छतः प्रतिमुखमग्निराह्रियते तदा न तं प्रदक्षिणीकुर्यात् । स चेद्भूमौ प्रतिष्ठितो न भवति । प्रतिष्ठिते त्वग्नौ दृष्टे प्रदक्षिणीकुर्यादिति ॥

**पृष्ठतश्चात्मनः पाणी न सꣳश्लेषयेत् ॥ १२ ॥**

स्वे पृष्ठभागे स्वपाणिद्वयं न संश्लेषयेत् न बध्नीयात् ॥

**स्वपन्नभिम्रुक्तोऽनाश्वान्वाग्यतो रात्रिमासीत श्वोभूत उदकमुपस्पृश्य वाचं विसृजेत् ॥ १३ ॥**

सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।
अंशुमानभिनिम्रुक्ताभ्युदितौ तौ यथाक्रमम् ॥

तयोः अभिनिम्रुक्तोऽनाश्वानभुञ्जानस्तूष्णीं सर्वां रात्रिमासीत न शयीत । अथापरेद्युः प्रातस्स्नात्वा वाचं विसृजेत् । अयमस्य निर्वेषः ॥

**स्वपन्नभ्युदितोऽनाश्वान्वाग्यतोहस्तिष्ठेत् ॥ १४ ॥**

पूर्वेण गतम् । उदकमुपस्पृश्य वाचं विसृजेदित्यत्रापेक्षते । तत्रास्तमिते स्नानप्रतिषेधात्सायमेव स्नात्वा वाचं विसृज्य सन्ध्यामुपासीत ॥

**आतमितोः प्राणमायच्छेदित्येके ॥ १५ ॥**

यावदङ्गानां ग्लानिर्भवति तावत्प्राणमायच्छेत्, प्राणवायुमाकृष्य धारयेत् । प्राणायामं कुर्यादित्येके मन्यन्ते । शक्त्यपेक्षो विकल्पः । अत्र मनुः—

सव्याहृतीं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामस्स उच्यते ॥ इति ।

एतमावर्तयेत् यावद्ग्लानिर्भवति ॥

**स्वप्नं वा पापकं दृष्ट्वा ॥ १६ ॥**

पापकः स्वप्नो दुस्स्वप्नः मर्कटास्कन्दनादिः तं च दृष्ट्वा ॥

**अर्थं वा सिषाधयिषन् ॥ १७ ॥**

अर्थः प्रयोजनं तं च दृष्टमदृष्टं वा साधयितुमिच्छन् ॥

**नियमातिक्रमे चान्यस्मिन् ॥ १८ ॥**

नियमो नाम 'उदङ्मुखो मूत्रं कुर्यात्'[1] इत्यादीनामतिक्रमे च । 'आतमितोः प्राणमायच्छेत्' इति सर्वत्र शेषः ॥

**दोषफलसंशये न तत्कर्तव्यम् ॥ १९ ॥**

यस्मिन्कर्मणि कृते पक्षे दोषः फलं संभाव्यते न तत्कुर्यात्, यथा सभये देशे एकाकिनो गमनमिति ॥

**एवमध्यायानध्याये ॥ २० ॥**

संशय इत्युपसमस्तमप्यपेक्षते । अध्यायोनध्याय इति संशयेप्येवं न तत्कर्तव्यमिति । 'सन्ध्यावनुस्तनिते'[2] इत्युदाहरणम् । पूर्वस्यैवायं प्रपञ्चः ॥

**न संशये प्रत्यक्षवद्ब्रूयात् ॥ २१ ॥**

संशयितमर्थमात्मनोऽज्ञानपरिहाराय प्रत्यक्षवन्निश्चितवन्न ब्रूयात् ॥

**अभिनिम्रुक्ताभ्युदितकुनखिश्यावदाग्रदिधिषुदि-**

---

[1]आप. ध. १-३१-१. [2]आप. ध. १-९-२०.

घिषूपतिपर्याहितपरीष्टपारीवित्तपारीविन्नपरिविविदानेषु चोत्तरोत्तरस्मिन्नशुचिकरनिर्वेषो गरीयान् गरीयान् ॥ २२ ॥

आद्यौ द्वौ गतौ। कुनखी, कृष्णनखः। श्यावा दन्ता यस्य श्यावदन् कृष्णदन्तः। 'विभाषा श्यावारोकाभ्याम्' इति दत्रादेशः, तस्यान्तलोपश्छान्दसः। ज्येष्ठायामनूढायां पूर्वं कनीयस्या वोडा अग्रदिधिषुः, पश्चादितरस्या वोढा दिधिषूपतिः। ज्येष्ठे अकृताधाने कृताधानः कनिष्ठः पर्याधाता, ज्येष्ठः पर्याहितः। ज्येष्ठे अकृतसोमयागे कृतसोमयागः कनिष्ठः परियष्टा, ज्येष्ठः परीष्टः। अकृतविवाहे ज्येष्ठे कृतविवाहः कनिष्ठः परिवित्त इति प्रसिद्धः, ज्येष्ठः परिवित्तिः। ज्येष्ठस्य भार्यामुपयच्छमानः परिविन्नः, यस्मिन्नगृहीतभागे वा कनिष्ठो भागं गृह्णाति स ज्येष्ठः परिविन्नः, कनिष्ठः परिविविदानः। चकारः पर्याधातृप्रभृतीनां समुच्चयार्थः। एतेष्वभिनिम्रुक्तादिषु यो य उत्तरस्तस्मिंस्तस्मिन् द्वादशमासादिरशुचिकरनिर्वेषः यः पूर्वमुक्तस्तत्र गरीयान् भवति। तत्र पूर्वत्र पूर्वत्र लघीयान्। अभिनिम्रुक्ताभ्युदितयोस्तु अनन्तरोक्तं प्रायश्चित्तद्वयमपि विकल्पेन भवति ॥

तच्च लिङ्गं चरित्वोद्धार्यमित्येके ॥ २३ ॥

यस्मिन् कौनख्यादिके लिङ्गे यत्प्रायश्चित्तमुक्तं तच्चरित्वा कौनख्यादि लिङ्गमुद्धरेदित्येके मन्यन्ते। अन्यत्र दाराग्निभ्य इति स्मृत्यन्तरम् ॥

इति द्वादशः खण्डः.

इति द्वितीये पञ्चमः पटलः.

———

**सवर्णापूर्वशास्त्रविहितायां यथर्तु गच्छतः पुत्रास्तेषां कर्मभिस्संबन्धः ॥ १ ॥**

सवर्णा च अपूर्वा च शास्त्रविहिता चेति कर्मधारयः । सवर्णा सजातीया ब्राह्मणस्य ब्राह्मणीत्यादि । अपूर्वा अन्यस्मा अदत्ता, न विद्यते पूर्वः पतिर्यस्या इति । शास्त्रविहिता शास्त्रोक्तेन विवाहसंस्कारेण संस्कृता, 'सगोत्राय दुहितरं न प्रयच्छेत्'[1] इत्यादिशास्त्रानुगुणा वा । एवंभूतायां भार्यायां यथर्तु गृह्योक्तेन ऋतुगमनकल्पेन गच्छतो ये पुत्रा जायन्ते तेषां 'स्वकर्म ब्राह्मणस्य'[2] इत्यादिना पूर्वमुक्तैः कर्मभिस्संबन्धो भवति । 'गच्छधः' इति धकारोऽपपाठः ॥

**दायेनाव्यतिक्रमश्चोभयोः ॥ २ ॥**

उभयोः मातापित्रोर्दायेन च तेषां संबन्धो भवति । अव्यतिक्रमश्च, चकारश्चेदर्थे, अव्यतिक्रमश्चेत्, यदि ते पितरं च मातरं च न व्यतिक्रमेयुः । व्यतिक्रमे तु दायहानिरिति ॥

अपर आह—उभयोरपि दायेन तेषां व्यतिक्रमो न कर्तव्यः । अवश्यं देयो दाय इति ॥

**पूर्ववत्यामसङ्स्कृतायां वर्णान्तरे च मैथुने दोषः ॥ ३ ॥**

पूर्ववती अन्येन पाणिग्रहणेन नढ्ती । असंस्कृता विवाहसंस्काररहिता । वर्णान्तरं ब्राह्मणादेः क्षत्रियादिः । पूर्ववत्यादिषु मैथुने सति दोषो भवति । कस्य? तयोरेव मिथुनीभवतोः ॥

---

[1] आप. ध. २-११-१५.

[2] आप. ध. २-१०-४.

**तत्रापि दोषवान् पुत्र एव ॥ ४ ॥**

तत्रेति पञ्चम्यास्त्रल्, 'इतराभ्योपि दृश्यन्ते' इति । ताभ्यामप्युभाभ्यामतिशयेन पुत्र एव दोषवान् । तत्र पूर्ववत्यामुत्पन्नौ कुण्डगोळकौ ।

पत्यौ जीवति कुण्डस्स्यान्मृते भर्तरि गोळकः[1] ।

असंस्कृतायामुत्पन्नस्य नामान्तरं नास्ति । किन्तु दुष्टत्वमेव । वर्णान्तरे तु जात्यन्तरम् । तत्र गौतमः—'अनुलोमा अनन्तरैकान्तरद्व्यन्तरासु जातास्सवर्णाम्बष्ठोग्रनिषाददौष्यन्तपारशवाः । प्रतिलोमास्तु सूतमागधायोगवक्षत्तृवैदेहकचण्डालाः'[2] इति । एवकारो दुहितृनिवृत्त्यर्थः । तथाच वसिष्ठः—'पतितेनोत्पन्नः पतितो भवत्यन्यत्र स्त्रियास्सा हि परगामिनी तामरिक्थामुपेयात्' इति । किञ्च—'स्त्रीरत्नं दुष्कुलादपि'[3] इति मनुः ॥

इदानीं पुत्रेभ्यो दायविभागं वक्ष्यन् अन्यस्य भार्यायामन्येनोत्पादितः पुत्रः किमुत्पादयितुः? आहोस्वित् क्षेत्रिणः? इति विचारे निर्णयमाह—

**उत्पादयितुः पुत्र इति हि ब्राह्मणम् ॥ ५ ॥**

न केवलं ब्राह्मणमेव, वैदिकीर्गाथा अत्रोदाहरन्तीत्याह—

**अथाप्युदाहरन्ति ।**

**इदानीमेवाहं जनकः स्त्रीणामीर्ष्यामि नो पुरा**
**यदा यमस्य सादने जनयितुः पुत्रमब्रुवन् ।**

---

[1]मनु. ३-१७४. [2]गौ. ध. ४-१६, १७. [3]म. स्मृ. २-२३८.

रेतोधाः पुत्रं नयति परेत्य यमसादने ।
तस्माद्भार्यां रक्षन्ति बिभ्यन्तः पररेतसः ॥

अप्रमत्ता रक्षथ तन्तुमेतं
मा वः क्षेत्रे परबीजानि वाप्सुः ।
जनयितुः पुत्रो भवति सांपराये
मोघं वेत्ता कुरुते तन्तुमेतमिति ॥ ६ ॥

जनयितुः पुत्रः? क्षेत्रिणः पुत्रः? इति विवादे पराजितस्य क्षेत्रिणो वचनम् । एतावन्तं कालमहं जनको मन्यमानः इदानीमेव स्त्रीणामीर्ष्यामि परपुरुषसंसर्गं न सहे । कदेदानीम्? यदा यमस्य सादने पितृलोके जनयितुः पुत्रो भवति, पुत्रकृत्यं परलोकगतस्य जनयितुरेव, न क्षेत्रिणे इत्यब्रुवन् धर्मज्ञाः । एष एवार्थः किञ्चिद्विशेषेणोच्यते—रेतोधाः बीजप्रदः पुत्रं नयति पुत्रदत्तं पिण्डादिकमात्मानं प्रापयति परेत्य मृत्वा यमस्य सादने पितृलोके । तस्मात्कारणाद्भार्यां रक्षन्ति पररेतसो बिभ्यन्तः । छान्दसो नुम्, बिभ्यतः । अतो यूयमपि अप्रमत्ता अवहिता भूत्वा एतं तन्तुं प्रजासन्तानं रक्षथ । लोडर्थे लट्, रक्षत । किमर्थम्? वः युष्माकं क्षेत्रे परेषां बीजानि मा वाप्सुः । व्यत्ययेनायं कर्मणि कर्तृप्रत्ययः । मा वाप्सत, उप्तानि मा भूवन् । अपर आह—परशब्दाज्जसो लुक् । परे पुरुषाः वः क्षेत्रे बीजानि मा वाप्सुरिति । यस्मात् सांपराये परलोके जनयितुरेव पुत्रफलं भवति । वेत्ता भार्यायाः लब्धा क्षेत्री व्यर्थमेव तन्तुमेतं कुरुते आत्मसात्करोति । इतिशब्दो गाथासमाप्तौ । एतच्च क्षेत्रिणोनुज्ञामन्तरेण

पुत्रोत्पादनविषयम् । यदा तु क्षेत्री वन्ध्यो रुग्णो वा प्रार्थयते मम क्षेत्रे पुत्रमुत्पादयेति, यदा वा सन्तानक्षये विधवां नियुङ्क्ते, यथा विचित्रवीर्यस्य क्षेत्रं सत्यवती व्यासेन, तदोत्पन्नः पुत्रः उभयोरपि पुत्रो भवति बीजिनः क्षेत्रिणश्च । द्व्यामुष्यायणश्च स भवति । तथाचार्य एवाह—'यदि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेत्'[1] इति । याज्ञवल्क्योप्याह—

अपुत्रेण परक्षेत्रे नियोगोत्पादितस्सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः[2] ॥ इति ।

नारदोपि—

द्व्यामुष्यायणको दद्याद्द्वाभ्यां पिण्डोदके पृथक् ।
रिक्थादर्धं समादद्याद्बीजिक्षेत्रिकयोस्तथा[3] ॥ इति ।

यदि पूर्ववत्यादिषु मैथुने दोषः, कथं तर्हि कतभरद्वाजौ व्यत्यस्य भार्ये जग्मतुः? वसिष्ठश्चण्डालीमक्षमालाम्? प्रजापतिस्स्वदुहितरम्? तत्राह—

**दृष्टो धर्मव्यतिक्रमस्साहसं च पूर्वेषाम् ॥ ७ ॥**

सत्यं दृष्टोयमाचारः, स तु धर्मव्यतिक्रमो न धर्मः, गृह्यमाणकारणत्वात् । न चैतावदेव, पूर्वेषां साहसं च दृष्टम्, यथा जामदग्न्येन रामेण पितृवचनादविचारेण मातुश्शिरश्छिन्नमिति ॥

किमिदानीं तेषामपि दोषः? नेत्याह—

**तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ॥ ८ ॥**

---

[1]आप. श्रौ. १-९-७.	[2]या. २-१३०.	[3]ना. स्मृ. १३-२३.

तादृशं हि तेषां तेजः, यदेवंविधैः पाप्मभिर्न प्रत्यवयन्ति। तथाच छान्दोग्ये श्रूयते—'तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं यास्य सर्वे पाप्मानः प्रदूयन्ते'[1] इति ॥

न चैतावता अर्वाचीनानामपि तथा प्रसङ्ग इत्याह—

**तदन्वीक्ष्य प्रयुञ्जानस्सीदत्यवरः ॥ ९ ॥**

तदिति 'नपुंसकमनपुंसकेनैकवच्च' इत्येकशेषः, एकवद्भावश्च। तं च व्यतिक्रमं तच्च साहसमन्वीक्ष्य दृष्ट्वा स्वयमपि तथा प्रयुञ्जानोऽवरः इदानीन्तनः सीदति प्रत्यवैति। न ह्यग्निस्सर्वं दहतीत्यस्माकमपि तथा शक्तिरिति ॥

पुत्रप्रसङ्गेनाह—

**दानं क्रयधर्मश्चापत्यस्य न विद्यते ॥ १० ॥**

दानग्रहणेन विक्रयो गृह्यते त्यागसाम्यात्। क्रयधर्म इति च प्रतिग्रहस्यापि ग्रहणम्, धर्मग्रहणात्, स्वीकारसाम्याच्च। अपत्यस्य दानप्रतिग्रहक्रयविक्रया न कर्तव्याः। द्वादशविधेषु दत्तक्रीतयोरपि पुत्रयोः मन्वादिभिः पठितत्वान्नायं सामान्येन प्रतिषेधः। किं तर्हि? ज्येष्ठपुत्रविषयः, एकपुत्रविषयः स्त्रीविषयो वा। तथा च वसिष्ठः—'न ज्येष्ठं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा। न त्वेकं पुत्रं दद्यात्स हि सन्तानाय पूर्वेषाम्। न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः। पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतीभिर्हुत्वा अदूरबान्धवं सन्निकृष्टमेव प्रतिगृह्णीयात्'[2] इति। विश्वजिति च सर्वस्वदाने गवादिवदपत्यं न देयमिति। विक्रयस्तु सर्वत्र निषिद्धः। तत्रोपपातकेषु याज्ञवल्क्य आह—

---

[1] छां. ५-२४-३. [2] वा. ध. १५-३...६.

नास्तिक्यं व्रतलोपश्च सुतानाञ्चैव विक्रयः[1] । इति ।

बह्वृचब्राह्मणेपि शुनश्शेफाख्याने दृश्यते—'स ज्येष्ठं पुत्रं निगृह्णान उवाच'[2] इत्यादि । पुत्रप्रकरणे अपत्यशब्दोपादानमपि ज्येष्ठपुत्रविषयत्वस्य लिङ्गम्, न पतन्त्यनेनेत्यपत्यमिति ॥

ऋणमस्मिंत्सन्नयत्यमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ इति ॥

## विवाहे दुहितृमते दानं काम्यं धर्मार्थं श्रूयते तस्माद्दुहितृमतेतिरथं शतं देयं तन्मिथुयाकुर्यादिति । तस्यां क्रयशब्दस्संस्तुतिमात्रं धर्माद्धि संबन्धः ॥ ११ ॥

आर्षे विवाहे दुहितृमते दानं क्वचिद्वेदे श्रूयते । तस्माद्दुहितृमते रथेनाधिकं गवां शतं देयम् । तच्च दुहितृमान्मिथुयाकुर्यात् । 'मा देवानां मिथुयाकर्भागधेयम्'[3] इति दृश्यते । मिथुयाकुर्यादिति कोर्थः? वरायैव पुनर्दद्यात् इति । तदिदं दानं काम्यं कामनिमित्तम्? 'यथा युक्तो विवाहस्तथा युक्ता प्रजा भवति'[4] इति, ऋषितुल्याः पुत्रा यथा स्युरिति । ततश्च धर्मार्थं प्रजार्थं, न विक्रयार्थम् । यस्तु तस्यां विवाहक्रियायां क्रयशब्दः क्वचित्स्मृतौ दृश्यते स संस्तुतिमात्रम् द्रव्यप्रदानसाम्यात्; न मुख्यक्रयत्वप्रतिपादनार्थम् । कुतः? हि यस्माद्धर्मादेव हेतोस्सम्बन्धो दम्पत्योरिति । 'आर्षे दुहितृमते मिथुनौ गावौ देयौ'[5] इत्यत्राप्येष एव न्यायः । अत्र मनुः—

---

[1] या. ३-२३६. [2] ऐत. ब्रा. ७-३-१५. [3] तै. सं. १-३-७.
[4] आप. ध. २-१०-४. [5] आप. ध. २-११-१८.

यासां नाददते शुल्कं ज्ञातयो न स विक्रयः ।

अर्हणं तत्कुमारीणामानृशंस्यं च केवलम्[1] ॥ इति ।

एतच्च सर्वं 'दानं क्रयधर्मश्चापत्यस्य न विद्यते'[2] इत्यस्य व्यभिचारनिवृत्त्यर्थमुक्तम् ॥

अथ दायविभागः—

**एकधनेन ज्येष्ठं तोषयित्वा ॥ १२ ॥**

इति त्रयोदशः खण्डः.

---

**जीवन्पुत्रेभ्यो दायं विभजेत्समं क्लीबमुन्मत्तं पतितञ्च परिहाप्य ॥ १ ॥**

एकेन प्रधानेन केन चिद्धनेन गवादिना ज्येष्ठं पुत्रं तोषयित्वा तृप्तं कृत्वा जीवन्नेव पुत्रेभ्यो दायं विभजेत्समं आत्मना परस्परं च तेषाम् । सामान्याभिधानात्क्रमागतं स्वयमार्जितञ्च । क्लीबादीन्वर्जयित्वा । क्लीबादिग्रहणं जात्यन्धादीनामप्युपलक्षणम् । यथाह मनुः—

अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा ।

उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः[3] ॥ इति ।

अन्धादीनां पुत्रसद्भावे तेप्यंश*हराः । एवमुन्मत्तपतितौ निवृत्तनिमित्तौ । क्लीबादयस्तु भर्तव्याः । पुत्रविभागकालः स्मृत्यन्तरवशाद्ग्राह्यः । तत्र नारदः—

---

[1] म. स्मृ. ३-५४. [2] आप. ध. २-१३-१०.

[3] म. स्मृ. ९-२०१. *घ—ते त्वंशहराः. ङ—तेंशहराः.

मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ।
निवृत्ते चापि रमणे* पितर्युपरतस्पृहे[1] ॥ इति ।

यदा च पुत्राणां पृथक्कर्मानुष्ठाने शक्तिश्रद्धे भवतः सोपि कालः । 'तस्माद्धर्म्या पृथक्क्रिया' इति वचनात् । जीवन्निति वचनं जीवन्नेवावश्यं पुत्रान्विभजेदेष धर्म इति प्रतिपादनाय । अन्यथा तदनर्थकम्, अजीवतोऽप्रसङ्गात् । स्मृत्यन्तरेषु स्वयमार्जिते पितुरिच्छया विषमविभागो दर्शितः । न स धर्म इत्याचार्यस्य पक्षः । भार्याया अप्यंशो न दर्शितः । आत्मन एवांशस्तस्या अपीति मन्यते । वक्ष्यति च—'जायापत्योर्न विभागो विद्यते'[2] इति । केचित्तु पितुर्द्वावंशावित्याहुः—

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता[3] ।

इति दर्शनात् । अयमप्याचार्यस्य पक्षो न भवति । यथा पुत्राणामेकैक एवांशः सभार्याणां तथा पितुरपीति । यद्वा—पुत्राणामेवांशसाम्यम्, आत्मनस्त्वाधिक्येपि न दोषः । अत्र हारीतः—'पिता ह्याग्रयणः पुत्रा इतरे ग्रहाः यद्याग्रयणस्स्कन्देदुपदस्येद्वा इतरे†भ्यो गृह्णीयात्' इति । विभागादूर्ध्वं पित्रोर्जीवनाभावे पुत्रभागेभ्यो ग्राह्यमित्युक्तं भवति । इति जीवद्विभागः ॥

अथ मृते कुटुम्बिनि तद्धनस्य गतिमाह—

## पुत्राभावे यः प्रत्यासन्नः सपिण्डः ॥ २ ॥

पुत्राभावे इति वचनात् सत्सु पुत्रेषु त एव गृह्णीयुः, अविशेषात्समम् । तत्र नारदीये विशेषः—

---

[1]ना. स्मृ. १३-३. [2]आप. ध. २-१४-१६. [3]ना. स्मृ. १३-१२.

*ख. रमणात्. †मुम्बै. घ. ङ. झ. ट—दस्येदितरे.

यच्छिष्टं पितृ*दायेभ्यो दत्वर्णं पैतृकञ्च यत् ।
भ्रातृभिस्तद्विभक्तव्यमृणी स्यादन्यथा पिता[1] ॥ इति ।

कात्यायनस्तु—

भ्राता पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम् ।
विभागकाले देयं तद्रिक्थिभिस्सममेव तु ॥ इति ।

अत्र याज्ञवल्क्ये—

पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत्[2] । इति ।

तदत्र नोक्तम् पुत्रैरेव सह वृत्तिरस्या इति । तथाच मनुः—

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति[3] ॥ इति ।

एवं मातुरप्यभावे तद्धनं भर्तृ†कुललब्धं स्वयमार्जितं पुत्रा अप्रत्ताश्च दुहितरस्समं गृह्णीयुः ।

स्त्रीधनं तदपत्यानां दुहिता च तदंशिनी ।
अप्रत्ता चेत्समूढा तु लभते सा न मातृकम्[4] ॥

इति बृहस्पतिः । पितृकुललब्धन्तु अप्रत्ता एव दुहितरः ।

मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सः[5] ॥ इति मनुः ।

अथ प्रत्ता दुहितरः, पुत्राश्च, तदा कथम् ?

जनन्यां संस्थितायान्तु समं सर्वे सहोदराः ।
भजेरन् मातृकं रिक्थं भगिन्यश्च सनाभयः[6] ॥

इति मानवमेव ।

---

[1] ना. स्मृ. १३-३२. [2] या. स्मृ. २-१२६. [3] मनु. ९-३.
[4] [5] मनु. ९-१३१. [6] मनु. ९-१९२.

*मुम्बै. झ. ट—प्रीति. †घ. ङ—भ्रातृ.

अत्र व्यासः—

असंस्कृतास्तु ये तत्र पैतृकादेव ते धनात् ।
संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि ॥ इति ।

अत्र क्रमविवाहे बृहस्पतिः—

ब्रह्मक्षत्रियविट्छूद्रा विप्रोत्पन्नास्त्वनुक्रमात् ।
चतुस्त्रिद्व्येकभागेन भजेयुस्ते यथाक्रमम् ॥
क्षत्रजास्त्रिद्व्येकभागा विड्जौ तु द्व्येकभागिनौ । इति ।

मानवे च स्पष्टमुक्तम्—

सर्वं वा रिक्थजातं तद्दशधा प्रविभज्य तु ।
धर्म्यं विभागं कुर्वीत विधिनानेन धर्मवित् ॥
चतुरोंशान्हरेद्विप्रस्त्रीनंशान् क्षत्रियासुतः ।
वैश्यापुत्रो हरेद्व्यंशमेकं शूद्रासुतो हरेत्[1] ॥ इति ।

यस्य तु ब्राह्मणी वन्ध्या मृता वा, तत्र क्षत्रियादिसुतास्त्रिद्व्येकभागाः । यस्य त्वेकस्यामेव पुत्रस्स सर्वं हरेच्छूद्रापुत्रवर्जम् । यथाह देवलः—

अनुलोम्येकपुत्रस्तु पितुस्सर्वस्वभाग्भवेत् ।
निषाद एकपुत्रस्तु विप्रस्वस्य तृतीय*भाक् ॥
द्वौ सपिण्डस्सकुल्यो वा स्वधादाता तु संहरेत् ॥ इति ।

निषादः पारशवः । क्षत्रियादिविषये बृहस्पतिः—

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै ।
यद्यप्यस्य पिता दद्यान्मृते विप्रासुतो हरेत् ॥

---

[1]मनु. ९–१५२, १५३.

*ख–तुरीय.

शूद्र्या द्विजातिभिर्जातो न भूमेर्भागमर्हति ।
सजातावाप्नुयात्सर्वमिति धर्मो व्यवस्थितः ॥ इति ।

याज्ञवल्क्यः—

जातोपि दास्यां शूद्रेण कामतोंशहरो भवेत् ।
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिनम्[1] ॥ इति ।

भार्याविषये विष्णुः—' मातरः पुत्रभागानुसारिभागहारिण्यः ' इति ।

अत्र—

औरसः पुत्रिका बीजक्षेत्रजौ पुत्रिकासुतः ।
पौनर्भवश्च कानीनः सहोढो गूढसंभवः ॥
दत्तः क्रीतः स्वयंदत्तः कृत्रिमश्चापविद्धकः ।
यत्र क्वचोत्पादितश्च पुत्राख्या दश पञ्च च ॥
अनेनैव क्रमेणैषां पूर्वाभावे परः परः ।
पिण्डदोंशहरश्चेति प्रायेण स्मृतिषु स्थितिः ॥ इति ।

औरसो धर्मपत्नीजः । ' सवर्णापूर्वशास्त्रविहितायाम् '[2] इति पूर्वमुक्तः । गौतमः—' पितोत्सृजेत्पुत्रिकामनपत्योग्निं प्रजापतिं चेष्ट्वास्मदर्थमपत्यमिति संपाद्य* '[3] इति । बृहस्पतिः—

एक एवौरसः पित्र्ये धने स्वामी प्रकीर्तितः ।
तत्तुल्याः पुत्रिकाः प्रोक्ताः भर्तव्यास्त्वपरे स्मृताः ॥ इति ।

मनुः—

पुत्रिकायां कृतायान्तु यदि पुत्रोनुजायते ।
समस्तत्र विभागस्स्याज्ज्येष्ठता नास्ति हि स्त्रियाः[4] ॥ इति ।

---

[1] या. २-१३६.　　[2] आप. ध. २-१३-१.
[3] गौ. ध. २८-१८.　　[4] मनु. ९-१३४.

*मुद्रितगौतमकोशे—संवाद्य.

याज्ञवल्क्यः—

अपुत्रेण परक्षेत्रे नियोगोत्पादितस्सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः[1] ॥

अयमेक एवोत्पादयितुर्बीजजः, क्षेत्रिणस्तु क्षेत्रजः ।

बृहस्पतिः—

पौत्रोथ पुत्रिकापुत्रस्स्वर्गप्राप्तिकरावुभौ ।
रिक्थे पिण्डाम्बुदाने च समौ संपरिकीर्तितौ ॥ इति ।

काश्यपः—

सप्त पौनर्भवाः कन्याः वर्जनीयाः कुलाधमाः ।
वाचादत्ता मनोदत्ता कृतकौतुकमङ्गळा ॥
उदकस्पर्शिता या च या च पाणिगृहीतिका ।
अग्निं परिगता या च पुनर्भूप्रसवा च या ॥

कात्यायनः—

क्लीबं विहाय पतितं या पुनर्लभते पतिम् ।
तस्याः पौनर्भवो जातो व्यक्तमुत्पादकस्य सः ॥ इति ।

मनुः—

पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवः[2] ॥

नारदः—

कानीनश्च सहोढश्च गूढायां यश्च जायते ।
तेषां वोढा पिता ज्ञेयः ते च भागहराः पितुः[3] ॥ इति ।

वसिष्ठः—

---

[1]या. स्मृ. २-१३०. [2]मनु. ९-१७२. [3]नार. स्मृ. १३-१७.

अप्रत्ता दुहिता यस्य पुत्रं विन्देत तुल्यनः ।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्[1] ॥ इति ।

अनूढायामेव मृतायां मातामहस्य पुत्रः । अन्यथा वोढुः ।

मनुः—

या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती ।
वोढुस्स गर्भो भवति सहोढ इति चोच्यते[2] ॥
उत्पाद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः[3] ॥

दत्तविषये भ्रातृपुत्रेषु सत्सु तेष्वेक एव ग्राह्यः । तत्र क्षेत्र-जः पूर्वमेवोक्तः । पैठीनसिः—अथ दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेणार्षेयेण जातास्ते असंहतकुलीना द्व्यामुष्यायणा भवन्तीति ।

मनुः—

भ्रातृणामेकजातानामेकश्चेत्पुत्रवान् भवेत् ।
सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत्[4] ॥
क्रीणीयाद्यस्त्वपत्यार्थे मातापित्रोर्यमन्तिकात् ।
स हि क्रीतस्सुतस्तस्य सदृशोऽसदृशोपि वा[2] ॥
मातापितृविहीनो यः त्यक्तो वा स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्य स्वयं दत्तस्तु स स्मृतः[5] ॥
सदृशन्तु प्रकुर्याता गुणदोषविवर्जितम्* ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः[3] ॥

---

[1]वा. ध. १७-२३. [2]मनु. ९-१७३, १७४. [3]मनु. ९-१६९, १७०.
[4]मनु. ९-१८२. [5]मनु. ९-१७७. *मुद्रि—विचक्षणम्.

मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।
यं पुत्रं प्रतिगृह्णीयादपविद्धस्स उच्यते[1] ॥ इति ।

सर्वे ते सजातीयाः ।

सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः[2] ।

इति याज्ञवल्क्यवचनात् ।

विष्णुः—'यत्र क्व च नोत्पादितस्तु द्वादशः' इति ।

याज्ञवल्क्यः—

पिण्डदोंशहरश्चैषां पूर्वाभावे परःपरः[2] । इति ।

मनुः—

श्रेयसःश्रेयसोऽभावे पापीयान् रिक्थमर्हति[3] । इति ।

नारदः—

क्रमादेते प्रवर्तन्ते मृते पितरि तद्धने ।
ज्यायसोज्यायसोऽभावे जघन्यस्तदवाप्नुयात्[4] ॥ इति ।

देवलः—

सर्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः ।
औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न तिष्ठति ॥
तेषां सवर्णा ये पुत्राः ते तृतीयांशभागिनः ।
शेषास्तमुपजीवेयुः ग्रासाच्छादनसंभृताः ॥ इति ।

मनुः—

षष्ठन्तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् ।
औरसो विभजेद्दायं पित्र्यं पञ्चममेव वा[5] ॥ इति ।

बृहस्पतिः—

क्षेत्रजाद्यास्सुतास्त्वन्ये पञ्चषट्सप्तभागिनः । इति ।

---

[1]मनु. ९-१७१. [2]या. स्मृ. २-१३५. [3]मनु. ९-१८४.
[4]ना. स्मृ. १३-४९. [5]मनु. ९-१४६.

हारीतः—विभजिष्यमाण एकविंशं कानीनाय दद्यात्, विंशं पौनर्भवाय, एकोनविंशं द्व्यामुष्यायणाय, अष्टादशं क्षेत्रजाय, सप्तदशं पुत्रिकापुत्राय, इतरानौरसाय । इति ।

वसिष्ठः—'पुत्रं प्रतिग्रहीष्यन्'[1] इति प्रक्रम्य 'तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभाक्'[1] इति । एवमेतेषु शास्त्रेषु विद्यमानेषु यदाचार्येण पूर्वमुक्तम्, 'तेषां कर्मभिस्संबन्धः । दायेनाव्यतिक्रमश्च'[2] इति तद्धर्मपत्नीजे पुत्रे सति क्षेत्रजादीनां समांशभाक्त्वप्रतिषेधपरं वेदितव्यम् ।

अथाविभाज्यम्—तत्र मनुः—

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत् ।
स्वयमाहितलब्धं तन्नाकामो दातुमर्हति[3] ॥ इति ।

कात्यायनः—

नाविद्यानां तु वैद्येन देयं विद्याधनात्कचित् ।
समविद्याधिकानान्तु देयं वैद्येन तद्धनम् ॥
परभक्तोपयोगेन* प्राप्ता विद्या यदान्यतः ।
तया प्राप्तं तु विधिना विद्याप्राप्तं तदुच्यते ॥ इति ।

व्यासः—

पितामहपितृभ्याञ्च दत्तं मात्रा च यद्भवेत् ।
तस्य तन्नापहर्तव्यं शौर्यभार्याधनं तथा ॥ इति ।

याज्ञवल्क्यः—

क्रमादभ्यागतं द्रव्यं हृतमप्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च[4] ॥

---

[1] वा. ध. १५-६, ९.
[2] आप. ध. २-१३-१.
[3] मनु. ९-२०८.
[4] या. स्मृ. २-१२१.

*घ. ट—भुक्तोपयोगेन, ङ—भक्तप्रदानेन.

पत्यौ जीवति यस्स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन् दायादाः भजमानाः पतन्ति ते[1] ॥

व्यासः—

साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम्* ।
शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं देयं शेषास्स्युस्समभागिनः । इति ।

इति पुत्रविभागः† । तदभावे मृतस्य यः प्रत्यासन्नः स दायं हरेत्, इति वक्ष्यमाणेन संबन्धः ।

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
सप्तमः पिण्डदातेषां सापिण्ड्यं साप्तपूरुषम् ॥

इति सपिण्डलक्षम् । तेषु यो यः प्रत्यासन्नः स स गृह्णीयादिति । भार्यां तु रिक्थग्राहिणः सपिण्डा रक्षेयुः । न तु दायग्रहणमित्याचार्यस्य पक्षः । श्रूयते हि—'तस्मात्स्त्रियो निरिन्द्रियाः अदायादीः' इति । मनुरपि—

निरिन्द्रिया अदायादीः स्त्रियो नित्यमिति स्थितिः[2] । इति ।

अत्र सपिण्डाद्यभावे बृहस्पतिः—

अन्यत्र ब्राह्मणात्किन्तु राजा धर्मपरायणः ।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः ॥
अन्नार्थं तण्डुलप्रस्थमपराह्णे तु सेन्धनम् ।
वसनं त्रिपणक्रीतं देयमेकं त्रिमासतः ॥
एतावदेव साध्वीनां चोदितं विधवाधनम्‡ ।

[1] मनु. ९-२००.
[2] मनु—९-१८. 'निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः' इति मुद्रितकोशे.
*ख—नादिकम्. †घ—अपुत्रधनविभागः. ‡वाशनम्.

वसनस्याशनस्यैव तथैव रजकस्य च ॥
धनं व्यपोह्य तच्छिष्टं दायादानां प्रकल्पयेत् ।
धूमावसानिकं ग्राह्यं सभायां स्नानतः पुरा* ॥
वसनाशनवासांसि विगणय्य धवे मृते । इति ।

व्यासः—

द्विसाहस्रः परो दायः स्त्रियै देयो धनस्य तु ।
यच्च भर्त्रा धनं दत्तं सा यथाकाममाप्नुयात् ॥ इति ।

पणानां द्वे सहस्रे परिमाणमस्य द्विसाहस्रः एष परो दायस्त्रियाः, नाधिकः इति। एतत्प्रभृते धने, ज्ञातयश्च न रक्षेयुरिति शङ्कायाम्। एवम् 'पत्नीदुहितरश्च'[1] इत्यादीनि यानि पत्न्या दायप्राप्तिपराणि तान्यप्येवमेव द्रष्टव्यानि† । अत्र पितरि भ्रातरि सोदर्ये च जीवति सति सोदर्यो भ्राता गृह्णीयादित्येके । तथाच शङ्खः— 'अपुत्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यं, तदभावे मातापितरौ हरेयातां पत्नी वा ज्येष्ठेति ।

देवलः—

ततो दायमपुत्रस्य विभजेरंत्सहोदराः।
तुल्या दुहितरो वापि ध्रियमाणः पितापि च ॥

*मुंबै—क—श्राव्यं सन्ध्यायां स्नानतत्परा. [1]या. स्मृ. २-१३८.

†गौतमस्तु—पुत्राभावे पत्न्या सपिण्डादिभिस्समांशग्रहणमाह—'पिण्डगोत्रऋषिसंबन्धा रिक्थं भजेरन् स्त्री चानपत्यस्य' (गौ. ध. २८-२१) इति। अस्यार्थः। अनपत्यस्य रिक्थं पिण्डसंबन्धास्सपिण्डाः प्रत्यासत्तिक्रमेण भजेरन् । तदभावे गोत्रसंबन्धास्सगोत्राः । तदभावे ऋषिसंबन्धास्समानप्रवराः । स्त्री च पत्नी च । स्त्रियाः पृथङ्निर्देशात् चशब्दाच्च यदा सपिण्डा भजेरन् तदा तैस्सह स्त्री एकमंशं गृह्णीयात् । ततश्च—'पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत्' इतिवत् सपिण्डादिभिस्सहग्रहणमुक्तमिति वयमप्येतमेव पक्षं रोचयामहे ॥ इत्ययमधिकः पाठः क. ख. मुम्बै. पुस्तकेषु दृश्यते.

सवर्णा भ्रातरो माता भार्या चेति यथाक्रमम् । इति ।

याज्ञवल्क्यः—

संसृष्टिनस्तु संसृष्टी सोदर्यस्य तु सोदरः ।
दद्याच्चापहरेद्वांशं जातस्य च मृतस्य च ॥
अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत् ।
असंसृष्टयपि नादद्यात्संसृष्टो नान्यमातृजः[1] ॥ इति ।

अत्र सोदरस्येति विशेषवचनात् 'पत्नीदुहितरश्च'[2] इत्यत्र भ्रातृग्रहणं भिन्नोदरविषयमिति । प्रत्यासत्त्यतिशयात्पितैवेति वयम् । तदभावे सोदर्यः । तदभावे तत्पुत्राः । तदभावे भिन्नोदराः । तदभावे पितृव्यः इति द्रष्टव्यम् । मात्रादयोपि स्त्रियो जीवनमात्रं लभेरन् इति ॥

## तदभाव आचार्य आचार्याभावेऽन्तेवासी हृत्वा तदर्थेषु धर्मकृत्येषु वोपयोजयेत् ॥ ३ ॥

सपिण्डाभावे आचार्यो दायं हरेत । तस्याप्यभावेऽन्तेवासी हरेत । हृत्वा च तदर्थेषु धर्मकृत्येषु तटाकखननादिषूपयोजयेत् । वाशब्दात्स्वयं वोपयुञ्जीत ॥

## दुहिता वा ॥ ४ ॥

दुहिता वा दायं हरेत । पुत्राभाव इत्येके । अनन्तरोक्ते विषय इत्यन्ये ॥

## सर्वाभावे राजा दायं हरेत ॥ ५ ॥

सर्वग्रहणात् बन्धूनां सगोत्राणां चाभावे ॥

---

[1] या. स्मृ. २-१४१, १४२.

[2] या. स्मृ. २-१३८.

ज्येष्ठो दायाद इत्येके ॥ ६ ॥

ज्येष्ठ एव पुत्रो दायहर इत्येके मन्यन्ते । इतरे तु तमुपजीवेयुः । सो पि तान् पितेव परिपालयेदिति । तथाच गौतमः—'सर्वं वा पूर्वजस्येतरान् बिभृयात्पितृवत्'[1] इति ॥

देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य ॥ ७ ॥

क्वचिद्देशे सुवर्णादि ज्येष्ठस्य भाग इत्याहुः । भूमौ जातं भौमं धान्यं, कृष्णं भौमं माषादि । कृष्णायसमित्यन्ये ॥

रथः पितुः परिभाण्डं च गृहे ॥ ८ ॥

रथः पितुरंशः, गृहे च यत्परिभाण्डं उपकरणं पीठादिकं तदपि ॥

अलङ्कारो भार्याया ज्ञातिधनं चेत्येके ॥ ९ ॥

भार्यायास्तु धृतोलङ्कारोंशः । ज्ञातिभ्यः पित्रादिभ्यश्च* यल्लब्धं धनं तच्चेत्येवमेके मन्यन्ते ॥

तच्छास्त्रैर्विप्रतिषिद्धम् ॥ १० ॥

यदुक्तं ज्येष्ठो दायाद इति तच्छास्त्रविरुद्धम् ॥

येन विरुद्धं तद्दर्शयति—

मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते ॥ ११ ॥

पुत्रेभ्य इति बहुवचननिर्देशादविशेषेण श्रवणम् ॥

---

[1] गौ. ध. २८-३.

*घ. ङ. ट—पुत्रादिभ्यः

अत्र चोद्यम्–

**अथापि तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्तीत्येकवच्छ्रूयते ॥ १२ ॥**

अथापि ननु चेत्यर्थः । ज्येष्ठं पुत्रं धनेन निरवसाययन्ति पृथक्कुर्वन्तीत्येकवदपि श्रूयते । यथा एक एव ज्येष्ठो दायादः तदनुरूपमपि श्रूयते इति ॥

परिहरति–

**अथापि नित्यानुवादमविधिमाहुर्न्यायविदो यथा तस्मादजावयः पशूनाꣳ सहचरन्तीति । तस्मात्स्नातकस्य मुखꣳ रेफायतीव* । तस्माद्बस्तश्च श्रोत्रियश्च स्त्रीकामतमाविति ॥**

अथापीति परिहारोपक्रमे । पशूनां मध्ये अजाश्चावयश्च जातिभेदेपि सह चरन्तीति । रेफा शोभा । इह तु तद्वत्यभेदोपचारः, ततः क्यष् । स्नातकस्य मुखं कुण्डलादिना शोभते । इवशब्दो वाक्यालङ्कारे । श्रोत्रियस्य स्त्रीकामतमत्वमाचार्यकुले चिरकालं ब्रह्मचारिवासात् । यथैतानि वाक्यानि दृष्टमात्रमनुवदन्ति न किञ्चिद्विदधाति, तथा 'तस्माज्ज्येष्ठं पुत्रम्'[1] इत्यादिकमपीति न्यायविद आहुः । न केवलमयमेवानुवादः । किं तर्हि ? 'मनुः पुत्रेभ्यः'[2] इत्ययमप्यनुवाद एव ॥

**सर्वे हि धर्मयुक्ता भागिनः ॥ १४ ॥**

---

*ठ. मुम्बै—रेभायतीव.

[1] तै. सं. २-५-२.

[2] तै. सं. ३-१-९.

हिशब्दो हेतौ। यस्मादेनावनुवादकौ न कस्यचिद्विधायकौ तस्मात्ते धर्मयुक्ताः पुत्रास्सर्व एते भागिनः ॥

**यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोपि तमभागं कुर्वीत ॥ १५ ॥**

यस्तु ज्येष्ठोप्यधर्मेण द्रव्याणि प्रतिपादयति विनियुङ्क्ते तमभागं कुर्वीत। तस्मै जीवद्विभागे पिता भागं न दद्यात्, ऊर्ध्वं विभागेपि भ्रातरः। अपिशब्दात् किमुतान्यमिति ज्येष्ठस्य प्राधान्यं ख्याप्यते ॥

'जीवन्पुत्रेभ्यः'[1] इत्यत्र भार्याया भागो न प्रदर्शितः* ।

तत्र कारणमाह—

**जायापत्योर्न विभागो विद्यते ॥ १६ ॥**

कस्मात्?

**पाणिग्रहणाद्धि सहत्वं कर्मसु ॥ १७ ॥**

कर्मार्थं द्रव्यम्, जायायाश्च न पृथक्कर्मस्वधिकारः। किं तर्हि? सहभावेन 'यस्त्वया धर्मश्च कर्तव्यस्सोनया सह' इति वचनात्। तत्र किं पृथग्द्रव्येणेति ॥

**तथा पुण्यफलेषु ॥ १८ ॥**

पुण्यफलेषु स्वर्गादिष्वपि तथा सहत्वमेवेति 'दिवि ज्योतिरजरमारभेताम्' इत्यादिभ्यो मन्त्रलिङ्गेभ्यः ॥

**द्रव्यपरिग्रहेषु च ॥ १९ ॥**

---

*क. ख—'तेन दम्पत्योस्सहभावो दर्शित.'। इत्यधिकः पाठो दृश्यते.

[1]आप. ध. २-१४-१.

द्रव्यार्जनेष्वपि तथा सहत्वमेव, तत्र पतिरार्जयति जाया गृहे निर्वहतीति योगक्षेमावुभयायत्ताविति द्रव्यपरिग्रहे सहत्वम् ॥

एतदेवोपपादयति—

**न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति ॥ २० ॥**

हि यस्मात् भर्तुर्विप्रवासे सति नैमित्तिके 'छिन्दत्प्राणि दद्यात्' इत्यादिके दाने कृते भार्याया न स्तेयमुपदिशन्ति धर्मज्ञाः। यदि भर्तुरेव द्रव्यं स्यात्, स्यादेवं स्तेयम् । 'नैमित्तिके दाने' इति वचनात् व्ययान्तरे तु स्तेयं भवत्येव । एतदेव द्रव्यसाधारण्येपि दम्पत्योर्वैषम्यम्, यत्पतिर्यथेष्टं विनियुङ्क्ते जाया त्वेतावदेवेति। न च पत्युः स्वयमार्जितस्य विनियोगे जायाया अनुमत्यपेक्षा; स्वतन्त्रत्वात्। स्वतन्त्रो ह्यसौ गृहे, यथा राजा राष्ट्रे। अत एव भार्यायाः स्तेयशङ्का, न भर्तुः ।

इति चतुर्दशः खण्डः.

---

**एतेन देशकुलधर्मा व्याख्याताः ॥ १ ॥**

'ज्येष्ठो दायादः'[1] इत्यादिकं शास्त्रं विप्रतिषेधादप्रमाणमित्युक्तम्। एतेन देशधर्माः कुलधर्माश्च व्याख्याताः। शास्त्रविप्रतिषिद्धा मातुलसुतापरिणयनादयो प्रमाणम्, विपरीताः प्रमाणमिति । गौतमोप्याह—'देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम्'[2] इति ॥

---

[1]आप. ध. २-१४-१६. [2]गौ. ध. ११-२०.

**मातुश्च योनिसम्बन्धेभ्यः पितुश्चा सप्तमात्पुरुषा-द्यावता वा संबन्धो ज्ञायते तेषां प्रेतेषूद-कोपस्पर्शनं गर्भान्परिहाप्यापरिसंवत्सरान्॥**

मातुर्योनिसंबन्धा मातुलादयः । पितुश्चा सप्तमात्पुरुषात्* संबन्धास्सपिण्डाः । यावता वाऽन्तरेण संबन्धो ज्ञायते स्मर्यते जन्मना नाम्ना चामुष्यायणः अस्मत्कूटस्थस्स वंश्य एवंनामेति । तथाच मनुः–

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
समानोदकभावस्तु जन्मनाम्नोरवेदने[1] ॥

इति । तेषां प्रेतेषु मृतेषूदकोदस्पर्शनं कर्तव्यम् । मरणनिमित्तं स्नानं कर्तव्यम् । गर्भान्बालानपरिसंवत्सरानपरिपूर्णसंवत्सरान् परिहाप्य वर्जयित्वा । बालेषु मृतेषु स्नानं न कर्तव्यमिति ॥

**मातापितरावेव तेषु ॥ ३ ॥**

तेषु बालेषु मृतेषु मातापितरावेवोदकोपस्पर्शनं कुर्याताम् ॥

**हर्तारश्च ॥ ४ ॥**

ये च तान् बालान् मृतान् हरन्ति निर्हरन्ति तेप्युदकोपस्पर्शनं कुर्युरिति† ॥

**भार्यायां परमगुरुसंस्थायां चाकालमभोज-नम् ॥ ५ ॥**

---

*क. अ. ङ—' ऊर्ध्वम् ' इत्यधिकः पाठः.   [1]मनु. ५-६०.

†क—' एवमाचार्यस्य पक्षः ' इत्यधिकः पाठः.

भार्या पत्नी। परमगुरवः आचार्यमातापितरः। संस्था मरणम्। भार्यायाश्च संस्थितायां परमगुरूणां च संस्थायां सत्यां न केवलमुदकोपस्पर्शनम्। किं तर्हि? अपरेद्युरातस्मात्कालादभोजनम्॥

किञ्च–

आतुरव्यञ्जनानि कुर्वीरन्॥ ६॥

आतुरत्वं व्यज्यते यैस्तानि च कुर्वीरन् भार्यादिमरणे॥

कानि पुनस्तानि?–

केशान्प्रकीर्य पाꣳसूनोप्यैकवाससो दक्षिणामुखास्सकृदुपमज्ज्योत्तीर्योपविशन्ति॥ ७॥

केशान्प्रकीर्य तेषु पांसूनावपन्ति। ओप्यैकवाससः अनुत्तरीया दक्षिणामुखाः दक्षिणां दिशं निरीक्षमाणाः सकृदुपमज्ज्योदकादुत्तीर्य तीर उपविशन्ति दक्षिणामुखा एव॥

एवं त्रिः॥ ८॥

एवमुक्तप्रकारेण त्रिरुपमज्ज्योपविशेयुः॥

तत्प्रत्ययमुदकमुत्सिच्याप्रतीक्षा ग्राममेत्य यत्स्त्रिय आहुस्तत्कुर्वन्ति॥ ९॥

ततस्तत्प्रत्ययं तेषां मृतानां भार्यादीनां यथा प्रत्ययो भवति मह्यमिदमुदकं दत्तमिति तथोदकमुत्सिञ्चन्ति* । आचारात्पि-

*क. घ–‘त्रिरित्यनुवृत्तेस्त्रिः’ इत्यधिकः पाठः.

त्र्यत्वाच्च तिलमिश्रम्* । भारद्वाजाय यज्ञशर्मणे एतत्तिलोदकं ददामीति प्रयोगः । उत्सिच्याप्रतीक्षाः पृष्ठतोऽनिरीक्षमाणाः ग्राममेत्य गृहं प्रविश्य । अनेन बहिरिदं कर्मेति गम्यते । यत् स्त्रियः कर्तव्यमाहुस्तत्कुर्वन्ति, अग्न्युपस्पर्शनगवालम्भनादीनि† ॥

## इतरेषु चैतदेवैक उपदिशन्ति ॥ १० ॥

'आकालमभोजनम्'[1] इत्यादि यदुक्तमेतदितरेषु भार्यादिभ्योन्येष्वपि सपिण्डेषु मृतेष्वपि कर्तव्यमित्येके आचार्या उपदिशन्ति ॥

## शुचीन्मन्त्रवतस्सर्वकृत्येषु भोजयेत् ॥११॥

एकान्तेपि विधिप्रतिषेधानुसारिणश्शुचयः । तान् मन्त्रवतः अधीत‡वेदान् सर्वकृत्येषु श्रौतेषु गार्ह्येषु स्मार्तेषु च कर्मसु दैवेषु पित्र्येषु मानुषेषु च भोजयेत् 'अन्ततो ब्राह्मणभोजनम्' इति स्मृत्यन्तरे दर्शनात् ॥

## देशतः कालतः शौचतः सम्यक्प्रतिगृहीतृत इति दानानि प्रतिपादयति ॥ १२ ॥

सप्तम्यर्थे तसिः । देशः प्रयागादिः । कालः सूर्यग्रहणादिः । शौचं कृच्छ्रादिसमाप्तिः । समीचीनः प्रतिग्रहीता, 'तुल्यगुणेषु

---

*घ—आचारात्त्रित्र्यत्वाच्च वाससा त्रिर्भवति, हस्ताभ्यां तिलमिश्रं त्रिः एकोत्तरवृद्धिः 'भारद्वाज......वासउदकं ददामि' इति पाठः.

†मुम्बै—स्त्रिय इति स्मृतीनां ग्रहणमिति प्रामाणिका व्याचक्षते' इत्यधिकः पाठः.

‡मुम्बै—अधीताविस्मृतवेदान्.

[1]आप. ध. २-१५-५.

वयोवृद्धश्श्रेयान्'[1] इत्यादि । एतेषु दानानि देयानि प्रतिपादयति दद्यादिति ॥

**यस्याग्नौ न क्रियते यस्य चाग्रं न दीयते न तद्भोक्तव्यम् ॥ १३ ॥**

यस्यान्नस्यैकदेशोऽग्नौ न क्रियते न हूयते, यस्माद्वोद्धृत्याग्रं न दीयते न तद्भोक्तव्यम् ॥

**न क्षारलवणहोमो विद्यते ॥ १४ ॥**

यद्वक्ष्यमाणं पच्यमानालोत्पद्यते तत्क्षारम् । गुडमरीचलिकुचादि । क्षारलवणसंसृष्टं न होतव्यम् ॥

**तथाऽवरान्नसꣳसृष्टस्य च ॥ १५ ॥**

अवरान्नं कुलुत्थादि । तत्संसृष्टस्याप्यन्नस्य होमो न विद्यते॥

अथ यस्यैवंविधमेव भोज्यमुपस्थितं तस्य कथं भोजनम् ? तत्राह—

**अहविष्यस्य होम उदाचीनमुष्णं भस्मापोह्य तस्मिन् भस्मनि जुहुयात् तद्धुतमहुतं चाग्नौ भवति ॥ १६ ॥**

औपासनात्पचनाद्वा अग्नेरुदीचीनमुष्णं भस्मापोह्य तस्मिन् भस्मनि जुहुयाद्वैश्वदेवमन्त्रैः । एषोऽहविष्यस्य होमः । तदेवं क्रियमाणं हुतं च भवति, भावार्थनिवृ[र्वृ]त्तेः* । अहुतं चाग्नौ भवति, भस्ममात्रत्वादिति । अत्र बोधायनः—' अथ यद्येतदेवस्यादुत्तरतो

---

[1]आप. ध. २-१७-१०. *घ—भावार्थे निवृत्ते अहुतं.

भस्ममिश्रानङ्गारान्निरूह्य तेषु जुहुयात्'[1] इति। अपर आह—यान्यहविष्याणि व्यञ्जनानि अहरहर्भोज्यानि तेषामेव संस्कारः, सकृच्च होमोऽमन्त्रक इति। उत्तरे सूत्रे स्पष्टार्थे॥

**न स्त्री जुहुयात्॥ १७॥**

**नानुपेतः॥ १८॥**

**आन्नप्राशनाद्गर्भा नाप्रयता भवन्ति॥ १९॥**

अन्नप्राशनात्प्राग्गर्भा बाला नाप्रयता भवन्ति रजस्वलादिस्पर्शनेऽपि। गौतमस्त्वपामार्जनादिकमिच्छति। यथाह—'अन्यत्रापमार्जनप्रधावनावोक्षणेभ्यः'[2] इति॥

**आ परिसंवत्सरादित्येके॥ २०॥**

यावत्संवत्सरो न पूर्यते तावन्नाप्रयता गर्भा इत्येके मन्यन्ते॥

**यावता वा दिशो न प्रजानीयुः॥ २१॥**

यावद्दिग्विभागज्ञानं नास्ति तावन्नाप्रयता भवन्ति॥

**ओपनयनादित्यपरम्॥ २२॥**

उपनयनादर्वाङ्नाप्रयता इत्यपरं दर्शनम्॥

अत्रोपपत्तिः—

**अत्र ह्यधिकारश्शास्त्रैर्भवति॥ २३॥**

हि यस्मात् अत्रोपनयने सति विधिनिषेधशास्त्रैरधिकारो भवति॥

**सा निष्ठा॥ २४॥**

उपनयनमपि परामृशतस्तच्छब्दस्य निष्ठाशब्दसामानाधिकरण्यात् स्त्रीलिङ्गता। सा निष्ठा तदुपनयनमवसानमधिकारस्येति॥

---

[1] बोधा-गृ-कोशे-३४तम पत्रे.  [2] गौ. ध. २-२.

**स्मृतिश्च ॥ २५ ॥**

अस्मिन्नर्थे स्मृतिरपि भवति—'प्रागुपनयनात्कामचारवादभक्षः'[1] इति गौतमः ॥

इति पञ्चदशः खण्डः.

इत्यापस्तम्बधर्मसूत्रवृत्तावुज्ज्वलायां द्वितीयप्रश्ने षष्ठः पटलः.

---

**सह देवमनुष्या अस्मिन् लोके पुरा बभूवुः । अथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्याः । तेषां ये तथा कर्माण्यारभन्ते सह देवैर्ब्रह्मणा चामुष्मिन् लोके भवन्ति अथैतन्मनुश्श्राद्धशब्दं कर्म प्रोवाच ॥१॥**

श्राद्धविधित्सया तस्य प्ररोचनार्थोयमर्थवादः प्रस्तूयते—पुरा किल देवाश्च मनुष्याश्च अस्मिन्लोके सह बभूवुः । अथ तैस्सहभावमसहमाना देवाः कर्मभिः श्रौतैः गार्ह्यैः स्मार्तैश्च यथावदनुष्ठितैर्दिवं जग्मुः । मनुष्यास्तु तथा कर्तुमसमर्थाः अहीयन्त हीना अभवन् इहैव लोके स्थिताः । यत एवं कर्मणां सामर्थ्यम्, अत इदानीमपि तेषां मनुष्याणां मध्ये ये तथा कर्माण्यारभन्ते कुर्वन्ति, यथारभन्त देवाः, ते देवैर्ब्रह्मणा च सहामुष्मिन् लोके भवन्ति । अथैवं हीयमाना*न्मनुष्यान् दृष्ट्वा कृपया मनुर्वैवस्वतः श्राद्धशब्दं श्राद्धमिति शब्द्यमानमेतत्कर्म प्रोवाच ॥

---

[1] गौ. ध. २-१.

*घ. ट. झ—एवंविधान्, ज—एवं हीनान्.

किमर्थम् ?—

**प्रजानिश्श्रेयसाय ॥ २ ॥**

तादर्थ्ये चतुर्थी । प्रजानां निश्श्रेयसार्थम् । 'निश्श्रेयसा च' इति पाठे छान्दसो यकारस्य चकारः । अपर आह— छान्दसो लिङ्गव्यत्ययः, प्रजानिश्श्रेयसश्चास्य कर्मणः फलमिति॥

**तत्र पितरो देवता ब्राह्मणास्त्वाहवनीयार्थे॥३॥**

तत्र श्राद्धकर्मणि पितरः पितृपितामहप्रपितामहा देवताः। ब्राह्मणास्तु भुञ्जाना आहवनीयार्थे आहवनीयकृत्ये वेदितव्याः। त्रीणि श्राद्धे करणानि—होमो ब्राह्मणभोजनं पिण्डदानं चेति। तत्र भोजनस्य प्रधानतमत्वख्यापनार्थोऽयमर्थवादः ॥

**मासिमासि कार्यम् ॥ ४ ॥**

तदिदं कर्म मासेमासे कर्तव्यम् । वीप्सावचनाद्यावज्जीविकोभ्यासः ॥

**अपरपक्षस्यापराह्णः श्रेयान् ॥ ५ ॥**

अपरपक्षस्य यान्यहानि तेष्वपराह्णः प्रशस्ततरः ॥

**तथाऽपरपक्षस्य जघन्यान्यहानि ॥ ६ ॥**

तत्रैव पक्षस्य यान्यहानि पञ्चदश तेषां यथोत्तरं श्रेयस्त्वम् ॥

**सर्वेष्वेवापरपक्षस्याहस्सु क्रियमाणे पितॄन् प्रीणाति । कर्तुस्तु कालाभिनियमात्फलविशेषः ॥ ७ ॥**

सर्वेष्वेवाहस्सु पितृणां तृप्तिरविशिष्टा । यस्तु कर्ता प्रतिपदादिके काले नियमेन श्राद्धं करोति, सर्वेषु मासेषु प्रतिपद्येव द्वितीयायामेवेत्यादि । तस्य कर्तुस्तस्मात्कालाभिनियमात्फलविशेषो भवति ॥

कोसाविति ? अत आह—

**प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते ॥**

यः प्रतिपदि नियमेन श्राद्धं करोति तस्यापत्ये प्रजासन्ताने स्त्रीप्रायमपत्यं जायते । प्रायेण स्त्रियो जायन्ते ॥

**द्वितीये स्तेनाः ॥ ९ ॥**

पुत्रा जायन्ते ॥

**तृतीये ब्रह्मवर्चसिनः ॥ १० ॥**

वृत्ताध्ययनसंपत्तिः ब्रह्मवर्चसम् । तद्वन्तो ब्रह्मवर्चसिनः ॥

**चतुर्थे क्षुद्रपशुमान् ॥ ११ ॥**

क्षुद्राः पशवोऽजाव्यादयः, तैस्तद्वान् कर्ता भवति । उत्तरत्राप्येकवचनेषु कर्तुर्वादो द्रष्टव्यः ॥

**पञ्चमे पुमांसः । बह्वपत्यो न चानपत्यः प्रमीयते ॥ १२ ॥**

पुमांस एव भवन्ति, बहवश्च भवन्ति, न चानपत्यः प्रमीयते जीवत्स्वेव पुत्रेषु सन्निहितेषु च स्वयं म्रियते । न तेषु मृतेषु, नापि देशान्तरं गतेषु, नापि स्वयं देशान्तरं गत इति ॥

**षष्ठेऽध्वशीलोऽक्षशीलश्च ॥ १३ ॥**

अध्वशीलः पान्थः। अक्षशीलः कितवः॥

सप्तमे कर्षे राद्धिः॥ १४॥

कर्षः कृषिः। राद्धिः सिद्धिः॥

अष्टमे पुष्टिः॥ १५॥

नवम एकखुराः॥ १६॥

एकखुरा अश्वादयः॥

दशमे व्यवहारे राद्धिः॥ १७॥

व्यवहारो वाणिज्यम्। शास्त्रपरिज्ञानं वा॥

एकादशे कृष्णायसं त्रपुसीसम्॥ १८॥

कृष्णमयः कृष्णायसम्। त्रपुसीसे लोहविशेषौ॥

द्वादशे पशुमान्॥ १९॥

द्वादश्यां बहवः पशवो भवन्ति॥

त्रयोदशे बहुपुत्रो बहुमित्रो दर्शनीयापत्यः। युवमारिणस्तु भवन्ति॥ २०॥

त्रयोदश्यां बहवः पुत्रा मित्राणि च भवन्ति। अपत्यानि च दर्शनीयानि भवन्ति। किन्तु ते पुत्रा युवमारिणो भवन्ति युवान एव म्रियन्ते॥

चतुर्दश आयुधे राद्धिः॥ २१॥

सङ्ग्रामे जयः॥

पञ्चदशे पुष्टिः ॥ २२ ॥

तत्र द्रव्याणि तिलमाषा व्रीहियवा आपो मूलफलानि च ॥ २३ ॥

तत्र श्राद्धे तिलादीनि द्रव्याणि यथायथमवश्यमुपयोज्यानि ॥

स्नेहवति त्वेवान्ने तीव्रतरा पितॄणां प्रीतिर्द्राघीयाꣳसं च कालम् ॥ २४ ॥

यद्वा तद्वान्नं भवतु, स्नेहवति तु तस्मिन्नाज्यादिभिरुपसिक्ते पितॄणां तीव्रतरा प्रकृष्टतरा प्रीतिर्भवति । सा च द्राघीयांसं कालमनुवर्तते ॥

तथा धर्माहृतेन द्रव्येण तीर्थे प्रतिपन्नेन ॥२५॥

धर्मार्जितं यद्द्रव्यं पात्रे च प्रतिपादितं तेनापि तथा तीव्रतरा पितॄणां प्रीतिर्द्राघीयांसं च कालमिति ॥

संवत्सरं गव्येन प्रीतिः ॥ २६ ॥

उत्तरत्र मांसश्रवणात् इहापि मांसस्य ग्रहणम् । गव्येन मांसेन संवत्सरं पितॄणां प्रीतिर्भवति ॥

भूयाꣳसमतो माहिषेण ॥ २७ ॥

माहिषेण मांसेन अतस्संवत्सराद्भूयांसं बहुतरं कालं प्रीतिर्भवति ॥

एतेन ग्राम्यारण्यानां पशूनां माꣳसं मेध्यं व्याख्यातम् ॥ २८ ॥

एतेन माहिषेण मांसेनान्येषामपि ग्राम्याणामजादीनामारण्यानां च शशादीनां पशूनां मांसं मेध्यं व्याख्यातम् पितृणां प्रीतिकरमिति । मेध्यग्रहणं प्रतिषिद्धानां ग्रहणं मा भूदिति ॥

इति षोडशः खण्डः.

---

**खड्गोपस्तरणे खड्गमांसेनानन्तं कालम् ॥ १ ॥**

खड्गचर्मोपस्तरणेष्वासनेषूपविष्टेभ्यो ब्राह्मणेभ्यो दत्तेन खड्गमांसेनानन्तं कालं पितृणां प्रीतिर्भवति । 'आनन्त्यम्' इति पाठे स्वार्थे ष्यञ् ॥

**तथा शतवलेर्मत्स्यस्य मांसेन ॥ २ ॥**

शतवलिर्बहुशकलो* रोहिताख्यः ॥

**वार्ध्राणसस्य च ॥ ३ ॥**

व्याख्यातो† वार्ध्राणसः । तस्य मांसेनानन्तं कालं प्रीतिः ॥

**प्रयतः प्रसन्नमनास्सृष्टो भोजयेद्ब्राह्मणान्ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसंबन्धान् ॥ ४ ॥**

प्रयतः स्नानाचमनादिना शुद्धः । प्रसन्नमना अव्याकुलचित्तः । सृष्टः उत्साहवान्, 'सृष्टश्चेद्ब्राह्मणवधे अहत्वापि'[1] इति दर्शनात् । 'वृत्तिसर्गतायनेषु क्रमः'[2] इत्यत्र च सर्ग उत्साहः । एवंभूतो ब्राह्मणान् भोजयेत् । कीदृशान् ? ब्रह्मविदः आत्मविदः । योन्यादिभिरसंबन्धान् । योनिसंबन्धा मातुलादयः । गोत्र-

---

*ई—शल्यको.  †१-१७-३६.

[1]गौतम ध. २२-११.  [2]पा. १-३-३८.

संबन्धास्सगोत्राः । मन्त्रसंबन्धा ऋत्विजः याज्याश्च । अन्तेवासिसंबन्धाः शिष्या आचार्याश्च ॥

गुणहान्यां तु परेषाꣳ समुदेतस्सोदर्योऽपि भोजयितव्यः ॥ ५ ॥

यदि परे अगोत्रसंबन्धा वृत्तादिगुणहीना एव लभ्यन्ते तदा समुदेतो वृत्तादिभिर्युक्तस्सोदर्योऽपि भोजयितव्यः, किमङ्ग स्यालादय इत्यपिशब्दस्यार्थः ॥

एतेनान्तेवासिनो व्याख्याताः ॥ ६ ॥

एतेन सोदर्येणान्तेवासिनः, बहुवचननिर्देशात्पूर्वनिर्दिष्टा योन्यादिसंबन्धास्सर्व एव, व्याख्याताः, अन्येषामलाभे समुदेता भोजयितव्या इति । अत्र मनुः—

एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
अनुकल्पस्त्वयं ज्ञेयस्सदा सद्भिरनुष्ठितः ॥
मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुं ऋत्विग्याज्यौ च भोजयेत्[1] ॥ इति ॥

अथाप्युदाहरन्ति ॥ ७ ॥

संबन्धिनो न भोज्या इत्यस्मिन्नर्थे धर्मज्ञा वचनमुदाहरन्ति ॥

संभोजिनी नाम पिशाचभिक्षा
नैषा पितॄन्गच्छति नोत देवान् ।
इहैव सा चरति क्षीणपुण्या
शालान्तरे गौरिव नष्टवत्सा ॥ ८ ॥

---

[1] मनु. ३–१४७, १४८.

परस्परं भुञ्जतेऽस्यामिति संभोजिनी। अधिकरणे ल्युट्। नामेदमस्याः पिशाचभिक्षायाः। नैषा पितॄन्गच्छति नापि देवान्। किन्तु क्षीणपुण्या परलोकप्रयोजनरहिता सती सा इहैव लोके चरति। यथा मृतवत्सा गौर्गृहाभ्यन्तर एव चरति न बहिर्गच्छति॥

तद्व्याचष्टे—

इहैव संभुञ्जती दक्षिणा कुलात्कुलं विनश्यतीति॥ ९॥

संभुञ्जती परस्परभोजनस्य निमित्तभूता दक्षिणा श्राद्धदानक्रिया गृहाद्गृहं गत्वा इहैव लोके नश्यतीत्यर्थ इति॥

अथ बहुषु तुल्यगुणेषूपस्थितेषु कः परिग्राह्यः?

तुल्यगुणेषु वयोवृद्धश्श्रेयान् द्रव्यकृशश्चेप्सन्॥

यो वयसा वृद्धः स तावद्ग्राह्यः, तत्रापि यो द्रव्येण कृशः ईप्सन् लिप्समानश्च भवति स ग्राह्यः। यद्वा—वयोवृद्धो ग्राह्यः अद्रव्यकृशोपि, द्रव्यकृशोप्यवृद्धोपीति। द्वयोस्तु समवाये यथारुचीति॥

पूर्वेद्युर्निवेदनम्॥ ११॥

श्राद्धदिनात्पूर्वेद्युः ब्राह्मणेभ्यो निवेदयितव्यम्। श्वः श्राद्धं भविता तत्र भवता आहवनीयार्थे प्रसादः कर्तव्य इति॥

अपरेद्युर्द्वितीयम्॥ १२॥

अपरेद्युः श्राद्धदिने द्वितीयं निवेदनं कर्तव्यम्। अद्य श्राद्धमिति॥

**तृतीयमामन्त्रणम् ॥ १३ ॥**

आमन्त्रणमाह्वानम् भोजनकाले 'सिद्धमागम्यतां' इति तृतीयं भवति ॥

**त्रिःप्रायमेके श्राद्धमुपदिशन्ति ॥ १४ ॥**

न केवलं निवेदनमेव त्रिः भवति। किं तर्हि? यच्च यावच्च श्राद्धे क्रियते तत्सर्वं त्रिरावर्त्यमित्येके मन्यन्ते । अत्र पक्षे होमभोजनपिण्डानामप्यावृत्तिस्तस्मिन्नेवापराह्णे ॥*

**यथा प्रथममेवं द्वितीयं तृतीयं च ॥ १५ ॥**

येन प्रकारेण प्रथमं श्राद्धं तथैव द्वितीयं तृतीयं च कर्तव्यम्॥

**सर्वेषु वृत्तेषु सर्वतस्समवदाय शेषस्य ग्रासवराध्यं प्राश्नीयाद्यथोक्तम् ॥ १६ ॥**

सर्वेषु श्राद्धेषु त्रिष्वपि वृत्तेषु समाप्तेषु सर्वतस्त्रयाणां श्राद्धानां य ओदनशेषः ततस्समवदाय ग्रासवराध्यं प्राश्नीयात्। तथोक्तं गृह्ये–'उत्तरेण यजुषा शेषस्य ग्रासवराध्यं प्राश्नीयात्'[1] इति। तत्र प्रयोगक्रमः–पूर्वेद्युर्नवावरेभ्यो निवेदनम् । तद्वदपरेद्युः प्रातः। भोजनकाले आमन्त्रणम्। ततो होमादिपिण्डनिधानान्तमेकैकमपवृज्य ततस्सर्वतस्समवदाय 'प्राणे निविष्टोमृतम्'[2] इतिमन्त्रेण प्राशनमिति ॥

---

*घ. ञ. ट—दानं व्रतानि नियमः यज्ञो ध्यानं हुतं तपः ।
यत्नेनापि कृतं सर्वं क्रोधिनस्तु वृथा भवेत् ॥
कांस्यमन्नं सुवर्णं च रजतं वस्त्रमेव च ।
तिलं छत्रमुपानच्च दीयते यत्तदष्टकम् ॥ इत्यधिकः पाठः.

[1]आप. गृ. २१-९. [2]तै. मं. २–२०.

**उदीच्यवृत्तिस्त्वासनगतानां हस्तेषूदपात्रानयनम् ॥ १७ ॥**

प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा ।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती ॥

इति वैयाकरणः । तस्याश्शरावत्याः उदक्कीरत्वासिन उदीच्याः, तेषां वृत्तिराचारः, आसनेषूपविष्टानां ब्राह्मणानां हस्तेषूदपात्रानयनम्, उदपात्रादर्घ्यपात्रादप आदायार्घ्यदानमिति । 'पितरिदं ते अर्घ्यम्' 'पितामहेदं ते अर्घ्यम्' 'प्रपितामहेदं ते अर्घ्यम्'[1] इति मन्त्राः आश्वलायनके । यद्यप्युदीच्या वृत्तिरित्युक्तम्, तथापि प्रकरणपाठसामर्थ्यात्सर्वेषामपि भवति ॥

**उद्ध्रियतामग्नौ च क्रियतामित्यामन्त्रयते॥१८॥**

होमकाले 'उद्ध्रियतामग्नौ च क्रियताम्' इत्यनेन मन्त्रेण ब्राह्मणानामन्त्रयते । मन्त्रे अधीष्टे लोट्प्रत्ययः ॥

**काममुद्ध्रियतां काममग्नौ च क्रियतामित्यतिसृष्ट उद्धरेज्जुहुयाच्च ॥ १९ ॥**

अथ ब्राह्मणाः 'काममुद्ध्रियतां काममग्नौ च क्रियताम्' इत्यतिसृजेयुरनुज्ञापयेयुः । तैश्चातिसृष्ट उद्धरेज्जुहुयाच्च । उद्धरणं नाम ब्राह्मणार्थं पक्वादन्नादन्यस्मिन्पात्रे पृथक्करणम् ॥

**श्वभिरपपात्रैश्च श्राद्धस्य दर्शनं परिचक्षते॥२०**

अपपात्राः पतितादयः, प्रतिलोमाश्च । तैः श्राद्धस्य दर्शनं

[1]आश्व. ४-७-१०.

परिचक्षते गर्हन्ते शिष्टाः । अतो यथा ते न पश्येयुः तथा परिश्रृतेन कर्तव्यमिति ॥

**श्वित्रश्शिपिविष्टः परतल्पगाम्यायुधीयपुत्रश्शूद्रोत्पन्नो ब्राह्मण्यामित्येते श्राद्धे भुञ्जानाः पङ्क्तिदूषणा भवन्ति ॥ २१ ॥**

श्वित्रः श्वित्री श्वेतकुष्ठी । शिपिविष्टः खलतिः, विवृतशेफ इत्यन्ये* । परतल्पगामी यः परतल्पं गत्वा अकृतप्रायश्चित्तस्तस्य ग्रहणम् । आयुधीयपुत्रः क्षत्रियवृत्तिमाश्रितो यः आयुधेन जीवति ब्राह्मणस्तस्य पुत्रः । शूद्राद्ब्राह्मण्यामुत्पन्नश्चण्डालः; न तस्य प्रसङ्गः, 'ब्राह्मणान् ब्रह्मविदः'[1] इत्युक्तत्वात् । तस्मादेवं व्याख्येयम् । यः क्रमविवाहे शूद्रायां पुत्रमुत्पाद्य पश्चाद्ब्राह्मण्यामुत्पादयति तस्य पुत्रः शूद्रोत्पन्नो ब्राह्मण्यामिति । स हि पिता शूद्रस्संपन्नः । श्रूयते हि–'तज्जाया जाया भवति यदस्यां जायते पुनः'[2] इति । स्मर्यते च–

यदुच्यते द्विजातीनां शूद्राद्दारोपसङ्ग्रहः ।
न तन्मम मतं यस्मात्तत्रायं जायते स्वयम् ॥ इति[3] ।

एते श्वित्रादयः श्राद्धे भुञ्जानाः पङ्क्तिदूषणा भवन्ति, पङ्क्तिं दूषयन्ति । अतस्ते न भोज्या इति ॥

**त्रिमधुस्त्रिसुपर्णस्त्रिणाचिकेतश्चतुर्मेधः पञ्चाग्निर्ज्येष्ठसामगो वेदाध्याय्यनूचानपुत्रश्श्रोत्रिय**

---

*ङ—विवृतकेशः इत्यन्ये. [1]२–१७–४. [2]बह्वृचब्राह्मणे. [3]या. स्मृ. १-५७.

**इत्येते श्राद्धे भुञ्जानाः पङ्क्तिपावना भवन्ति ॥ २२ ॥**

'मधु वाता ऋतायते'[1] इत्येष तृचस्त्रिमधुः। तत्र हि प्रत्यृचं त्रयो मधुशब्दाः। इह तु तदध्यायी पुरुषस्त्रिमधुः। त्रिसुपर्णः 'चतुष्कपर्दा युवतिस्सुपेशाः'[2] इत्यादिकस्तृचः। अन्ये तु तैत्तिरीयके 'ब्रह्ममेतु माम्'[3] इत्यादयस्त्रयोनुवाका इत्याहुः। तत्र हि 'त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्'[3] इति हि श्रूयते 'आसहस्रात्पङ्क्तिं पुनन्ति'[3] इति च। पूर्ववत्पुरुषे वृत्तिः। त्रिनाचिकेतः, नाचिकेतोग्निर्बहुषु शाखासु अधीयते तैत्तिरीयके कठवल्ल्यादिषु शतपथे च, तं यो वेद मन्त्रब्राह्मणेन सह, स त्रिनाचिकेतः। नाचिकेताग्नेस्त्रिश्चेतेत्यन्ये। विरजानुवाकाध्यायीत्यन्ये, 'प्राणापानव्यानोदान'[4] इत्यादि। अश्वमेधः पुरुषमेधः सर्वमेधः पितृमेध इति चत्वारो मेधाः। तदध्यायी चतुर्मेधः। चतुर्णां यज्ञानामाहर्ता इत्यन्ये। पञ्चाग्निः सभ्यावसथ्याभ्यां सह पञ्चानां काठकाग्नीनामध्येता। ज्येष्ठसाम तलवकाराणां प्रसिद्धम् 'उदु त्यम्'[5] 'चित्रम्'[6] इत्येतयोर्गीतम्। तद्गायतीति ज्येष्ठसामगः। ज्येष्ठसामिक इति पाठे व्रीह्यादित्वाट्ठन्। वेदाध्यायी स्वाध्यायपरः। अनूचानपुत्रः त्रैविद्यपुत्रः। श्रोत्रिय इत्यपि पठन्ति। तदादरार्थं द्रष्टव्यम्। एते श्राद्धे भुञ्जानाः पङ्क्तिं शोधयन्ति। वेदाध्यायीत्यस्यानन्तरं 'इति' शब्दं पठन्ति, सोऽपपाठः। एतेन 'पञ्चाग्नि' इत्यविभक्तिकपाठो व्याख्यातः॥

---

1 तै. सं. ४-२-९. 2 ऋक्सं १०, ११४, 3-6 3 तै. उ. ४-३८, ३९, ४०.
4 तै. उ. ४-६५. 5-6 तै. सं. १-४-४३. 1-2

**न च नक्तꣳ श्राद्धं कुर्वीत ॥ २३ ॥**

श्राद्धकर्मण्यारब्धे कारणाद्विलम्बेन मध्ये यद्यादित्योस्तमियात् तदा श्राद्धशेषं नक्तं न कुर्वीत । अपरेद्युर्दिवैव कुर्वीत ॥

**आरब्धे चाभोजनमा परिसमापनात् ॥ २४ ॥**

पूर्वेद्युर्निवेदनप्रभृति आ पिण्डदानान्मध्ये कर्तुर्भोजनप्रतिषेधः ॥ अनन्तरम् 'अन्यत्र राहुदर्शनात्' इति पठन्ति, 'न च नक्तम्' इत्यस्यापवादः, राहुदर्शने नक्तमपि कुर्वीतेति । उदीच्यास्त्वेतत्प्रायेण न पठन्ति । तथा च पूर्वैर्न व्याख्यातम् । प्रत्युत 'न च नक्तम्' इत्येतत्सोमग्रहणविषयं व्याख्यातम् । पठ्यमानं तु 'न च नक्तम्' इत्यस्यानन्तरं पठितुं युक्तम् ॥

इति सप्तदशः खण्डः.

इत्यापस्तम्बधर्मसूत्रवृत्तावुज्ज्वलायां द्वितीयप्रश्ने
सप्तमः पटलः.

---

**विलयनं मथितं पिण्याकं मधु माꣳसं च वर्जयेत् ॥ १ ॥**

विलयनं नवनीतमलम् । यस्य दध्नो हस्तादिना मथनमात्रं न जलेन मिश्रणं तन्मथितम् । तथा च नैघण्टुकाः—'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्'[1] इति । यन्त्रे पीडितानां तिलानां कल्कः पिण्याकम् । मधुमांसे प्रसिद्धे । मांसमप्रतिषिद्धमपि । एतद्विलयनादिकं वर्जयेत् ॥

---

[1] नामलिंगानु—२-९-५३.

**कृष्णधान्यꣳ शूद्रान्नं ये चान्येऽनाश्यसंमताः ॥**

कृष्णधान्यं कृष्णकुलुत्थादि, न कृष्णव्रीहयः । शूद्रान्नं पक्वमपक्वं च । ये चान्ये अनाश्यत्वेन अभोज्यत्वेन संमताः तांश्च वर्जयेत् ॥

**अहविष्यमनृतं क्रोधं येन च क्रोधयेत् ॥ ३ ॥**

अहविष्यं कोद्रवादि । अनृतं मिथ्यावादः । क्रोधः कोपः । येन च कृतेन उक्तेन वा परं क्रोधयेत् तच्च वर्जयेत् ॥

**स्मृतिमिच्छन्यशो मेधाꣳ स्वर्गं पुष्टिं द्वादशै-तानि वर्जयेत् ॥ ४ ॥**

स्मृतिरधिगतस्य स्मरणम् । यशः ख्यातिः । मेधा प्रज्ञा । स्वर्गपुष्टी प्रसिद्धे । द्वादशैतानि विलयनादीनि वर्जयेत् स्मृत्यादिकमिच्छन् । पुनः 'वर्जयेत्' इति गुणार्थोनुवादः स्मृत्यादिकं फलं विधातुम् । 'द्वादश' इति वचनं विलयनादेरपि ग्रहणार्थम्, अहविष्यादिकमेवानन्तरं मा संग्राहीति ॥

**अधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुप-स्पृशन्ननग्निपक्ववृत्तिरच्छायोपगः स्थाना-सनिकः संवत्सरमेतद्व्रतं चरेत् ॥ ५ ॥**

'अधोनाभ्युपरिजान्वाच्छाद्य' इति व्याख्यातम्[1] । त्रिषवणं त्रिषु सवनेषु प्रातर्मध्यन्दिने सायमिति उदकमुपस्पृशन् स्नानं कुर्वन् अनग्निपक्ववृत्तिः, वृत्तिश्शरीरयात्रा, सा अग्नौ पक्वेन न

[1] आप. ध.—१-२४-११.

कार्या । अग्निग्रहणात्कालपक्वस्याम्रादेरदोषः । अच्छायोपगः छायामनुपगच्छन् । स्थानासनिकः स्थानासनवान्; दिवा स्थानं रात्रावासनं, न कदाचिच्छयनम् । एतत् 'विलयनं मथितम्'[1] इत्यारभ्यानन्तरमुक्तं व्रतं संवत्सरं चरेत् । एतद्व्रतमष्टाचत्वारिंशद्वर्षसाध्येन ब्रह्मचारिव्रतेन सम्मितं सदृशम् । यावत्तस्य फलं तावदस्यापीत्याचक्षते धर्मज्ञाः । न केवलं स्मृत्यादिकमेव प्रयोजनमिति ॥

अपर आह—'विलयनं मथितम्'[1] इत्यादिकं व्रतान्तरं स्मृत्यादिकामस्य । 'अधोनाभि' इत्यादिकन्तु संमितव्रतमिति । एतच्च ब्रह्मचारिणो गृहस्थस्य च भवति । तथा च बोधायनः— 'अष्टाचत्वारिंशत्सम्मितमित्याचक्षते तस्य संक्षेपः संवत्सरस्तं संवत्सरमनुव्याख्यास्यामः स यदि ब्रह्मचारी स्यान्नियममेव प्रतिपद्येताथ यद्यब्रह्मचारी स्यात्केशश्मश्रुलोमनखानि वापयित्वा तीर्थं गत्वा स्नात्वा' इत्यादि ॥

## नित्यश्राद्धम् ॥ ६ ॥

अथाहरहः कर्तव्यं श्राद्धं वक्ष्यते । तस्य नित्यश्राद्धमिति नाम ॥

## बहिर्ग्रामाच्छुचयः शुचौ देशे सꣳस्कुर्वन्ति॥७॥

तन्नित्यश्राद्धं बहिर्ग्रामात्कर्तव्यम् । तस्यान्नसंस्कारः—शुचयः शुचौ देशे अन्नं संस्कुर्वन्ति । 'शुचयः' इति वचनं आधिक्यार्थम्, 'आर्याः प्रयताः'[2] इति पूर्वमेव प्रायत्यस्य विहितत्वात् ॥

---

[1]आप. ध. २-१८-१.    [2]आप. ध.—२–३–१.

**तत्र नवानि द्रव्याणि ॥ ८ ॥**

तत्र नित्यश्राद्धे द्रव्याणि नवान्येव ग्राह्याणि ॥

कानि पुनस्तानि ?

**यैरन्नꣳ सꣳस्क्रियते येषु च भुज्यते ॥ ९ ॥**

यैर्भाण्डैरन्नं संस्क्रियते येषु च कांस्यादिषु भुज्यते तानि नवानीति ॥

**तानि च भुक्तवद्भ्यो दद्यात् ॥ १० ॥**

तानि भाण्डानि कांस्यादीनि च भुक्तवद्भ्यो ब्राह्मणेभ्यो दद्यात् । एवं प्रत्यहम् ॥

**समुदेताꣳश्च भोजयेत् ॥ ११ ॥**

समुदेतवचनं गुणाधिक्यार्थम् ॥

**न चातद्गुणायोच्छिष्टं प्रयच्छेत् ॥ १२ ॥**

भाण्डेषु यद्भुक्तशिष्टं तदिहोच्छिष्टम् । तदप्यतद्गुणाय भुक्तवतां ये गुणाः तद्रहिताय न दद्यात् । तद्गुणायैव दद्यादिति ॥

**एवꣳ संवत्सरम् ॥ १३ ॥**

एवमेतन्नित्यश्राद्धं संवत्सरं कर्तव्यमहरहः ॥

**तेषामुत्तमं लोहेनाजेन कार्यम् ॥ १४ ॥**

तेषां संवत्सरस्याह्नां उत्तममहः समाप्तिदिनं लोहेन लोहितवर्णेन अजेन कार्यं कर्तव्यम् । दृश्यते चान्यत्राप्येतस्मिन्नर्थे लोहशब्दः । 'लोहस्तूपरो भवत्यप्यतूपरः', 'कृष्णसारङ्गो

लोहसारङ्गो वा ' इति* । चमकेषु च भवति—' श्यामं च मे लोहं च मे '[1] इति ॥

## मानं च कारयेत्प्रतिच्छन्नम् ॥ १५ ॥

मानं धिष्ण्यं वेदिका। दृश्यते हि मिनोतेरस्मिन्नर्थे प्रयोगः ' अग्रेणाग्नीध्रं चतुरस्रावं विमितं विमिन्वन्ति पुरस्तादुन्नतं पश्चान्निनतम् ' इति। तस्यैवायमुपसर्गरहितस्य प्रयोगः । तन्मानं कारयेत्कर्मकरैः । प्रतिच्छन्नं च तद्भवति तिरस्करिण्यादिना । इदमपि ग्रामाद्बहिरेव ॥

## तस्योत्तरार्धे ब्राह्मणान्भोजयेत् ॥ १६ ॥

तस्य मानस्योत्तरस्मिन्नर्धे ब्राह्मणा भोजयितव्याः ॥

## उभयान्पश्यति ब्राह्मणांश्च भुञ्जानान्माने च पितॄनित्युपदिशन्ति ॥ १७ ॥

अस्यैवंकृतस्य कर्मणो महिम्ना उभयान् पश्यति । कांश्च कांश्च? ब्राह्मणांश्च भुञ्जानान् तस्मिन्नेव च माने पितॄन् । यथा ब्राह्मणान् भुञ्जानान् प्रत्यक्षेण पश्यति तथा माने समागतान् पितॄनपि प्रत्यक्षेणेव पश्यतीत्युपदिशन्ति धर्मज्ञाः ॥

## कृताकृतमत ऊर्ध्वम् ॥ १८ ॥

अत ऊर्ध्वं श्राद्धं क्रियतां वा, मा वा कारि । अकरणे न प्रत्यवाय इति ॥

## श्राद्धेन तृप्तिं हि वेदयन्ते पितरः ॥ १९ ॥

---

*घ. ञ—' स्थूलः पीवा श्मश्रुणः ' इत्यधिकः पाठः. [1]तै. सं. ४-७-५.

हि यस्मात् अन्त्येऽहनि यत् दर्शनमुपगच्छन्ति तच्छ्राद्धेन तृप्तिं वेदयन्ते ज्ञापयन्ति श्राद्धस्य कर्तारम् । तस्मात्कृताकृतमिति ॥

अथ पुष्टिकामस्य प्रयोगः 'तिष्येण' इत्यादिः 'उच्छिष्टं दद्युः' इत्यन्त एकः—

**तिष्येण पुष्टिकामः ॥ २० ॥**

इति द्वितीये अष्टादशः खण्डः.

---

**गौरसर्षपाणां चूर्णानि कारयित्वा तैः पाणिपादं प्रक्षाळ्य मुखं कर्णौ प्राश्य च यद्वातो नातिवाति तदासनोऽजिनं बस्तस्य प्रथमः कल्पो वाग्यतो दक्षिणामुखो भुञ्जीत॥ १ ॥**

पुष्टिकामः पुरुषो वक्ष्यमाणं प्रयोगं कुर्यात् तिष्येण तिष्यनक्षत्रेण । 'नक्षत्रे च लुपि' इत्यधिकरणे तृतीया । तिष्ये नक्षत्रे गौरसर्षपाणां संबन्धीनि चूर्णानि कर्मकरैः कारयेत् । कारयित्वा तैश्चूर्णैः पाणी पादौ मुखं कर्णौ च प्रक्षाळयेत् । प्रक्षाळ्य चूर्णशेषं प्राश्नीयात् । 'प्रास्य' इति पाठे, प्रास्येत् विकिरेत् । एतावत्प्रतितिष्यं विशेषकृत्यम् । परं तु प्रत्यहं कर्तव्यम् । प्राश्य च यदासनं वातो नातिवाति अधो नातीत्य वाति तदासनः तादृगासनः भुञ्जीतेति वक्ष्यमाणेन संबन्धः । तत्र बस्तस्याजिनमासनं स्यादिति मुख्यः कल्पः । वाग्यतो दक्षिणां दिशमभिमुखो भुञ्जीत ॥

**अनायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्ति ॥ २ ॥**

यत् एवंमुखस्य दक्षिणामुखस्य भोजनं तद्भोक्तुः या माता तस्या अनायुष्यं अनायुष्करमिति धर्मज्ञा उपदिशन्ति । तस्मान्मातृमता नैतद्व्रतं कार्यमिति ॥

**औदुम्बरश्चमसस्सुवर्णनाभः प्रशास्तः ॥ ३ ॥**

चमु भक्षणे, यत्र चम्यते स चमसो भोजनपात्रम् । औदुम्बरस्ताम्रमयः । सुवर्णनाभः सुवर्णेन मध्ये अलङ्कृतः स प्रशास्तः प्रशस्तो भोजने ॥

**न चान्येनापि भोक्तव्यम् ॥ ४ ॥**

न चान्येन कर्तुः पित्रापि तत्र पात्रे भोक्तव्यम् । अपिर्धात्वर्थानुवादी । 'भोक्तव्यः' इति पुल्लिङ्गपाठेप्येष एवार्थः ॥

**यावद्ग्रासꣳ सन्नयन्नस्कन्दयन्नापजिहीतापजिहीत वा कृत्स्नं ग्रासं ग्रसीत सहाङ्गुष्ठम् ॥ ५ ॥**

यावद्ग्रासं यावदेव ग्रसितुं शक्यं तावदेव सन्नयन् पिण्डीकुर्वन् अस्कन्दयन् भूमावन्नलेपानपातयन् कृत्स्नं ग्रासं ग्रसीतेत्यन्वयः । सहाङ्गुष्ठं आस्ये ग्रासप्रवेशे यथाङ्गुष्ठोप्यनुप्रविशति तथा सर्वानेव ग्रासानुक्तेन प्रकारेण ग्रसीत । ग्रसतो मध्ये क्रियान्तरविधिः—नापजिहीत भोजनपात्रं सव्येन पाणिना न विमुञ्चेत्, अपजिहीत वा मुञ्चेद्वा । किमर्थमिदं यावता न

प्रकारान्तरं संभवति ? सत्यम् । 'प्रक्रमात्तु नियम्येत '[1] इति न्यायेन य एव प्रकारः प्रथमभोजने स एवाऽन्तादनुष्ठेय इत्येवमर्थमिदम् ॥

न च मुखशब्दं कुर्यात् ॥ ६ ॥

भोजनदशायामिदम् । एवमुत्तरम् ॥

पाणिं च नावधूनुयात् ॥ ७ ॥

पाणिरत्र दक्षिणः ॥

आचम्य चोर्ध्वौ पाणी धारयेदा प्रोदकीभावात् ॥ ८ ॥

भुक्त्वाऽऽचम्य पाणी ऊर्ध्वं धारयेत् यावत्प्रगतोदकौ शुष्कौ भवतः ॥

ततोऽग्निमुपस्पृशेत् ॥ ९ ॥

भुक्त्वा नियमेनाग्निरुपस्प्रष्टव्यः ॥

दिवा च न भुञ्जीतान्यन्मूलफलेभ्यः ॥ १० ॥

मूलानि कन्दाः, फलान्याम्रादीनि, तेभ्योऽन्यद्दिवा न भुञ्जीत । तद्भक्षणे न दोषः ॥

स्थालीपाकानुदेश्यानि* च वर्जयेत् ॥ ११ ॥

'तेन सर्पिष्मता ब्राह्मणं भोजयेत् '[2] इत्यादौ ब्राह्मणो भूत्वा न भुञ्जीत । अनुदेश्यानि पितृभ्यो देवताभ्यश्च संकल्पितानि, तानि न भुञ्जीत ॥

---

*घ. ङ—'नुद्देश्यानि' इति पाठः. [1]ममां—६-२-१३., [2]आप. ध. २-२०-३.

**सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत ॥१२॥**

उत्तराच्छादनमुपरिवासः तेन यज्ञोपवीतं कृत्वा भुञ्जीत। नास्य भोजने 'अपि वा सूत्रमेवोपवीतार्थे'[1] इत्ययं कल्पो भवतीत्येके। समुच्चय इत्यन्ये ॥

**नैयमिकं तु श्राद्धꣳ स्नेहवदेव दद्यात् ॥ १३ ॥**

यन्नियमेन कर्तव्यं मासिश्राद्धं तत् स्नेहद्रव्ययुक्तमेव दद्यात् न शुष्कम् ॥

तत्र विशेषः—

**सर्पिर्माꣳसमिति प्रथमः कल्पः ॥ १४ ॥**

स्पष्टम् ॥

**अभावे तैलꣳ शाकमिति ॥ १५ ॥**

सर्पिषोऽभावे तैलं, मांसस्याभावे शाकम्। इतिशब्दात् यच्चान्यदेवं युक्तम् ॥

**मघासु चाधिकꣳ श्राद्धकल्पेन सर्पिर्ब्राह्मणान्भोजयेत् ॥ १६ ॥**

मघासु च पूर्वपक्षेपि श्राद्धविधानेन सर्पिर्मिश्रमन्नं ब्राह्मणान्भोजयेत् ॥

इत्येकोनविंशः खण्डः.

---

[1] आप. ध. २-४-२२.

**मासिश्राद्धे तिलानां द्रोणंद्रोणं येनोपायेन शक्नुयात्तेनोपयोजयेत् ॥ १ ॥**

येनोपायेन उपयोजितुं शक्नुयात् अभ्यङ्गे उद्वर्तने भक्ष्ये भोज्ये चेति तेनोपायेन मासिश्राद्धे तिलानां द्रोणंद्रोणं उपयोजयेत् । तत्रैकैकस्य ब्राह्मणस्य द्रोणंद्रोणमुपयोजयितुमशक्यत्वात् समुदिताना उपयोजयेत् । 'द्रोणंद्रोणम्' इति वीप्सावचनं तु प्रतिमासिश्राद्धमुपयोजनार्थमिति केचित् । अन्ये तु एवंभूताः प्रबलाः प्रयत्नेनान्विष्य भोजयितव्या इति ॥

**समुदेताꣳश्च भोजयेन्न चातद्गुणायोच्छिष्टं दद्युः ॥**

व्याख्यातमिदम्[1] । 'दद्युः' इति बहुवचनं तथाविधकर्तृबहुत्वापेक्षम् । वचनव्यत्ययो वा ॥

अथ पुष्टिकामस्यापरः प्रयोगः आपटलपरिसमाप्तेः–

**उदगयन आपूर्यमाणपक्षस्यैकरात्रमवरार्ध्यमुपोष्य तिष्येण पुष्टिकामस्स्थालीपाकꣳ श्रपयित्वा महाराजमिष्ट्वा तेन सर्पिष्मता ब्राह्मणं भोजयित्वा पुष्ट्यर्थेन सिद्धिं वाचयीत ॥ ३ ॥**

पुष्टिकमः पुरुषः एकरात्रमवरमुपवासं कृत्वा उदगयने आपूर्यमाणपक्षस्य पूर्वपक्षस्य संबन्धिना तिष्येण तस्मिन्नक्षत्रे स्थाली-

---

[1]आप. ध. २-१८-१०, ११.

पाकं श्रपयित्वा महाराजं वैश्रवणं यजेत । आज्यभागान्ते 'महाराजाय स्वाहा' इति प्रधानहोमः, स्विष्टकृदादि, जयादयः । परिषेचनान्ते तेन सर्पिष्मता स्थालीपाकेन ब्राह्मणं भोजयेत् । उत्तरविवक्षयेदं वचनम् । भोजयित्वा सिद्धिं वाचयीत पुष्टिरस्त्विति ॥

## एवमहरहरा परस्मात्तिष्यात् ॥ ४ ॥

एवमिदं स्थालीपाकश्रपणादि सिद्धिवाचनान्तमहरहः कर्तव्यमा परस्मात्तिष्यात् यावदपरस्तिष्य आगच्छति ॥

## द्वौ द्वितीये ॥ ५ ॥

द्वितीये तिष्ये प्राप्ते द्वौ भोजयेत् । अन्यत्समानम् । एवमा तृतीयात् ॥

## त्रीꣳस्तृतीये ॥ ६ ॥

तृतीये तु तिष्ये त्रीन् भोजयेत्, आ चतुर्थात् ॥

## एवꣳ संवत्सरमभ्युच्चयेन ॥ ७ ॥

एवमेतत्कर्म यावत्संवत्सरः परिपूर्यते तावत्कर्तव्यम् । ब्राह्मणभोजनं चाभ्युच्चयेन भवति । चतुर्थप्रभृति चत्वारः, पञ्चमप्रभृति पञ्चेति, एवमादि ॥

एवं कृते फलमाह—

## महान्तं पोषं पुष्यति ॥ ८ ॥

महत्या पुष्ट्या युक्तो भवति ॥

आदित एवोपवासः ॥ ९ ॥

उपवासस्त्वादित एव पुण्ये भवति, न प्रतितिष्यम् ॥

आत्ततेजसां भोजनं वर्जयेत् ॥ १० ॥

आत्ततेजांसि तक्रवाजिनादीनि। तानि नोपभुञ्जीत ॥

भस्मतुषाधिष्ठानम् ॥ ११ ॥

वर्जयेदित्येव। भस्मतुषांश्च नाधितिष्ठेत् नाक्रामेत् ॥

पदा पादस्य प्रक्षाळनमधिष्ठानं च वर्जयेत् ॥

एकेन पादेन पादान्तरस्य प्रक्षालनं अधिष्ठानं च वर्जयेन्न कुर्यात् ॥

प्रेङ्खोळनं च पादयोः ॥ १३ ॥

प्रेङ्खोळनं आन्दोळनं इतस्ततश्चालनम् ॥

जानुनि चात्याधानं जङ्घायाः ॥ १४ ॥

एकस्मिन् जानुनि इतरस्या जङ्घाया अत्याधानमवस्थानं वर्जयेत् ॥

नखैश्च नखवादनम् ॥ १५ ॥

स्पष्टम् ॥

स्फोटनानि चाकारणात् ॥ १६ ॥

पर्वसन्धीनां स्फोटनानि च वर्जयेत् अकारणात्। कारणं श्रमवातादि। 'वादनस्फोटनानि' इति समासपाठेऽप्येष एवार्थः॥

यच्चान्यत्परिचक्षते ॥ १७ ॥

यच्चान्यदुक्तव्यतिरिक्तं तृणच्छेदनादि शिष्टाः परिचक्षते गर्हन्ते तदपि वर्जयेत् ॥

योक्ता च धर्मयुक्तेषु द्रव्यपरिग्रहेषु च ॥ १८॥

एकश्चशब्दोऽनर्थकः । केचिच्च नैव पठन्ति । धर्माविरुद्धा ये द्रव्यपरिग्रहाः तेषु च योक्ता उत्पादयिता स्यात्, न निरीहस्स्यात् ॥

प्रतिपादयिता च तीर्थे ॥ १९ ॥

तीर्थं गुणवत्पात्रं यज्ञो वा, तत्र द्रव्यस्यार्जितस्य प्रतिपादयिता स्यात् ॥

यन्ता चातीर्थे यतो न भयꣳ स्यात् ॥ २० ॥

यन्ता नियन्ता अदाता, अतीर्थे अप्रदाता च स्यात्, यतः पुरुषादप्रदानेपि भयं न स्यात् । भयसम्भवे तु पिशुनादिभ्योपि देयम् ॥

सङ्ग्रहीता च मनुष्यान् ॥ २१ ॥

अर्थप्रदानप्रियवचनानुसरणादिभिः मनुष्याणां सङ्ग्रहणशीलस्स्यात् ॥

भोक्ता च धर्माविप्रतिषिद्धान्भोगान् ॥ २२ ॥

धर्माविरुद्धाः ये भोगाः स्रक्चन्दनस्वभार्यासेवनादयः तेषां च भोगशीलस्स्यात् ॥

एवमुभौ लोकावभिजयति ॥ २३ ॥

एवं महत्या पुष्टया युक्तः उक्तप्रकारमनुतिष्ठन् उभौ लोकावभिजयति, भोगेनेमं लोकं, तीर्थे प्रतिपादनेन चामुं लोकमिति॥

इति विंशः खण्डः.

इत्यापस्तम्बधर्मसूत्रवृत्तौ उज्ज्वलायां द्वितीयप्रश्ने
अष्टमः पटलः.

---

'सर्वाश्रमाणां समयपदानि' [1]इत्युक्तं पुरस्तात्। के पुनस्त आश्रमा इति? आह—

**चत्वार आश्रमा गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यमिति ॥ १ ॥**

आश्रम्यन्ते येषु श्रेयोर्थिनः पुरुषा इत्याश्रमाः। एषा सामान्यसंज्ञा, उत्तरा विशेषसंज्ञा। गृहे तिष्ठति कुटुम्बरक्षणपर इति गृहस्थः, तस्य भावो गार्हस्थ्यं, स एक आश्रमः। आचार्यकुलं आचार्यकुले वासः लक्षणया, सोप्येकः। मनु अवबोधने, मनुत इति मुनिः ज्ञानपरः, तस्य भावो मौनं, सोपरः। वनं प्रतिष्ठत इति वनप्रस्थः, स एव वानप्रस्थः, प्रज्ञादित्वादण्, तस्य भावो वानप्रस्थ्यम्। इतिशब्दः परिसमाप्त्यर्थः। एतावन्त एवाश्रमा इति। चतुर्णामेवोपदेशेपि 'चत्वार आश्रमाः' इति वचनं 'ऐकाश्रम्यन्त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य'[2] इति स्मृत्यन्तरोक्तं मा ग्राहीति॥

---

[1]आप. ध. १-२३-६.      [2]गौ. ध. ३-३६.

**तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति ॥ २ ॥**

तेष्वाश्रमेषु चतुर्ष्वपि यथाशास्त्रमव्यग्रः समाहितमना भूत्वा यो वर्तते स क्षेममभयं पदं गच्छति । अनेनाश्रमविकल्प उक्तो वेदितव्यः । निश्श्रेयसार्थिना अन्यतमस्मिन्नाश्रमे यथाशास्त्रमवहितेन वर्तितव्यमिति । तथा च गौतमः—'तस्याश्रमविकल्पमेके ब्रुवते'[1] इति ॥

**सर्वेषामुपनयनप्रभृति समान आचार्यकुले वासः ॥ ३ ॥**

उपनयनप्रभृति आचार्यकुले वासः अष्टाचत्वारिंशद्वर्षादीनामन्यतमः सर्वेषामाश्रमाणां समानः ॥

**सर्वेषामनूत्सर्गो विद्यायाः ॥ ४ ॥**

अनूत्सर्गः, छान्दसो दीर्घः, विद्याया अनुत्सर्गोपि सर्वेषामाश्रमाणां समानः । तस्मादाचार्यकुले वासः समान इति ॥

**बुद्ध्वा कर्माणि यत्कामयेत तदारभेत ॥ ५ ॥**

प्रत्याश्रमं यानि कर्माणि विहितानि तानि बुद्ध्वा गृहस्थस्यैतानि कर्तव्यानि, एषामननुष्ठाने प्रत्यवायः, फलञ्चेदं, एषामेतानि शक्यान्यनुष्ठातुं, नैतानि इत्याचार्यादुपश्रुत्य यत्कर्म फलं वा कामयेत तदारभेत, तमाश्रमं प्रतिपद्येतेति ॥

तत्र गार्हस्थ्यस्य पूर्वमेव प्रपञ्चितत्वादध्ययनानन्तरं प्रतिपित्सितस्याचार्यकुलस्य स्वरूपमाह—

---

[1] गौ. ध. ३-१.

## यथा विद्यार्थस्य नियम एतेनैवाऽन्तमनूपसीदत आचार्यकुले शरीरन्यासो ब्रह्मचारिणः॥६॥

यथा विद्यार्थस्योपकुर्वाणस्य ब्रह्मचारिणः 'अथ ब्रह्मचर्यविधिः'[1] इत्यारभ्य अग्नीन्धनादिनियम उक्तः, अनेनैव नियमेनाऽन्तमा शरीरपातादनूपसीदनः उपसदनं कुर्वनः आचार्यकुले शरीरन्यासः शरीरपरित्यागो भवति ब्रह्मचारिणो नैष्ठिकस्य। तत्रैवा मरणात्तिष्ठेत्, नाश्रमान्तरं गच्छेत्, यदि तमेवाश्रममात्मनः क्षेमं मन्येतेति। अत्र मनुः—

आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते।
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत्॥
एषु त्वविद्यमानेषु स्थानासनविहारवान्।
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः॥
एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः।
स गच्छत्युत्तमं स्थानं न चेहाजायते पुनः[2]॥ इति॥

## अथ परिव्राजः॥ ७॥

अथ अनन्तरं परिव्राजो धर्म उच्यते। दृष्टादृष्टार्थान् सर्वानेवारम्भान् परित्यज्य आत्मलाभाय संन्यासाश्रमं परिव्रजतीति परिव्राट् संन्यासी॥

## अत एव ब्रह्मचर्यवान्प्रव्रजति॥ ८॥

अत एव ब्रह्मचर्याश्रमात् ब्रह्मचर्यवान् अविप्लुतब्रह्मचर्यः प्रव्रजति प्रव्रज्यां कुर्यात् यदि तदेव पक्वकषायो भवति। श्रूयते

---

[1]आप. ध. १–२–१८.   [2]मनुस्मृ. २-२४७-४९.

च—' ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा '[1] इति, ' यदहरेव विरजेत्तदहरेव प्रव्रजेत् '[1] इति च ।* ' अत एव ' इति वचनात् गृहाश्रमं प्रविष्टस्य तत्परित्यागेनाश्रमान्तरप्राप्तिः आचार्यस्यानभिमतैवेति लक्ष्यते । तत्रायमभिप्रायः—दारपरिग्रहे सति ' यावज्जीवमग्निहोत्रं जुहुयात् ' इति श्रुत्या विरुध्यते, स कथं प्रव्रजेदिति । तस्मात्सत्यपि वैराग्ये काम्यकर्मणः परित्यागेन नित्यानि नैमित्तकानि च कर्माणि कुर्वन् प्रतिषिद्धानि च वर्जयन् गृहस्थ एव मुच्यत इति । यथाह याज्ञवल्क्यः—

न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत्सत्यवादी च गृहस्थोपि विमुच्यते[2] ॥ इति ॥

अथ योऽनाहिताग्निः तस्य विरक्तस्य मुन्याश्रमप्रवेशे को विरोधः? ऋणश्रुतिविरोधः । ' जायमानो वै ब्राह्मणस्त्रिभिर् ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः '[3] इति ॥ मनुरपि—

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः[4] ॥ इति ।

मोक्षो मोक्षाश्रमः । नन्वेवं ब्रह्मचर्यादपि प्रव्रज्या नोपपद्यते । अथ तत्र ' यदहरेव विरजेत् '[1] इति श्रुत्या युक्तं प्रव्रजितुम् । विरक्तस्य गृहस्थस्यापि युक्तं भविष्यति; स्मर्यते च—

प्राजापत्यां निरुप्येष्टिं सर्ववेदसदक्षिणाम् ।
आत्मन्यग्नींत्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्[5] ॥ इति ।

---

*क. ख—' अत्र केचिदाहुः ' इत्यधिकम्.

[1]जाबाल. ४. [2]या. ३-२०५. [3]तै. सं. ६-३-१०.
[4]मनुस्मृ. ६-३५. [5]मनु. ६-३८.

तथा यो गृहस्थो वृद्धो मृतभार्यः पुनर्दारक्रियायामसमर्थः तस्यापि युज्यते प्रव्रज्या । तस्मात् 'यदहरेव विरजेत्'[1] इत्येष एव कालः प्रव्रज्यायाः, सर्वमन्यदविरक्तस्येति युक्तम् । एवकारस्तु सूत्रे श्रुत्यनुसारेण प्रयुक्तः, यथा—'गृहाद्वा वनाद्वा' इति ब्रुवाणैव श्रुतिः 'ब्रह्मचर्यादेव प्रव्रजेत्'[1] इत्याह तथेति ॥

**तस्योपदिशन्ति ॥ ९ ॥**

तस्य परिव्राजः कर्तव्यमुपदिशन्ति धर्मज्ञाः ॥

**अनग्निरनिकेतस्स्यादशर्माऽशरणो मुनिः ।
स्वाध्याय एवोत्सृजमानो वाचं ग्रामे प्राणवृत्तिं प्रतिलभ्यानिहोऽनमुत्रश्चरेत् ॥१०॥**

ब्रह्मचारिणः समिदाधानमग्निकार्यं, गृहस्थस्यौपासनमग्निहोत्रहोमादि, वानप्रस्थस्य 'श्रामणकेनाग्निमाधाय'[2] इति विहितेनाग्नौ होमादि । तस्य तु नैवंविधं किञ्चिदग्निकार्यमस्तीत्यनग्निः । निकेतो निवासस्थानं स्वभूतं, तदभावादनिकेतः । शर्म सुखं तस्य नास्तीत्यशर्मा । किञ्चिदपि शरणत्वेनाप्रतिपन्नः, न वा कस्य चिच्छरणभूत इत्यशरणः । स्वाध्यायः प्रणवादिपवित्राणां जपः । अत्र बोधायनः—'वृक्षमूलो वेदन्यासी वेदो वृक्षस्तस्य मूलं प्रणवः प्रणवात्मको वेदः प्रणवो ब्रह्मभूयाय कल्पत इति होवाच प्रजापतिः'[3] इति । तत्रैव वाचं विसृजेत् । अन्यत्र मौनव्रतस्स्यात् । यावता प्राणा ध्रियन्ते सा प्राणवृत्तिः तावतीं भिक्षां ग्रामे प्रतिलभ्य । एतावानस्य ग्रामे प्रवेशः, अन्यदा

[1]जाबाल. ४. [2]गौ. ध. ३-२७. [3]बौ. २-१८-२४,,,२६.

बहिर्वासः। इहार्थाः कृष्यादयः परलोकार्थाश्च जपहोमादयः यस्य न सन्ति सोऽनिहोऽनमुत्र इत्युक्तः। एवम्भूतश्चरेत्। नैकस्मिन्ग्रामे द्व्यहमात्रमपि वसेत्। अत्र गौतमः–'न द्वितीयामपर्तु रात्रिं ग्रामे वसेत्'[1] इति 'वर्षासु ध्रुवशीलः'[1] इति॥

**तस्य मुक्तमाच्छादनं विहितम्॥ ११॥**

यत्परैर्मुक्तं परित्यक्तमयोग्यतया तदस्य विहितमाच्छादनं, तदसावाच्छादयेत्। 'निर्णिज्य'[2] इति गौतमः॥

**सर्वतः परिमोक्षमेके॥ १२॥**

सर्वैरेव वासोभिः परिमोक्षमेके उपदिशन्ति न किञ्चिदपि वासो बिभृयात्, नग्न एव चरेदिति। अपर आह–सर्वतो विधितो निषेधतश्च अस्य परिमोक्षमेके ब्रुवते, न किञ्चिदस्य कृत्यं, न किञ्चिदस्य वर्ज्यमिति॥

एतदेवोदाहरणैः प्रपञ्चयति–

**सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्॥ १३॥**

सत्यं वक्तव्यमिति यो नियमः तं परित्यज्य, तथा 'तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते।'[3] इत्यादिके विषये अनृतं वक्तव्यमिति यो नियमस्तं च परित्यज्य, सुखं मृष्टभोजनादिजन्यं, दुःखं शीतवातादिजन्यं, वेदान् स्वाध्यायाध्ययनं, इमं लोकं ऐहलौकिकं काम्यं कर्म, अमुं च पारलौकिकं च काम्यं सर्वमेतत्परित्यज्य आत्मानं अध्यात्मपटलोक्तं अन्विच्छेत् उपासीतेति॥

---

[1]गौ. ध. ३-२१, १३. [2]गौ. ध. ३-१९. [3]मनु. ८-१०४.

तदेवं ज्ञानबलावलम्बनेन* हतविधिनिषेधा ये स्वैरं प्रवर्तन्ते सिद्धानां तेषां मतमुपन्यस्तम् । अथैषामेवं स्वैरचारिणां किं त्राणं? तत्राह—

वृद्धे क्षेमप्रापणम् ॥ १४ ॥

आत्मनि वृद्धे अवगते सति तदेव ज्ञानं सर्वमशुभं प्रक्षाल्य क्षेमं प्रापयति । श्रूयते हि—'न वर्धते कर्मणा नो कनीयान् तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेन'[1] 'यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते'[2] इति। स्मर्यते च—

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ॥[3] इति ।

तदिदं निराकरोति—

तच्छास्त्रैर्विप्रतिषिद्धम् ॥ १५ ॥

यानि यतेरेव कर्तव्यकर्मप्रतिपादकानि शास्त्राणि तैरेव तद्विप्रतिषिद्धम् । तत्र मनुः—

क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।
सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ॥
न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥[4] इति।

---

*ङ. ट—'बलव्याजेन' इति पाठः. [1]बृ. ६-४-२३.
[2]छा. ५-२४-३. [3]गीता—४-३७. [4]मनु. ६-४८, ५०.

अतो यतिमेव प्रकृत्य यानि कर्माणि विहितानि तानि कर्तव्यानि* ॥

'बुद्धे क्षेमप्रापणम्' इत्येतच्च प्रत्यक्षविरुद्धमित्याह—

**बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत ॥**

आत्मबोधमात्रेण चेत् क्षेमं प्राप्यते इहैव शरीरे दुःखं नोपलभेत ज्ञानी । न चैतदस्ति । न हि ज्ञानिनां मूर्धाभिषिक्तम्मन्योपि क्षुधादुःखमेव तावत् क्षणमात्रं सोढुं प्रभवति ॥

**एतेन परं व्याखातम् ॥ १७ ॥**

परलोकभवमपि दुःखमेतेनैव व्याख्यातम्, न स्वैरचारिणां निवर्तत इति । तस्मात् स्वकर्मभिः परिपक्वकषायः श्रवणमनननिदिध्यासनैः साक्षात्कृतात्मस्वरूपः प्रतिषिद्धेषु कटाक्षमप्यनिक्षिपन् अष्टाङ्गयोगनिरतो मुच्यत इति । अत्र बोधायनः—'एकदण्डी त्रिदण्डी वा'[1] इति । गौतमोपि 'मुण्डशिखी वा'[2] इति ॥

**अथ वानप्रस्थः ॥ १८ ॥**

अनन्तरं वानप्रस्थाश्रम उच्यते ॥

---

*क. ख. झ—यानि च निषिद्धानि तानि वर्ज्यानि । यत्तूक्तं 'ज्ञानेन सर्वं दह्यते' इति तत्र ज्ञानवद्दशायां प्रागार्जितानि कर्माणि प्रायश्चित्तेन विनापि ज्ञानेनापि दह्यत इत्युच्यते, न पुनः ज्ञानदशायां स्वैराचारोनुज्ञायते, यस्य हि स्वशरीरे बीभत्सा स कथं पश्वादिभिरविशेषं स्त्रीसङ्गादौ प्रवर्तते इति' इत्यधिकः पाठः

[1] ब. २-१८-१. [2] गौ. ध. ३-२२.

**अत एव ब्रह्मचर्यवान्प्रव्रजति ॥ १९ ॥**

प्रव्रजति प्रकर्षेण व्रजति अपुनःप्रवेशाय वनं प्रतिष्ठत इति । तथा च गौतमः—'ग्रामं च न प्रविशेत्'[1] इति । गतमन्यत् । उत्तरं च ॥

**तस्योपदिशन्ति ॥ २० ॥**

**एकाग्निरनिकेतस्स्यादशर्माऽशरणो मुनिः ।**
**स्वाध्याय एवोत्सृजमानो वाचम् ॥ २१ ॥**

कः पुनरस्यैकाग्निः? न तावदौपासनं, ब्रह्मचारित्वात् । तस्माल्लौकिकाग्नौ यथापूर्वं सायं प्रातः समिध आदध्यादित्यर्थो विवक्षितः । अपर आह—'श्रामणकेनाग्निमाधाय'[2] इति गौतमः । श्रामणकं नाम वैखानससूत्रं,* तदुक्तेन प्रकारेण एकोऽग्निराधेयः, तस्मिन् सायं प्रातः अग्निकार्यमिति । अन्यद्गतम् ॥

इत्येकविंशः खण्डः.

---

**तस्यारण्यमाच्छादनं विहितम् ॥ १ ॥**

अरण्ये भवमारण्यं अजिनवल्कलादि ॥

**ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयंश्चरेत् ॥ २ ॥**

---

[1] गौ. ध. ३-३३.　[2] गौ. ध. ३-२७.

*घ. ङ—'सदाचारेण वैखानसोक्तेन मूलफलाशी तपश्शीलः सवनेषूदकमुपस्पृशन् श्रामणकेनाग्निमुपसमाधायेति' इत्यधिकः पाठः.

ततो मूलादिभिर्वर्तयन् वृत्तिं प्राणयात्रां कुर्वन् चरेत् चरणशीलस्स्यात् ॥

**अन्ततः प्रवृत्तानि ॥ ३ ॥**

मूलादिभिः स्वयंगृहीतैः कञ्चित्कालं वर्तयित्वा अन्ततः अन्ते प्रवृत्तानि स्वयमेव पतितानि । 'अभिनिश्रयेत्' इति वक्ष्यमाणेन सम्बन्धः । तान्यभिनिश्रित्य तैः वर्तयेदिति ॥

**ततोपो वायुमाकाशमित्यभिनिश्रयेत् ॥ ४ ॥**

ततः कञ्चित्कालमब्भक्षः, ततो वायुभक्षः, ततः आकाशमभिनिश्रयेत् न किञ्चिद्भक्षयेत् । अभिनिश्रयणं सेवनम् ॥

**तेषामुत्तरउत्तरस्संयोगः फलतो विशिष्टः ॥५॥**

संयुज्यते संश्रीयत इति संयोगः । तेषां मूलादीनां मध्ये उत्तरमुत्तरं द्रव्यं संश्रीयमाणं फलतो विशिष्टमिति ॥

**अथ वानप्रस्थस्यैवानुपूर्व्यमेक उपदिशन्ति॥६॥**

अथेति पक्षान्तरोपन्यासे । पूर्वं ब्रह्मचर्यादेव वनप्रवेश उक्तः । एके त्वाचार्याः तस्यैव वानप्रस्थस्यानुपूर्व्यं कर्माण्युपदिशन्ति ॥

कथम् ?—

**विद्यां समाप्य दारं कृत्वाऽग्नीनाधाय कर्माण्यारभते सोमावरार्ध्यानि यानि श्रूयन्ते ॥७॥**

ब्रह्मचर्ये स्थितो विद्यां समाप्य गृहस्थश्च भूत्वा अग्नीनाधाय कर्माणि कुर्यात् । कानि? सोमावरार्ध्यानि, अवरार्ध

पश्चार्धे, तत्र भवोऽवरार्ध्यः, सोमोऽवरार्ध्यो येषां तानि सोमावरार्ध्यानि सोमान्तानि हविर्यज्ञाख्यानि, चातुर्मास्यादीन् हविर्यज्ञान् सोमं चेत्यर्थः। यानि श्रूयन्ते यानि श्रुतौ विहितानि ॥

**गृहान्कृत्वा सदारस्सप्रजस्सहाग्निभिर्बहिर्ग्रामाद्वसेत् ॥ ८ ॥**

अथ ग्रामाद्बहिररण्ये गृहान् कृत्वा सकुटुम्बः सहैवाग्निभिः ग्रामाद्बहिर्वसेत्। अस्मिन् पक्षे प्रागुक्तं 'एकाग्निः'[1]इत्येतन्नास्ति॥

**एको वा ॥ ९ ॥**

अथवा पुत्रेषु भार्यां निक्षिप्य स्वयमेक एव वसेत् वने। अस्मिन्पक्षे 'प्राजापत्यां निरूप्येष्टिम्'[2] इति परिव्राज उक्तेन न्यायेन श्रौताग्नीनात्मनि समारोप्य श्रामणकेनाग्निमाधायैकाग्निर्भवेत् ॥

**शिलोञ्छेन वर्तयेत् ॥ १० ॥**

व्याख्यातश्शिलोञ्छः,[3] तेन वर्तयेत् प्राणयात्रां कुर्यात्। इदं सकुटुम्बस्यैकाकिनश्च साधारणम्। एकाकिन एवेत्यन्ये ॥

**न चात ऊर्ध्वं प्रतिगृह्णीयात् ॥ ११ ॥**

यदा शिलोञ्छवृत्तिर्जाता अत ऊर्ध्वं न कुतश्चिदपि प्रतिगृह्णीयात् ॥

**अभिषिक्तश्च जुहुयात् ॥ १२ ॥**

यदा जुहुयात् तदा अभिषिक्तः स्नातो जुहुयात्। अनुवादोयं स्नानविशेषं विधातुम् ॥

---

[1]आप. ध. २-२१-२१ [2]मनुस्मृ. ६-३८. [3]आप. ध. २-१०-४

शनैरपोऽभ्यवेयादभिघ्नन्नभिमुखमादित्यमुदकमुपस्पृशेत् ॥ १३ ॥

शनैरवेगेन जलाशयं प्रविशेत् । प्रविश्य चाभिघ्नन् हस्तेन उदकं ताडयन् उदकमुपस्पृशेत् स्नायात् ॥

इति सर्वत्रोदकोपस्पर्शनविधिः ॥ १४ ॥

सर्ववर्णाश्रमसाधारणमेतत् । तथाचोत्तरत्र तस्य ग्रहणम् ॥

तस्य द्वन्द्वं द्रव्याणामेक उपदिशन्ति पाकार्थभोजनार्थवासीपरशुदात्रकाजानाम् ॥१५॥

यानि पाकार्थानि ताम्रभाण्डादीनि यानि च भोजनार्थानि कांस्यादीनि तेषां सर्वेषां वास्यादीनां चतुर्णां एकैकस्यां विधायां द्वेद्वे द्रव्ये उत्पाद्ये इत्येके उपदिशन्ति । काजमपि वास्यादिवदुपकरणविशेषो दारुमयः ॥

द्वन्द्वानामेकैकमादायेतराणि दत्वाऽरण्यमवतिष्ठेत ॥ १६ ॥

तेषां पाकादिसाधनानां द्रव्याणामेकैकं द्रव्यं स्वयमादाय इतराणि भार्यायै दत्वा अरण्यमवतिष्ठेत उपतिष्ठेत् समाश्रयेदिति ॥

तस्यारण्येनैवात ऊर्ध्वꣳ होमो वृत्तिः प्रतीक्षाऽऽच्छादनं च ॥ १७ ॥

तस्य वानप्रस्थस्यातोऽरण्यप्रवेशादूर्ध्वं आरण्येनैव नीवारादिना होमः। वृत्तिः प्राणयात्रा। प्रतीक्षा अतिथिपूजा। आच्छादनं वल्कलादिना॥

येषु कर्मसु पुरोडाशाश्चरवस्तेषु कार्याः॥१८॥

येषु दर्शपूर्णमासादिषु पुरोडाशा विहिता गृहस्थस्य, तेषु अस्य तत्स्थाने चरवः कार्याः॥

सर्वं चोपांशु सह स्वाध्यायेन॥ १९॥

सर्वं च कर्मकाण्डं साङ्गं प्रधानमुपांशु भवति। पारायणब्रह्मयज्ञाध्ययनेन सह, तदप्युपांशु कर्तव्यमिति॥

नारण्यमभ्याश्रावयेत्॥ २०॥

उपांशुवचनादेव सिद्धे वचनमाभिमुख्यप्रतिषेधार्थम्। तेनारण्यस्थाः यथा नाभिमुख्येन शृणुयुः तावदुपांश्विति॥

अग्न्यर्थं शरणम्॥ २१॥

शरणं गृहं तदग्न्यर्थमेव कर्तव्यम्॥

आकाशे स्वयम्॥ २२॥

स्वयं चाकाश एव वसेत्॥

अनुपस्तीर्णे शय्यासने॥ २३॥

शयनं चासनं च अनुपस्तीर्णे देशे कुर्यात्, न नु किञ्चिदुपस्तीर्य॥

नवे सस्ये प्राप्ते पुराणमनुजानीयात्॥ २४॥

नवे धान्ये श्यामाकनीवारादौ प्राप्ते जाते पुराणं पूर्वसञ्चितं सस्यमनुजानीयात् परित्यजेत् । अत्र मनुः–

त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्वसञ्चितम् ।
जीर्णानि चैव वासांसि पुष्पमूलफलानि च[1] ॥ इति ॥

इति द्वाविंशः खण्डः.

---

**भूयाꣳसं वा नियममिच्छन्नन्वहमेव पात्रेण सायं प्रातरर्थमाहरेत् ॥ १ ॥**

इदमेकाकिनो वानप्रस्थस्य । भूयांसं वा नियममिच्छन् न सस्यं संचिनुयात् । किं तर्हि ? अन्वहमेव प्रत्यहमेव पात्रेण येन केन चित् सायं प्रातश्चार्थमशनीयमाहरेत् वनस्थेभ्यः ॥

एवं कियन्तं कालं वर्तयित्वा–

**ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयꣳश्चरेदन्ततः प्रवृत्तानि ततोपो वायुमाकाशमित्यभिनिश्रयेत् । तेषामुत्तर उत्तरस्संयोगः फलतो विशिष्टः ॥ २ ॥**

सर्वं गतम्[2] ॥

निरूपिता आश्रमाः । अथेदानीं पक्षप्रतिपक्षरूपेण तेषामेव प्राधान्यमप्राधान्यं च निरूप्यते–

---

[1]मनुस्मृ. ६-१५.

[2]आप. ध. २–२२–२...५.

अथ पुराणे श्लोकावुदाहरन्ति ॥ ३ ॥

अष्टाशीतिसहस्राणि ये प्रजामीषिर ऋषयः ।
दक्षिणेनार्यम्णः पन्थानं ते श्मशानानि भेजिरे॥४॥

अष्टाशीतिसहस्राणि गृहस्थाः ऋषयः प्रजामीषिरे प्रजामभ्यनन्दन् । ते अर्यम्णो यो दक्षिणेन पन्था दक्षिणायनमार्गः तं प्राप्य छान्दोग्योक्तेन धूमादिमार्गेण गत्वा पुनरपि सम्भूय श्मशानानि भेजिरे मरणं प्रतिपेदिरे 'जायस्व म्रियस्व'[1] इत्याजीवं जीवभावं आपेदिरे इति गृहस्थनिन्दा ॥

अष्टाशीतिसहस्राणि ये प्रजां नेषिर ऋषयः ।
उत्तरेणार्यम्णः पन्थानं तेऽमृतत्वꣳ हि कल्पते॥५॥

ये नु प्रजां नाभ्यनन्दन् ते उत्तरायणमार्गं प्राप्य अर्चिरादिमार्गेण गत्वा अमृतत्वं, विभक्तिव्यत्ययः, अमृतत्वाय कल्पते, वचनव्यत्ययः, कल्पन्ते समर्थास्सम्पद्यन्ते ॥

इत्यूर्ध्वरेतसां प्रशꣳसा ॥ ६ ॥

गृहस्थादन्ये त्रयोप्यूर्ध्वरेतसः, तेषामेव प्रशंसेति ॥

पुनरपि तेषामेव प्रकारान्तरेण प्रशंसा–

अथापि सङ्कल्पसिद्धयो भवन्ति ॥ ७ ॥

अथापि अपि च संकल्पादेव सिद्धयो भवन्ति तेषामूर्ध्वरेतसाम् ॥

---

[1] छान्दो. ५-१०-८.

तत्रोदाहरणम्—

**यथा वर्षं प्रजादानं दूरे दर्शनं मनोजवतां यच्चान्यदेवं युक्तम् ॥ ८ ॥**

यदि महत्यामनावृष्टौ वर्षतु देव इति ते कामयेरन् कामवर्षी पर्जन्यो भवति । यदि वा किञ्चिदपुत्रमनुगृह्णीयुः पुत्रोस्य जायतामिति पुत्रवानेव भवति । तथा चोळेष्वेव स्थिताः हिमवन्तं दिदृक्षेरन् तथैव तद्भवति । मनस इव जवो येषां ते मनोजवाः, तद्भावो मनोजवता । यदि कामयेरन् अमुं देशं इयत्यामेव कालकलायां प्राप्नुयामेति ततो यावता कालेन मनस्तं देशं प्राप्नोति तावता तं देशं प्राप्नुयुः । यच्चान्यदेवं युक्तं, रोगिणामारोग्यादि, तदपि संकल्पाद्भवति ॥

यस्मादेवम्—

**तस्माच्छ्रुतितः प्रत्यक्षफलत्वाच्च विशिष्टानाश्रमानेतानेके ब्रुवते ॥ ९ ॥**

श्रुतितः 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्'[1] इत्यादिश्रुत्यनुगतत्वात्, उक्तेन प्रकारेण प्रत्यक्षफलत्वाच्च एतानूर्ध्वरेतसामाश्रमान् विशिष्टान् गार्हस्थ्यादुत्कृष्टान् एके ब्रुवते इति ॥

तदिदं गार्हस्थ्योत्कृष्टत्वप्रतिपादनेन निराकरोति—

**त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा । तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयः-**

---

[1]जाबा. ४.

**कपालपत्नीसम्बन्धान्युच्चैर्नीचैः कार्यमिति तैर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते॥१०**

त्र्यवयवा विद्या त्रयो वेदाः, तां ये पाठतश्च अर्थतश्च विदन्ति ते त्रैविद्याः, तेषु पक्वज्ञानाः त्रैविद्यवृद्धाः, तेषां वेदाः प्रमाणमतीन्द्रियार्थे इति निष्ठा निर्णयः। यथाह भगवान् जैमिनिः– 'चोदनालक्षणोऽर्थो धर्मः' 'प्रत्यक्षमनिमित्तम्'[1] इति च। ततश्च तत्र वेदे यानि कर्माणि श्रूयन्ते–किंलक्षणानि?–व्रीह्यादिभिस्संबद्धानि, 'उच्चैर् ऋचा क्रियते, उपांशु यजुषा'[2] इत्येवंप्रकाराणि, तैः विरुद्ध आचारः प्रमाणं न भवतीति मन्यन्ते तज्ज्ञाः। एतदुक्तं भवति–सर्वेषु वेदेषु सर्वासु च शाखासु अग्निहोत्रादीनि विश्वसृजामयनपर्यन्तानि कर्माण्येव तात्पर्यतो विधीयन्ते। अतो गार्हस्थ्यमेव श्रेष्ठम्। ऊर्ध्वरेतसां चाश्रमाः तद्विरुद्धा नैव समाश्रयणीयाः यदि वेदाः प्रमाणमिति। तथाच गौतमः–'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य'[3] इति॥

गार्हस्थ्यं प्रशंस्य 'ते श्मशानानि भेजिरे'[4] इति निन्दां परिहरति–

**यत्तु श्मशानमुच्यते नानाकर्मणामेषोन्ते पुरुषसꣳस्कारो विधीयते ॥ ११ ॥**

यत्तु गृहस्थानां श्मशानं श्रूयते स एष नानाकर्मणामग्निहोत्रादीनां अन्ते पितृमेधाख्यः पुरुषसंस्कारो विधीयते, न तु पिशाचा भूत्वा श्मशानमेव सेवन्त इति॥

---

[1] जै. १-१-१,४.
[2] शतपथब्राह्मणे.
[3] गौ.ध. ३-३६.
[4] आप. ध. २-२३-४.

कुत इति? आह—

**ततः परमनन्त्यं फलꣳ स्वर्ग्यशब्दꣳ श्रूयते॥१२**

ततः परं श्मशानकर्मणोनन्तरमनन्त्यमपरिमितं स्वर्गशब्द-वाच्यं फलं श्रूयते, 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेति' इति विज्ञायते। अनन्त्यं स्वर्ग्यमिति यकारश्छान्दस उपजनः, अपपाठो वा॥

इति त्रयोविंशः खण्डः.

---

पुनरपि गार्हस्थ्यमेव प्रकारान्तरेण स्तौति—

**अथाप्यस्य प्रजातिममृतमाम्नाय आह। प्रजा-मनुप्रजायसे तदु ते मर्त्यामृतमिति॥१॥**

अथापि अपिच अस्य गृहस्थस्य प्रजातिं प्रजासन्तानं अमृ-तममरणं आम्नायो वेद आह। हे मर्त्य मरणधर्मन् प्रजां जाय-मानामनु त्वं प्रजायसे त्वमेव प्रजारूपेण जायसे। तदेव ते मरणधर्मिणोऽमृतममरणमिति। न त्वं म्रियसे यतस्त्वं प्रजारूपेण तिष्ठसीति॥

उपपन्नं चैतदित्याह—

**अथापि स एवायं विरूढः पृथक्प्रत्यक्षेणोपल-भ्यते दृश्यते चापि सारूप्यम्। देहत्वमे-वान्यत्॥ २॥**

अपिच स एवायं पृथग्विरूढः प्रत्यक्षेणोपलभ्यते, स एव

द्विधाभूत इव लक्ष्यते । दृश्यते हि सारूप्यं द्वयोः । देहमात्रं तु भिन्नम् । देहत्वमिति स्वार्थिकस्त्वः ॥

यदि पुत्ररूपेणावस्थानं, किमेतावना इति ? अत्राह—

**ते शिष्टेषु कर्मसु वर्तमानाः पूर्वेषाꣳ साम्परायेण कीर्तिꣳ स्वर्गं च वर्धयन्ति ॥ ३ ॥**

ते पुत्राः शिष्टेषु चोदितेषु कर्मसु वर्तमानाः अवस्थिताः पूर्वेषां पितृपितामहादीनां साम्परायेण परलोकेन संबद्धानां कीर्तिं वर्धयन्ति "अस्यायं पुत्र एवंकर्मा अस्यायं पौत्रः" इति । स्वर्गं च वर्धयन्ति । कीर्तिमतां हि स्वर्गवास एव श्रूयते ॥

**एवमवरोवरः परेषाम् ॥ ४ ॥**

एवमनेन प्रकारेणावरोवरः परेषां कीर्तिं स्वर्गं च वर्धयति ॥

**आ भूतसंप्लवात्ते स्वर्गजितः* ॥ ५ ॥**

भूतसंप्लवो महाभूतप्रळयः, आ तस्मात् ते पुत्रिणः स्वर्गजीविनो हि भवन्ति ॥

**पुनस्सर्गे बीजार्था भवन्तीति भविष्यत्पुराणे ॥**

प्रळयानन्तरं सर्गः पुनस्सर्गः, तत्र संसारस्य बीजार्थाः प्रजार्थाः प्रजापतयो भवन्तीति भविष्यत्पुराणे श्रूयते ॥

**अथापि प्रजापतेर्वचनम् ॥ ७ ॥**

अपिच प्रजापतेरपि वाक्यमस्मिन्नर्थे भवति गार्हस्थ्यमेव वरिष्ठमिति ॥

---

*क—जीविनः.

त्रयीं विद्यां ब्रह्मचर्यं प्रजातिꣳ श्रद्धां तपो-यज्ञमनुप्रदानम् । य एतानि कुर्वते तैरित्सह स्मो रजो भूत्वा ध्वꣳसतेऽन्यत्प्रशꣳसन्निति ॥ ८ ॥

त्रयीं विद्यां त्रयाणां वेदानां अध्ययनं, ब्रह्मचर्यं अष्टाचत्वारिंशदादिकं, प्रजातिं प्रजोत्पादनं, श्रद्धामास्तिक्यं, तप उपवासादि, यज्ञमग्निहोत्रादि सोमयागान्तं, अनुप्रदानमन्तर्वेदि बहिर्वेदि च दानं, य एतानि कुर्वते तैरेव सह वयं स्मः, त एवास्माकं सहायाः । अन्यत्तूर्ध्वरेतसां आश्रमादिकं प्रशंसन् पुरुषो रजः पांसुर्भूत्वा ध्वंसते नश्यति । इतिशब्दो वचनसमाप्त्यर्थः ॥

यथैव तर्हि शिष्टेषु वर्तमानाः पुत्राः[1] पूर्वेषां कीर्तिं च स्वर्गं च वर्धयन्ति, तथैव प्रतिषिद्धेषु वर्तमानाः अकीर्तिं नरकं च वर्धयेयुः । तत्राह–

तत्र ये पापकृतस्त एव ध्वꣳसन्ति यथा पर्णं वनस्पतेः । न परान्हिꣳसन्ति ॥ ९ ॥

तत्र प्रजासन्ताने ये पापस्य कर्तारः त एव ध्वंसन्ति ध्वंसन्ते, न परान् पित्रादीन् हिंसन्ति ; यथा यदेव पर्णं वनस्पतेः कीटादिभिः दूषितं तदेव पतति, न वनस्पतिं शाखां वा पातयति, तद्वत् ॥

एतदेवोपपादयति–

---

[1]क. घ—पुरुषाः

**नास्यास्मिन्लोके कर्मभिस्सम्बन्धो विद्यते तथा परस्मिन्कर्मफलैः ॥ १० ॥**

अस्येति सामान्यापेक्षमेकवचनम् । अस्य पित्रादेः पूर्वपुरुषस्य अस्मिन्लोके पुत्रकृत्यैः कर्मभिः सम्बन्धो न विद्यते । दृष्टान्तोऽयम्—यथा पुत्रकृत्येषु कर्मसु पित्रादेः कर्तृत्वं नास्ति, तथा परस्मिन्नपि लोके कर्मफलैरपि सम्बन्धो नास्तीत्यर्थः ॥

**तदेतेन वेदितव्यम् ॥ ११ ॥**

यदुक्तं ये पापकृतस्त एव ध्वंसन्ते न परान् हिंसन्तीति, तदर्थरूपं एतेन वक्ष्यमाणेन हेतुना वेदितव्यं निश्चेतव्यम् ॥

**प्रजापतेरृषीणामिति सर्गोऽयम् ॥ १२ ॥**

प्रजापतेः हिरण्यगर्भस्य ऋषीणां च मरीच्यादीनां अयं सर्गो देवादिस्तिर्यगन्तः । ते चाध्वस्ता एव स्वेस्वे पदे वर्तन्ते । यदि च पुत्राः पापकृतः स्वयं ध्वंसमानाः परानपि ध्वंसयेयुः, तदैतन्नोपपद्यते पुण्यकृतः सुखेनाद्यापि वर्तन्ते इति ॥

अत्रोदाहरणमाह—

**तत्र ये पुण्यकृतस्तेषां प्रकृतयः परा ज्वलन्त्य*उपलभ्यन्ते ॥ १३ ॥**

तत्र सर्गे ये पुण्यकृतः वसिष्ठादयः तेषां प्रकृतयः शरीराणि पराः उत्कृष्टाः ज्वलन्त्यः दीप्यमानाः उपलभ्यन्ते दिवि, यथा सप्तर्षिमण्डलम् । श्रूयते च ‘ सुकृतां वा एतानि ज्योतींषि

*क. घ—ज्वलत्यः

यन्नक्षत्राणि '[1] इति । इदमपि प्रमाणं न पुत्राणां ध्वंसे पूर्वेषां ध्वंस इति ॥

**स्यात्तु कर्मावयवेन तपसा वा कश्चित्सशरीरोऽन्तवन्तं लोकं जयति सङ्कल्पसिद्धिश्च स्यान्न तु तज्ज्यैष्ठ्यमाश्रमाणाम् ॥ १४ ॥**

कर्मावयवेन पूर्वार्जितानां कर्मणामेकदेशेन भुक्तशेषेण तपसा वा तीव्रेण कश्चिदूर्ध्वरेताः सह शरीरेणान्तवन्तं लोकं जयतीति यत्तत्स्यात् संभवेदपि, यच्च संकल्पादेव सिद्धिस्स्यादिति तदपि स्यात् ; न तु तत् आश्रमाणां ज्यैष्ठ्यकारणमिति । तदेवं 'ऐकाश्रम्यन्त्वाचार्याः'[2] इति अयमेव पक्षः स्थापितः । अन्ये मन्यन्ते—सर्वे आश्रमाः दूषिता भूषिताश्च । ततः 'तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति '[3] इत्येतदेव स्थितमिति ॥

इति चतुर्विंशः खण्डः.

इत्यापस्तम्बधर्मसूत्रवृत्तौ उज्ज्वलायां द्वितीये प्रश्ने नवमः पटलः.

---

**व्याख्यातास्सर्ववर्णानाꣳ साधारणवैशेषिका धर्माः । राज्ञस्तु विशेषाद्वक्ष्यामः ॥ १ ॥**

उक्तवक्ष्यमाणसंकीर्तनं श्रोतृबुद्धिसमाधानार्थम् । अहिंसासत्यास्तेयादयः सर्ववर्णानां साधारणधर्माः । अध्ययनादयः त्रया-

[1] तै. सं. ५-४-१. [2] गौ. ध. ३-३६. [3] आप. ध. २-२१-२.

र्णां, अध्यापनादयो ब्राह्मणस्य, युद्धादयः क्षत्रियस्य, कृष्यादयो वैश्यस्य, शुश्रूषा शूद्रस्य। राजाऽत्राभिषिक्तो विवक्षितः; तस्यैव हि वक्ष्यमाणं धर्मजातं संभवति। तस्य विशेषान् विशेषतो यद्वक्तव्यं तद्वक्ष्यामः। 'विशेषान्' इति द्वितीयान्तपाठस्तु युक्तः॥

दक्षिणाद्वारं वेश्म पुरं च मापयेत्॥ २॥

वेश्म गृहं, पुरं नगरम्। तदुभयमपि दक्षिणाद्वारं मापयेत् स्थपत्यादिभिः कारयेत्। दक्षिणपार्श्वे द्वारं यस्य तत्तथोक्तम्॥

अन्तरस्यां पुरि वेश्म॥ ३॥

सर्वेषामेव प्राकाराणां मध्ये या पूः तस्यामन्तरस्यां पुरि वेश्म मापयेदात्मनः॥

तस्य पुरस्तादावसथस्तदामन्त्रणमित्याचक्षते॥

तस्य वेश्मनः पुरस्तादावसथः कारयितव्यः। एत्य वसन्त्यस्मिन्नित्यावसथः आस्थानमण्टपं, तस्यामन्त्रणमिति संज्ञा; तत्र ह्यतिथय आमन्त्र्यन्ते॥

दक्षिणेन पुरः सभा दक्षिणेनोदग्द्वारा यथोभयः संदृश्येत बहिरन्तरं चेति॥ ५॥

दक्षिणेनेत्येनबन्तम्। पुरमिति 'एनपा द्वितीया' इति द्वितीयान्तः। पुरस्य दक्षिणतः अदूरे सभा कारयितव्या। दक्षिणोदग्द्वारा दक्षिणस्यामुत्तरस्यां च दिशि द्वारे यस्यास्सा तथोक्ता। किमर्थमुभयत्र द्वारमिति चेत्, यद्बहिर्वृत्तं यच्चा-

भ्यन्तरं तदुभयमपि यथा संदृश्येतेत्येवमर्थमिति । सैषा द्यूतसभा, तस्यां द्यूतार्थिनः प्रविशन्ति, तदायस्थानं राज्ञः ॥

सर्वेष्वेवाजस्रा अग्नयस्स्युः ॥ ६ ॥

वेश्मन्यावसथे सभायामित्येतेषु सर्वेष्वेव स्थानेषु लौकिकाग्नयः अजस्रास्स्युः अविच्छेदेन धार्याः ॥

अग्निपूजा च नित्या यथा गृहमेधे ॥ ७ ॥

तेषु चाग्निषु नित्यमग्निपूजा कार्या यथा गृहमेधे औपासने, सायंप्रातर्होम इत्यर्थः । मन्त्रावपि तावेव, द्रव्यमपि तदेव ॥

आवसथे श्रोत्रियावरार्ध्यानतिथीन्वासयेत् ॥

आवसथाख्यस्थाने अतिथीन् वासयेत् । ते विशेष्यन्ते—श्रोत्रियावरार्ध्यानिति । अवरपर्यायोऽवरार्ध्यशब्दः । यदि सर्वान्वासयितुं न शक्नोति श्रोत्रियानपि तावद्वासयेदिति ॥

तेषां यथागुणमावसथाऽऽशय्यान्नपानं च विदेयम् ॥ ९ ॥

तेषामतिथीनां यथागुणं विद्यावृत्ताद्यनुगुणं आवसथादि विदेयम् विशेषेण देयम् । आवसथाः अपवरकादयः । शय्याः खट्वादयः । अन्नमोदनादि । पानं तक्रसूपादि ॥

गुरूनमात्यांश्च नातिजीवेत् ॥ १० ॥

गुरवः पित्रादयः । अमात्याः मन्त्रिणः । तान्नातिजीवेत् भक्ष्यभोज्याच्छादनादिषु तान्नातिशयीत ॥

**न चास्य विषये क्षुधा रोगेण हिमातपाभ्यां वाऽवसीदेदभावाद्बुद्धिपूर्वं वा कश्चित् ॥ ११ ॥**

अस्य राज्ञो विषये राष्ट्रे क्षुधा आहाराभावेन बुभुक्षया, रोगेण व्याधिना, हिमेन नीहारेण, वर्षादीनामप्युपलक्षणमेतत्, आतपः आदित्यरश्मितापः, एतैः प्रकारैरभावात् बुद्धिपूर्वं वा न कश्चित् अब्राह्मणोप्यवसीदेत् अवसन्नस्स्यात् । राज्ञो ह्ययमपराधः यदाहाराद्यभावेन कश्चिदवसन्नस्स्यात् । बुद्धिपूर्वं वेत्यत्रोदाहरणम्—यदा कश्चित् करमृणं वा दाप्यो भवति तदा नासौ हिमातपयोः निवेशयितव्यः, भोजनाद्वा निरोद्धव्यः; तथा कुर्वाणं राजा दण्डयेदिति ॥

**सभाया मध्येऽधिदेवनमुद्धत्यावोक्ष्याक्षान्निवपेद्युग्मान्वैभीतकान्यथार्थान् ॥ १२ ॥**

पूर्वोक्तायाः सभाया मध्ये अधिदेवनम् । यस्योपरि कितवाः अक्षैः दीव्यन्ति तत्स्थानमधिदेवनम् । तत् पूर्वं काष्ठादिना उद्धन्ति । उद्धत्यावोक्षति । अवोक्ष्य तत्र अक्षान् युग्मसंख्यान् वैभीतकान् विभीतकवृक्षस्य विकारभूतान् यथार्थान् यावद्भिः द्यूतं निर्वर्तते तावतो निवपति । कः ? यस्तत्र राज्ञा नियुक्तः स सभिको नाम ॥

**आर्याश्शुचयस्सत्यशीला दीवितारस्स्युः॥१३॥**

आर्याः द्विजातयः । शुचयः धर्मशुद्धाः । सत्यशीलाः सत्यवादिनः । एवंभूता एव पुरुषाः तत्र दीवितारः देवितारस्स्युः, त एव तत्र देवितुं लभन्ते इत्यर्थः । ते च तत्र देवित्वा यथापरि-

भाषितं पणं सभिकाय दत्वा गच्छेयुः । स च राज्ञे तमायमहरहः प्रतिमासं प्रतिसंवत्सरं वा दद्यात् । स एव च स्थानान्तरे दीव्यतः दण्डयेत्, सभास्थाने च कलहकारान् । तत्र याज्ञवल्क्यः—

ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् ।
गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् ॥
स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम् ।
जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यं वचः क्षमी ॥[1] इति ॥

**आयुधग्रहणं नृत्तगीतवादित्राणीति राजाधीनेभ्योन्यत्र न विद्येरन् ॥ १४ ॥**

आयुधग्रहणादीनि राजाधीनेभ्यो राजाश्रया ये पुरुषाः तेभ्योऽन्यत्र न विद्येरन् न भवेयुः । उत्सवादिष्वन्यत्रापि भवत्याचारः* ॥

**क्षेमकृद्राजा यस्य विषये ग्रामेऽरण्ये वा तस्करभयं न विद्यते ॥ १५ ॥**

यस्य राज्ञो विषये ग्रामे अरण्ये च चोरभयं नास्ति स एव राजा क्षेमकृत् क्षेमकरः, न त्वन्यः शतं तुभ्यमिति ददानोपि ॥

इति पञ्चविंशः खण्डः.

---

[1] या. स्मृ. २-१९९-२००.    *ङ. अ. ट—त्रापि संभवतीत्याचार्यः.

**भृत्यानामनुपरोधेन क्षेत्रं वित्तं च ददद्ब्राह्मणेभ्यो यथार्हमनन्तान्लोकानभिजयति ॥ १ ॥**

भृत्यानामनुपरोधेन भृत्यवर्गस्य यथोपरोधो न भवति तथा ब्राह्मणेभ्यो यथार्हं विद्यावृत्तानुरूपं क्षेत्रं वित्तं च दद्यात् । एवं ददत् अनन्तान् लोकानभिजयति ॥

**ब्राह्मणस्वान्यपजिगीषमाणो राजा यो हन्यते तमाहुरात्मयूपो यज्ञोऽनन्तदक्षिण इति ॥ २**

ब्राह्मणस्वानि चोरादिभिरपहृतानि अपजिगीषमाणो ब्राह्मणेभ्यो दानाय तानपजित्य गृहीतुमिच्छन् यो राजा युद्धे चोरैः हन्यते तमात्मयूपोऽनन्तदक्षिणो यज्ञ इत्याहुः धर्मज्ञाः । संग्रामो यज्ञः, तस्यात्मा यूपस्थानीयः । आत्मेति शरीरमाह । अन्तरात्मा पशुस्थानीयः । प्रत्यानिनीषितं तु द्रव्यं दक्षिणा । सूत्रे तु तं यज्ञ इत्याहुः इति गौणो वादः ॥

**एतेनान्ये शूरा व्याख्याताः प्रयोजने युध्यमानास्तनुत्यजः ॥ ३ ॥**

प्रयोजनं चोरादिभिरपहृतानां द्रव्याणां ब्राह्मणस्वानां प्रत्यानयनादि, तदर्थं युध्यमाना ये शूराः तनुत्यजो भवन्ति शरीराणि त्यजन्ति तेऽप्येतेन राज्ञा व्याख्याता आत्मयूपो यज्ञोऽनन्तदक्षिण इति ॥

**ग्रामेषु नगरेषु चार्यांच्छुचीन्सत्यशीलान्प्रजागुप्तये निदध्यात् ॥ ४ ॥**

आर्यान् शुचीन् सत्यशीलान् इति व्याख्यातम्[1] । एवंभूतान् पुरुषान् ग्रामेषु नगरेषु च प्रजानां रक्षणार्थं निदध्यात् नियुञ्जीत ॥

**तेषां पुरुषास्तथागुणा एव स्युः ॥ ५ ॥**

तेषां नियुक्तानां ये पुरुषा नियोज्याः ते तथागुणा आर्यादिगुणा एव स्युः ॥

**सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम् ॥ ६ ॥**

सर्वतः सर्वासु दिक्षु योजनमात्रं नगरं तस्करेभ्यो रक्षणीयम् । ' रक्ष्यन् ' इत्यपपाठः ॥

**क्रोशो ग्रामेभ्यः ॥ ७ ॥**

ग्रामेभ्यस्तु सर्वासु दिक्षु क्रोशो रक्ष्यः । ग्रामेभ्य इति ' यतश्चाध्वपरिमाणं तत्र पञ्चमी वक्तव्या ' इति पञ्चमी ॥

**तत्र यन्मुष्यते तैस्तत्प्रतिदाप्यम् ॥ ८ ॥**

तत्र योजनमात्रे क्रोशमात्रे वा यन्मुष्यते चोर्यते ते नियुक्ताः स्वामिभ्यः तत्प्रतिदद्युः, राज्ञा तैः तत्प्रतिदाप्यम्, राजा तैः प्रतिदापयेदिति । प्रायेण दन्त्योष्ठ्यं वकारं पठन्ति ॥

**धार्म्यꣳ शुल्कमवहारयेत् ॥ ९ ॥**

तत्र गौतमः—' विंशतिभागश्शुल्कः पण्ये '[2] यद्वणिग्भिर्विक्रीयते हिङ्ग्वादि तस्य विंशतितमं भागं राजा गृह्णीयात् । तस्य शुल्क इति संज्ञा । एष धार्म्यः धर्म्यश्शुल्कः, तमधिकृतैरेवावहा-

---

[1] आप. ध, २-२५-१३. [2] गौ. ध. १०-२६

ग्येन् ग्राहयेदिति। मूलादिषु नु विशेषस्तेनैवोक्तः 'मूलफलपुष्पौ-षधमधुमांसतृणेन्धनानां षाड्यम'[1] इति ॥

**अकरश्श्रोत्रियः ॥ १० ॥**

श्रोत्रियः करं न दाप्यः, अन्ये दाप्याः ॥

**सर्ववर्णानां च स्त्रियः ॥ ११ ॥**

अकराः। वर्णग्रहणात् प्रतिलोमादिस्त्रियो दाप्याः ॥

**कुमाराश्च प्राग्व्यञ्जनेभ्यः ॥ १२ ॥**

व्यञ्जनानि श्मश्र्वादीनि। यावत्तानि नोत्पद्यन्ते तावदकराः कुमाराः ॥

**ये च विद्यार्थां वसन्ति ॥ १३ ॥**

विद्यामुद्दिश्य ये गुरुषु वसन्ति ते जातव्यञ्जना अपि असमाप्तवेदा अकराः ॥

**तपस्विनश्च ये धर्मपराः ॥ १४ ॥**

तपस्विनः कृच्छ्रचान्द्रायणादिप्रवृत्ताः धर्मपराः अफलाकाङ्क्षिणो नित्यनैमित्तिकधर्मनिरताः। धर्मपरा इति किं? ये अभिचारकामाः मन्त्रसिद्ध्ये तपस्तप्यन्ते ते अकराः मा भूवन्निति ॥

**शूद्रश्च पादावनेक्ता ॥ १५ ॥**

त्रैवर्णिकानां पादावनेक्ता यः पादावनेजनवृत्तिः स शूद्रोप्यकरः ॥

**अन्धमूकबधिररोगाविष्टाश्च ॥ १६ ॥**

---

[1] गौ. ध. १०–२७.

अन्धादयश्चाकराः यावदान्ध्यादि ॥

**ये व्यर्था द्रव्यपरिग्रहैः ॥ १७ ॥**

ये च परिव्राजकादयो द्रव्यपरिग्रहैः व्यर्थाः निष्प्रयोजनाः, शास्त्रतो येषां द्रव्यपरिग्रहः प्रतिषिद्धः, तेऽप्यकराः* । तथाच वसिष्ठः 'अकरश्श्रोत्रियो राजपुमाननाथः प्रव्रजितो बालवृद्धतरुणप्रशान्ताः'[1] इति ॥

**अबुद्धिपूर्वमलङ्कृतो युवा परदारमनुप्रविशन्कुमारीं वा वाचा बाध्यः ॥ १८ ॥**

यत्र परदारा आसते कुमारी वा पतिंवरा, तत्र युवा अलङ्कृतो अबुद्धिपूर्वमज्ञानादनुप्रविशन् वाचा बाध्यः अत्रेयमास्ते माऽत्र प्रविश इति ॥

**बुद्धिपूर्वं तु दुष्टभावो दण्ड्यः ॥ १९ ॥**

यस्तु विजानन्नेव दुष्टभावः प्रतिलोभनार्थी प्रविशति स दण्ड्यो द्रव्यानुरूपं अपराधानुरूपं च । दुष्टग्रहणात् आचार्यादिप्रेषितस्य प्रवेशे दण्डो मा भूदिति ॥

**सन्निपाते वृत्ते शिश्नच्छेदनꣳ सवृषणस्य ॥ २० ॥**

सन्निपातो मैथुनम् । तस्मिन् वृत्ते शिश्नच्छेदनं दण्डः । सवृषणस्य इति उपसर्जनस्यापि शिश्नस्य विशेषणं, सवृषणस्य शिश्नस्य छेदनमिति ॥

---

*क. ञ. ङ्ग—'तेषामुपयोगार्थं ये मठादयः पुरुषैः निसृष्टाः तत्र करो न ग्राह्यः.' इत्यधिकम्.

[1] वा. ध–१९–२३.

**कुमार्यां तु स्वान्यादाय नाश्यः ॥ २१ ॥**

कुमार्यां तु सन्निपाते वृत्ते सर्वस्वहरणं कृत्वा देशान्निर्वास्यः, न शिश्नच्छेदनम् ॥

**अथ भृत्ये राज्ञा* ॥ २२ ॥**

सन्निपातप्रभृति परदारकुमार्यौ राज्ञा भृत्ये ग्रासाच्छादनप्रदानेन भर्तव्ये ॥

**रक्ष्ये चात ऊर्ध्वं मैथुनात् ॥ २३ ॥**

अतः प्रथमात् सन्निपातादूर्ध्वं मैथुनाच्च रक्ष्ये, यथा पुनः मैथुनं न चरतः तथा कार्यं ॥

**निर्वेषाभ्युपाये तु स्वामिभ्योऽवसृजेत् ॥ २४ ॥**

यदि ते एवं निरुद्धे निर्वेषमभ्युपेतः अभ्युपगच्छतः तदा निर्वेषाभ्युपाये तु स्वामिभ्यः ते अवसृजेत् दद्यात्, परदारं भर्त्रे श्वशुराय वा, कुमारीं पित्रे भ्रात्रे वा । अनभ्युपगमे तु प्रायश्चित्तस्य यावज्जीवं निरोधः ॥

इति षड्विंशः खण्डः.

---

**चरिते यथापुरं धर्माद्धि सम्बन्धः ॥ १ ॥**

चरिते तु निर्वेषे यथापुरं यथापूर्वं धर्मात्, तृतीयार्थे पञ्चमी, धर्मेण सम्बन्धो भवतीति । हि शब्दो हेतौ । यस्मादेवं तस्मादवश्यं प्रायश्चित्तं कारयितव्ये, ततो यज्ञविवाहादौ न कश्चिद्दोष इति ॥

---

*'राज्ञां' इत्यपि पाठान्तरम्.

परदारप्रसङ्गादुच्यते—

**सगोत्रस्थानीयां न परेभ्यः समाचक्षीत ॥ २ ॥**

य अनपत्यः आत्मनः शक्त्यभावं निश्चित्य क्षेत्रजं पुत्रमिच्छन् भार्यां परत्र नियुङ्क्ते, मृते वा तस्मिन् तत्पित्रादयः सन्तानकाङ्क्षिणः, तद्विषयमेतत् । कुलान्तरात् प्रविष्टा स्त्री सगोत्रस्थानीया । सा हि पूर्वं पितृगोत्रा सती भर्तृगोत्रधर्मैः अधिक्रियते। ततः सा भर्तृपक्ष्याणां सगोत्रस्थानीया भवति । भर्ता तु साक्षात्सगोत्रः । तां सगोत्रस्थानीयां न परेभ्योऽसगोत्रेभ्यः समाचक्षीत, 'इयमनपत्या, अस्यामपत्यमुत्पाद्यम्' इति । सगोत्रायैव तु समाचक्षीत, तत्रापि देवराय, तदभावे सपिण्डाय ॥

कः पुनः सगोत्रस्य विशेषः? तमाह—

**कुलाय हि स्त्री प्रदीयत इत्युपदिशन्ति ॥ ३ ॥**

हि यस्मात् स्त्री कन्या प्रदीयमाना कुलायैव प्रदीयत इति उपदिशन्ति धर्मज्ञाः । तस्मात्सगोत्रायैव समाचक्षीतेति ॥

तमिमं नियोगं दूषयति—

**तदिन्द्रियदौर्बल्याद्विप्रतिपन्नम् ॥ ४ ॥**

यद्यप्येवं पूर्वे कृतवन्तः, तथापि तदद्यत्वे विप्रतिपन्नं विप्रतिषिद्धम् । कुतः? इन्द्रियदौर्बल्यात् । दुर्बलेन्द्रिया ह्यद्यत्वे मनुष्याः । ततश्च शास्त्रव्याजेनापि भर्तृव्यतिक्रमे अतिप्रसङ्गस्स्यात् इति ॥

सगोत्रविषये च यो विशेषस्सोपि नास्तीत्याह—

**अविशिष्टꣳ हि परत्वं पाणेः ॥ ५ ॥**

येन पाणिना पूर्वमग्निसाक्षिकं पाणिर्गृहीतः कन्यायाः तस्मात्पाणेरन्यो भवति सगोत्रस्यापि पाणिः, यस्मादेव पाणेः परत्वमविशिष्टं समानं तस्मादविशेष इति । अवशिष्टमित्यपपाठः ॥

पाणिरन्यो भवतु; को दोषः?—

**तद्व्यतिक्रमे खलु पुनरुभयोर्नरकः ॥ ६ ॥**

तस्य पाणेः व्यतिक्रमे उभयोर्दम्पत्योः नरको भवति । खलु पुनरिति प्रसिद्धिद्योतकौ निपातौ । अतः पत्या न स पाणिः त्याज्यः यः पूर्वं गृहीतः । भार्ययापि न स पाणिः त्याज्यः येन पूर्वं आत्मनः पाणिः गृहीतः ॥

**नियमारम्भणो हि वर्षीयानभ्युदय एवमारम्भणादपत्यात् ॥ ७ ॥**

आरभ्यतेऽनेनेत्यारम्भणः । योयं दम्पत्योः परस्परं नियमः स आरम्भणो यस्य स नियमारम्भणः । एवंभूतो योभ्युदयः स एव वर्षीयान् प्रवृद्धतरः । एवमुक्तेन प्रकारेण नियोगलक्षणेन यदपत्यमारभ्यते तस्मादेवमारम्भणादपत्याद्वर्षीयानिति । आपत्यादिति प्रायेण पठन्ति ॥

**नाश्य आर्यश्शूद्रायाम् ॥ ८ ॥**

आर्यः त्रैवर्णिकः शूद्रायां परभार्यायां प्रसक्तः राज्ञा राष्ट्रान्नाश्यः निर्वास्यः ॥

**वध्यश्शूद्र आर्यायाम् ॥ ९ ॥**

शूद्रस्त्वार्यायां त्रैवर्णिकायां प्रसक्तो वध्यः । एतच्च योन्तःपु-

रादिषु अधिकृतो रक्षकस्सन् स्वयं गच्छति तस्य भवति। अन्यस्य पूर्वोक्तं शिश्नच्छेदनमेव। तथाच शूद्राधिकारे गौतमः— 'आर्यस्त्र्यभिगमने लिङ्गोद्धारः सर्वस्वहरणं च गोप्ता चेद्वधोऽधिकः'[1] इति। याज्ञवल्क्येन तु प्रातिलोम्येन गमनमात्रे वध उक्तः। यथा वा—

सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः।
प्रातिलोम्ये वधः पुंसां स्त्रीणां नासादिकृन्तनम्[2] ॥ इति।

सोनुबन्धाभ्यासाद्यपेक्षो द्रष्टव्यः। तथा 'नाश्य आर्यश्शूद्रायाम्'[3] इत्याचार्यवचनमपि अनुबन्धाभ्यासापेक्षं, ब्राह्मणादेः क्रमविवाहे या शूद्रा तद्विषयं वा द्रष्टव्यम् ॥

## दारं चास्य कर्शयेत् ॥ १० ॥

अस्य शूद्रस्य या दारभूता तेन भुक्ता त्रैवर्णिकस्त्री तां च कर्शयेत् व्रतनियमोपवासैः। या प्रजाता न भवति, तद्विषयमेतत्।

ब्राह्मणक्षत्रियविशां स्त्रियश्शूद्रेण सङ्गताः।
अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः ॥

इति स्मरणात् ॥

## सवर्णायामन्यपूर्वायाꣳ सकृत्सन्निपाते पादः पततीत्युपदिशन्ति ॥ ११ ॥

अन्यः पूर्वः पतिर्यस्यास्सा अन्यपूर्वा परभार्या, तस्यां सवर्णायां सकृद्गमने पादः पतति। पतितस्य द्वादशवार्षिकं प्रायश्चित्तं, तस्य तुरीयांशः त्रीणि वर्षाणि प्राकृतं ब्रह्मचर्यं अस्य

[1] गौ. ध. १२-२, ३. [2] या. स्मृ. २-२८९. [3] आप. ध. २-२७-८.

प्रायश्चित्तम् । एतच्च श्रोत्रियभार्यायां ऋतुकाले कामतः प्रथमदूषकस्य ब्राह्मणस्य । तत्र गौतमः—'द्वे परदारे । त्रीणि श्रोत्रियस्य'[1] इति ॥

**एवमभ्यासे पादः पादः ॥ १२ ॥**

एवमभ्यासे प्रत्यभ्यासं पादः पादः पतति ॥

अतः—

**चतुर्थे सर्वम् ॥ १३ ॥**

चतुर्थे सन्निपाते सर्वमेव पतति । ततश्च पूर्णं द्वादशवार्षिकं कर्तव्यं, तृतीये नववर्षाणि, द्वितीये षडिति । एतच्च प्रतियोगं स्त्रीभेदेन प्रथमदूषकस्य । एकस्यामेव त्वभ्यासे कल्प्यम् । तत्र 'यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम्'[2] इति स्मरणात् स्त्रिया अपि प्रतियोगं पादः पादः पतति । तदनुरोधेन कल्प्यम् ॥

**जिह्वाच्छेदः शूद्रस्यार्यं धार्मिकमाक्रोशतः॥१४**

शूद्रो द्विजातीनामन्यतमं धार्मिकं स्वधर्मस्थं यद्याक्रोशति निन्दति गर्हते तदा तस्य जिह्वा छेत्तव्येति । मनुस्तु सामान्येनाह—

येनाङ्गेनावरो वर्णो ब्राह्मणस्यापराध्नुयात् ।
तदङ्गं तस्य छेत्तव्यं तन्मनोरनुशासनम्[3] ॥ इति ।

गौतमस्तु—'शूद्रो द्विजातीनभिसन्धायाभिहत्य च वाग्दण्डपारुष्याभ्यामङ्गं मोच्यो येनोपहन्यात्'[4] इति ॥

---

[1]गौ. ध. २२-२९, ३०. [2]मनुस्मृ. ११-१७७.
[3]मनुस्मृ. ८-२७९. [4]गौ. ध. १२-१.

**वाचि पथि शय्यायामासन इति समीभवतो दण्डताडनम् ॥ १५ ॥**

यस्तु शूद्रो वागादिष्वार्यैः समो भवति, न तु न्यग्भूतः, तस्य दण्डेन ताडनं कर्तव्यं, स दण्डेन ताडयितव्यः । अयमस्य दण्डः ॥

**पुरुषवधे स्तेये भूम्यादान इति स्वान्यादाय वध्यः ॥ १६ ॥**

भूम्यादानं परक्षेत्रस्य बलात्स्वीकारः । पुरुषवधादिषु निमित्तेषु शूद्रः सर्वस्वहरणं कृत्वा पश्चाद्वध्यः मारयितव्यः ॥

**चक्षुनिरोधस्त्वेतेषु ब्राह्मणस्य ॥ १७ ॥**

ब्राह्मणस्य त्वेतेषु निमित्तेषु चक्षुर्निरोधः कर्तव्यः, पट्टबन्धादिना चक्षुषी निरोद्धव्ये यथा यावज्जीवं न पश्यति, न तूत्पाटयितव्ये । 'न शारीरो ब्राह्मणदण्डः'[1] 'अक्षतो ब्राह्मणो व्रजेत्' इति स्मरणात् । 'चक्षुनिरोधः' इति रेफलोपश्छान्दसः ॥

**नियमातिक्रमणमन्यं वा रहसि बन्धयेत् ॥ १८**

यो वर्णाश्रमप्रयुक्तान्नियमानतिक्रामति तं नियमातिक्रमणम्, अन्यं वा प्रतिषिद्धानां कर्तारं रहसि बन्धयेत् निगळितं निरुन्ध्यात् ॥

**आ समापत्तेः ॥ १९ ॥**

यावदसौ नियमान् प्रतिपत्स्येत् प्रतिषिद्धेभ्यो निवर्तिष्य इति ब्रूयात् ॥

---

[1] गौ. ध. १२-४६.

**असमापत्तौ नाश्यः ॥ २० ॥**

यद्यसौ दीर्घकालं निरुद्धोपि न समापद्येत ततो नाश्यो निर्वास्यः ॥

**आचार्य ऋत्विक्स्नातको राजेति त्राणं स्युरन्यत्र वध्यात् ॥ २१ ॥**

यदि दण्डप्रवृत्तं राजानं आचार्यो ब्रूयात् 'अहमेनमतः परं वारयिष्यामि मुच्यतामयम्' इति ततोऽङ्गदण्डे प्राप्ते अर्थदण्डं, अर्थदण्डे ताडनं, ताडने धिग्दण्डमिति कृत्वा तद्वशे विसृजेत्। एवमृत्विजि। ऋत्विगाचार्यौ राज्ञः स्वभूतौ न दण्ड्यस्य। स्नातको विद्याव्रताभ्याम्। राजा अनन्तरादिः। सर्व एते राज्ञस्सम्मान्याः। अतस्ते दण्ड्यस्य त्राणं स्युः, उक्तेन प्रकारेण रक्षका भवेयुः, नान्यः कश्चित्; तेऽप्यन्यत्र वध्यात्। यस्य वधानुगुणोपराधः न तस्याचार्यादयोपि त्राणम्, हन्तव्य एव स इति ॥

इति सप्तविंशः खण्डः.

इत्यापस्तम्बधर्मसूत्रवृत्तौ उज्ज्वलायां द्वितीये प्रश्ने दशमः पटलः.

---

**क्षेत्रं परिगृह्योत्थानाभावात्फलाभावे यस्समृद्धः स भावि तदपहार्यः ॥ १ ॥**

वैश्यो वैश्यवृत्तिर्वा, परस्य क्षेत्रं कृष्यर्थं परिगृह्य यद्युत्थानं यत्नं कृषिविषयं न कुर्यात्, तदभावाच्च फलं न स्यात्, तत एव

तस्मिन्निमित्ते कर्षकः समृद्धश्चेत् तस्मिन्भागे यद्भावि फलं तदपहार्यः अपहारयितव्यः, राज्ञा क्षेत्रस्वामिने दाप्यः ॥

**अवशिनः कीनाशस्य कर्मन्यासे दण्डताडनम्॥**

कीनाशः कर्षकः । तस्यावशिनः अस्वतन्त्रस्य निर्धनस्य दासस्य कर्मन्यासे स चेत्कृषिकर्म न्यसेत् विच्छिन्दयात्, तस्य दण्डेन ताडनं कर्तव्यम्, स दण्डेन ताडयितव्यः । अर्थाभावान्नार्थदण्डः । अपर आह—अवशी अवश्यः अविधेयः । यदि क्षेत्रं परिगृह्यावशिनः कीनाशस्य कृषिकर्म न्यसेत् न स्वयं कुर्यात् तदा स परिग्राहको दण्डेन ताड्य इति । यदि वा अवशिन इति बहुव्रीहिः—यस्य कीनाशस्य वशी स्वतन्त्रः क्षेत्रवान्नास्ति स यदि पूर्वकृष्टस्य क्षेत्रस्य कृषिकर्म न्यसेत् तस्य ताडनं दण्ड इति राजपुरुषस्योपदेशः ॥

**तथा पशुपस्य ॥ ३ ॥**

पशुपो गोपालः तस्यापि कर्मन्यासे पालनाकरणे दण्डेन ताडनं दण्डः ॥

**अवरोधनं चास्य पशूनाम् ॥ ४ ॥**

ये चास्य पशवो रक्षणाय समर्पिताः तेषां चावरोधनं अपहरणं कर्तव्यम्, अन्यस्य गोपस्य समर्पणीया इति ॥

**हित्वा* व्रजमादिनः कर्शयेत्पशून्नातिपादयेत्॥**

ये पशवो व्रजे गोष्ठे निरुद्धाः तं व्रजं हित्वा आदिनः सस्यादेर्भक्षयितारो भवन्ति तान् कर्शयेत् बन्धादिना कृशान् कुर्यात् ।

---

*भित्वा इत्यपि पाठः.

कः? यत् भक्षितं तद्वान्, राजपुरुषो वा। नातिपादयेत् नातिरोधं कुर्यात् न ताडयेद्वेति ॥

**अवरुध्य पशून्मारणे नाशने वा स्वामिभ्योव-सृजेत् ॥ ६ ॥**

यदि पुरुषः पशूनवरुध्य पालयितुं गृहीत्वा भयस्थानेषु विसृज्योपेक्षया मारयेत् नाशयेद्वा, नाशनं चोरादिभिरपहरणं, स स्वामिभ्यः पशूनवसृजेत् प्रत्यर्पयेत्, पश्वभावे मूल्यम् ॥

**प्रमादादरण्ये पशूनुत्सृष्टान्दृष्ट्वा ग्राममानीय स्वामिभ्योवसृजेत् ॥ ७ ॥**

यदि स्वामिनः प्रमादादरण्ये पशून् सृजेयुः विना पालनेन ततस्तान् दृष्ट्वा ग्राममानीय स्वामिभ्योर्पयेत्। कः? यस्तत्र राज्ञा रक्षकत्वेन नियुक्तः ॥

**पुनः प्रमादे सकृदवरुध्य ॥ ८ ॥**

पुनः प्रमादादुत्सृष्टेषु सकृदवरुध्य स्वामिभ्योऽवसृजेत् ॥

**तत ऊर्ध्वं न सूर्क्षेत् ॥ ९ ॥**

ततो द्वितीयात्प्रयोगादूर्ध्वं 'ग्राममानीय' इत्यादि यदुक्तं तन्न सूर्क्षेत् नाद्रियेत, तस्मिन्विषये उपेक्षेत ॥

**परपरिग्रहमविद्वानाददान एधोदके मूले पुष्पे फले गन्धे ग्रासे शाक इति वाचा बाध्यः॥**

एधाश्चोदकं च एधोदकम्। ग्रासः गवाद्यर्थो यवसादि। सर्वत्र विषयसप्तमी। यः परपरिग्रह इत्यविद्वान् आददानः

अजानन् एधोदकादिकमादत्ते गृह्णाति । स तस्मिन्विषये तत्र नियुक्तेन राजपुरुषेण निष्ठुरया वाचा बाध्यो निवार्यः ॥

**विदुषो वाससः परिमोषणम्* ॥ ११ ॥**

यस्तु विद्वानेवादत्ते तस्य वाससो मोक्षणं अपहारः कर्तव्यः॥

**अदण्ड्यः कामकृते तथा प्राणसꣳशये भोजनमाददानः ॥ १२ ॥**

तथाशब्दस्य भोजनमित्यनेन सम्बन्धः । प्राणसंशयदशायां एधोदकादेरादाने कामकृतेप्यदण्ड्यः । तथा भोजनमप्याददानः प्राणसंशये न दण्ड्य इति ॥

**प्राप्तनिमित्ते दण्डाकर्मणि राजानमेनस्स्पृशति ॥ १३ ॥**

प्राप्तं दण्डनिमित्तं यस्य तस्मिन्पुरुषे दण्डाकर्मणि दण्डस्याक्रियायां यदि दयया अर्थलोभेन वा प्राप्तं दण्डं न कुर्यात् तदा तदेनो राजानं स्पृशति ॥

इत्यष्टाविंशः खण्डः.

---

ननु शास्त्रफलं प्रयोक्तरि; तत्कथमन्यकृतमेनः अन्यं स्पृशति ? बहुविधत्वात्कर्तृभावस्येत्याह–

**प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफलेषु कर्मसु भागिनः ॥ १ ॥**

---

*क—परीमोक्षणम्.

धर्ममधर्मं वा कुर्वाणं यः प्रयुङ्क्ते इत्थं कुर्विति स प्रयोजयिता। स चानेकप्रकारः, आज्ञापकोभ्यर्थयिता अनुग्राहक इति। भृत्यादेर्निकृष्टस्य प्रवर्तना आज्ञा। गुर्वादेराराध्यस्य प्रवर्तना अभ्यर्थना। अनुग्रहो द्विविधः, उपदेशः तत्समाचरणं चेति। तत्र य इत्थमुपदिशति 'त्वं शत्रुमिमं व्यापादय, धर्मार्जने अयं तेऽभ्युपायः' इति स उपदेष्टा। यः पुनः केनचिज्जिघांसितं पलायमानं निरुणद्धि, निरुद्धश्च हन्यते, तत्र निरोद्धा अनुग्राहकः। मन्ता अनुमन्ता; यस्यानुमतिमन्तरेण अर्थो न निर्वर्तते स राजादिको धर्माधर्मयोरनुमन्ता। कर्ता साक्षात् क्रियाया निर्वर्तकः। एते त्रयोपि स्वर्गफलेषु नरकफलेषु च कर्मसु धर्मेष्वधर्मेषु च भागिनः फलस्यांशभागिनः अंशभाजः॥

सर्वेषां च यथा कथंचित्कर्तृत्वं यद्यप्येवम्,

**यो भूय आरभते तस्मिन्फलविशेषः ॥ २ ॥**

तेषु प्रयोजकादिषु यो भूय आरभते यस्य व्यापारोर्थनिर्वृत्ताधिकमुपयुज्यते तस्मिन् फलविशेषो भवति॥

**कुटुम्बिनौ धनस्येशाते ॥ ३ ॥**

कुटुम्बिनौ दंपती धनस्य परिग्रहे विनियोगे च ईशाते। यद्यप्येवं, तथापि भर्तुरनुज्ञया विना स्त्री विनियोक्तुं न प्रभवति, भर्ता तु प्रभवति। तदेतेन वेदितव्यम्, 'न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति'[1] इति॥

---

[1] आप. ध. २-१४-२०.

तयोरनुमतेऽन्येऽपि तद्धितेषु वर्तेरन् ॥ ४ ॥

तयोः दम्पत्योः अनुमते अनुमतौ सत्यां अन्येपि पुत्रादयः तद्धितेषु तयोः ऐहिकेषु आमुष्मिकेषु च वर्तेरन् द्रव्यविनियोगेनापि ॥

विवादे विद्याभिजनसंपन्ना वृद्धा मेधाविनो धर्मेष्वविनिपातिनः ॥ ५ ॥

अर्थिप्रत्यर्थिनोः विप्रतिषिद्धो वादो विवादः । तत्र विद्यादिगुणसंयुक्ता निर्णेतारस्स्युः इति वाक्यशेषः । विद्या अध्ययनज्ञानसंपत् । अभिजनः कुलशुद्धिः । वृद्धाः परिणतवयसः । मेधाविनः ऊहापोहकुशलाः । धर्मेषु वर्णाश्रमप्रयुक्तेषु अविनिपातिनः, विनिपातः प्रमादः तद्रहिताः ॥

संदेहे लिङ्गतो दैवेनेति विचित्य ॥ ६ ॥

ते च निर्णयन्तः संदेहस्थलेषु लिङ्गतः अनुमानेन दैवेन तप्तमाषादिना । इतिशब्दः प्रकारे, यच्चान्यदेवं युक्तं वचनव्याघातादि, तेन च विचित्य अर्थस्थितिमन्विष्य निर्णेतारस्स्युः इत्यध्याहृतेन वाक्यपरिसमाप्तिः ॥

अथ साक्ष्यविधिः—

पुण्याहे प्रातरग्नाविद्धेऽपामन्ते राजवत्युभयतः समाख्याप्य सर्वानुमते मुख्यस्सत्यं प्रश्नं ब्रूयात् ॥ ७ ॥

पुण्याहो देवनक्षत्रं, प्रातः न मध्याह्नादिषु, अग्नाविद्धेऽग्निमिद्ध्वा तत्समीपे अपामन्ते उदकमुपनिधाय राजवति राज्ञाऽधिष्ठिते सदसि उभयतः उभयोरर्थिप्रत्यर्थिनोः किमहं युवयोः प्रमाणभूतः साक्षी ? इति आत्मानं ख्यापयित्वा । यदि वा—उभयतः उभयोरपि पक्षयोः सत्यवचने चासत्यवचने च साक्षिणो यद्भावि फलं तत्—

सत्यं ब्रूह्यनृतं त्यक्त्वा सत्येन स्वर्गमेष्यसि ।
उक्त्वाऽनृतं महाघोरं नरकं प्रतिपत्स्यसे[1] ॥

इत्यादिना प्रकारेण समाख्याप्य, प्राड्विवाकादिभिः पृष्ट इति शेषः सर्वानुमते अर्थिप्रत्यर्थिनोः सभ्यानां चानुमतौ सत्यां मुख्यः साक्षिगुणैरुपेतः दोषैश्च वर्जितः साक्षी प्रश्नं पृष्टमर्थं सत्यं यथा आत्मना ज्ञातं तथा ब्रूयात् ॥

## अनृते राजा दण्डं प्रणयेत् ॥ ८ ॥

साक्षिणा अनृतमुक्तमिति प्रतिपन्नो राजा दण्डं प्रणयेत् तत्र मनुः—

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः ।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः[1] ॥ इति ।

न च संदेहे दण्डं कुर्यात् ॥

न केवलमसत्यवचने राजदण्डः, किं तर्हि ?—

---

[1]मनुः. ८-१०८, ३१८.

नरकश्चात्राधिकस्साम्पराये ॥ ९ ॥

साम्परायः परलोकः तत्र नरकश्च भवति । न तु–

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलास्स्वर्गमायान्ति सन्तस्सुकृतिनो यथा ॥

इत्यस्यायं विषय इति ॥

सत्ये स्वर्गस्सर्वभूतप्रशंसा च ॥ १० ॥

सत्ये उक्ते स्वर्गो भवति, सर्वाणि च भूतान्येनं प्रशंसन्ति, अपि देवाः ॥

सा निष्ठा या विद्या स्त्रीषु शूद्रेषु च ॥ ११ ॥

स्त्रीषु शूद्रेषु च या विद्या सा निष्ठा विद्यासमाप्तिः । तस्यामधिगतायां विद्याकर्म परितिष्ठतीति ॥

आथर्वणस्य वेदस्य शेष इत्युपदिशन्ति ॥ १२ ॥

अथर्वणा प्रोक्तमधीयते आथर्वणिकाः । 'वसन्तादिभ्यष्ठक्' । तेषामाम्नायः–'आथर्वणिकस्येकलोपश्च'–आथर्वणः । तस्य वेदस्य शेषोयं 'या विद्या स्त्रीषु शूद्रेषु च' इत्युपदिशन्ति धर्मज्ञा इति ॥

कृच्छ्रा धर्मसमाप्तिस्समाम्नानेन । लक्षणकर्मणात्तु समाप्यते ॥ १३ ॥

समाम्नानं प्रतिपदपाठः, तेन समाम्नानेन धर्मसमाप्तिः कृच्छ्रा न शक्या कर्तुम्, किन्तु लक्षणकर्मणा तु समाप्यते । येन

सामान्येन भिन्नानामधिगमो भवति तल्लक्षणं, तस्य कर्मणा करणेन समाप्यते । कर्मणान्त्विति द्वितकारपाठोऽनार्षः* । 'आत्' इति वा निपातस्य प्रश्लेषः, स च 'सद्यः' इत्यस्यार्थे द्रष्टव्यः ॥

तत्र लक्षणं वक्ष्यते—

**तत्र लक्षणम् । सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत । एवमुभौ लोकावभिजयति ॥ १४ ॥**

सर्वजन इति गतम्[1] ॥

**स्त्रीभ्यस्सर्ववर्णेभ्यश्च धर्मशेषान्प्रतीयादित्येक इत्येके ॥ १५ ॥**

इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने एकादशः पटलस्समाप्तः.

इति द्वितीयप्रश्नस्समाप्तः.

समाप्तं चेदमापस्तम्बीयं धर्मसूत्रम्.

उक्तव्यतिरिक्ताः ये धर्माः ते धर्मशेषाः तान् स्त्र्यादीनामपि सकाशात् प्रतीयादित्येके मन्यन्ते । ते च प्रतिजनपदं प्रतिकुलं च भिन्नाः तथैव प्रत्येतव्याः । तत्र द्रामिडाः† कन्या मेषस्थे सवि-

---

*छान्दसः अपपाठः, इति च पाठः. †क—क्वचिद्विषये.

[1]आप. ध. १–२०–८, ९.

तरि आदित्यपूजामाचरन्ति भूमौ मण्डलमालिख्य इत्यादीन्युदाहरणानि। द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥

इत्येकोनविंशः खण्डः.

इति श्रीहरदत्तमिश्रविरचितायां आपस्तम्बीयधर्मसूत्रवृत्तौ
उज्ज्वलायां द्वितीये प्रश्ने एकादशः पटलः.

द्वितीयः प्रश्नश्च समाप्तः.

समाप्तं चेदं आपस्तम्बीयधर्मसूत्रव्याख्यानं
उज्ज्वलाख्यानम्.

ओम्.



| पुटे | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १५२ | २३ | वश्यया | वेश्ययेत्र |
| १८३ | २४ | ८—३४१०. | ८—३४१ |
| १९५ | ९ | स्त्रास्यन् | स्त्रास्यन् |
| २८१ | २ | यास्य | हास्य |
| ३२३ | २१ | [1]ममां | [1]मीमां |
| ३२५ | ६ | दिताना | दितानां |
| ३४१ | ८ | भवति । | भवति |

| पुटे | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १५२ | २३ | वश्यया | वेश्ययेव |
| १८३ | २४ | ८—३४१०. | ८—३४१ |
| १९५ | ९ | स्त्रास्यन् | स्नास्यन् |
| २८१ | २ | यास्य | हास्य |
| ३२३ | २१ | [1]ममां | [1]मीमां |
| ३२५ | ६ | दिताना | दितानां |
| ३४१ | ८ | भवति। | भवति |

# INDEX OF WORDS.

# आपस्तम्बधर्मसूत्रस्थपदसूची.

---

## आ.

## उ

## ऐ



## ओ

## औ



## क

## ख



## ग

द

प

फ

### ब

## भ

## म

## ल

### ष



### स